[ काव्येतिहास-संग्रहान्तर्गतम् ]

७.

Purushottama Pandit

अथ श्रीपुरुषोत्तमपण्डितविरचितस्य

# श्रीशिवकाव्यस्य

Shri Śivakāvya

## पूर्वार्द्धम् ।

इदं

बी. ए. उपपदधारिणा साने इत्युपनामधेयेन

नारायणसूनुना काशिनाथेन

नैकपुस्तकसमालोचनपूर्वकं संशोध्य सटीकं प्राकाश्यमानायि ।

शकाब्दाः १८०६. 1884

# शुद्धिपत्रम् ।

| पृष्ठं | पंक्तिः | अशुद्धं | शुद्धम्. |
|---|---|---|---|
| १० | २ | पवमवेगजि-ज्जिवाद | पवनवेग-जिज्जषा |
| १० | २४ | दुःप्रापं | दुष्प्रापं |
| १३ | १३ | पूर्वोक्तप्रकरेण | पूर्वोक्तप्रकारेण |
| १३ | २४ | पितृणां | पितृणां |
| १६ | १४ | सन्नद्धान | सन्नद्धान् |
| १७ | १९ | व्याख्याथां | व्याख्यायां |
| २० | १३ | निश्चियेन | निश्चयेन |
| २० | २५ | प्रतिक्रया | प्रतिक्रिया |
| २१ | ५ | इत्युत्वा | इत्युक्त्वा |
| २१ | २६ | बलेनः | बलेन |
| २१ | २७ | गव्यते | गण्यते |
| २२ | ७ | द्विजवर्य-वाहून | द्विजवर्य-वाहून् |
| २२ | ८ | शिवप्रदेशं | शिवप्रदेशं |
| २३ | १० | भविता विरता | भविताऽ विरता |
| २३ | २७ | तकाकी | एकाकी |
| २७ | १० | तन्त् | तस्य |
| २९ | २० | ५५ | ५७ |
| २९ | २४ | ५६ | ५५ |
| २९ | ३० | ५७ | ५६ |
| ३० | ४ | शक्त्या | शक्त्या |
| ३० | १६ | पातिव्रत्यस्यन | पातिव्रत्यस्य |
| ३० | १८ | प्रतिधाय | प्रविधाय |
| ३० | २८ | श्रवणक्षेण | श्रवणक्षणे |
| ३० | २९ | यषाम् | येषाम् |
| ३० | ३० | शक्त्या | शक्त्या |
| ३६ | ९ | सपट्टिशः | सपट्टिशः |
| ४३ | ३ | वरवरिनाथ | वरवीरनाथ |
| ४३ | ६ | शिवाया | शिवायाः |
| ४४ | २९ | स्वयस्कृतायां | स्वयंकृतायां |
| ४७ | १७ | जनानंदकारिन | जनानंदका-रिन् |
| ५० | १९ | मौंजीयुक्त | मौंजीयुक्तः |
| ५३ | १० | पुनश्चाति | पुनश्चेति |
| ५९ | २५ | समहैः | समूहैः |
| ६० | ७ | आमंत्रय | आमंत्रयद् |
| ६३ | १५ | निश्चयेनः | निश्चयेन |
| ८३ | ९ | मौंजोबंधन | मौंजीबंधनं |
| ८७ | १५ | विधास्ये | विधास्ये |
| ८७ | २१ | वशः | वश्यः |
| ८८ | ६ | सितेवतत् | सितेव तत् |
| ८८ | १४ | प्रणयश्च | मणयश्च |
| ९६ | १४ | कल्येत्यर्थः | कल्वेत्यर्थः |
| ९७ | ७ | कन्या त्र° | कन्यात्र° |
| ९७ | ८ | किल क° | खिल क° |
| १०९ | २ | निवसत | न्यवसत् |
| ११३ | १ | विद्वद्वार्या गे° | विद्वद्वार्यागे° |
| ११३ | ४ | मत्स्येप्रो° | मत्स्येऽप्री° |
| ११७ | २ | न्यपातयतं | न्यपातयत्तं |
| ११७ | ४ | समां | समां |
| १२२ | ३ | दुर्लभेतस्य | दुर्लभैतस्य |
| १२४ | १५ | शुद्धोदांतान् | शुद्धोदान्तान् |
| ,, | ,, | निजभर्या | निजभर्त्रा |
| १२४ | २३ | सप्तधाभवेनं | सप्तधाभवनं |
| १२५ | १३ | वैकुठं | वैकुण्ठं |
| १२५ | २५ | अपत्नसाध्यः | अयत्नसाध्यः |
| १२७ | १९ | °विहिनो | °विहीनो |
| १२९ | २८ | स्यासाम् | स्थासाम् |
| १३० | ७ | धनन | धनंन |
| १३३ | २३ | धन | धनं |
| १४१ | ४ | सन्शत्रूणां | सच्छत्रूणां |
| १४३ | ४ | दुर्विमीतां | दुर्विनीतां |
| १४४ | १३ | भागिरथी | भागीरथी |
| १४५ | ३ | तत्सुनहरि° | तत्सुनुर्हरि° |
| १४५ | १८ | भुजते | भुंजते |
| १४८ | २६ | इदवस्तु | इदवस्तु |
| १४८ | २९ | मूल्यात | मूल्यात् |
| १५० | ९ | °रुढः | °रूढः |
| १५२ | १४ | चकार | चकार ॥२७॥ |
| ,, | १६ | समुहः | समूहः |
| ,, | २६ | संस्तपयनं | संस्तपनं |
| १५५ | ४ | सलकं | सकलं |

समाप्तम् ।

श्रीगणेशायनमः

# अथ श्रीशिवकाव्यम्

वंदे तं भगवंतमंबुजपदं पीतांबरं वारिमन्-
मेघाभं तुलसीविनिर्मितमहामालान्वितं कौस्तुभं
कंठे शंखमुखानि पाणिषु सरोजाक्षं दधानं हरिं
कर्णालंकृतिभासुरं सुमुकुटं पाथोधिकन्यापतिं ॥ १ ॥

श्रीगणेशायनमः ॥ श्रीसरस्वत्यैनमः ॥ श्रीगुरुभ्योनमः ॥ श्रीकृष्णायनमः ॥

तमोमत्तमातङ्गकुम्भप्रभेद–प्रगल्भैकसिंहं प्रशस्यं ग्रहेशम् ॥
प्रजेशाद्यमर्त्यप्रगीतप्रतापं नमामि प्रभापूरितानेकलोकम् ॥ १ ॥

अथतत्रभवान् पुरुषोत्तमकविःश्रीवेदव्यासेन स्वप्ने पुनःपुनःप्रेरितःश्रीशिवकाव्यं चिकीर्षुःचिकीर्षितस्य निर्विघ्नसमाप्तिनिर्विघ्नप्रचारप्रतिबन्धकदुरितपरिहारकामो विष्ण्वादिपञ्चदेवतानमस्काराशीःप्रार्थनारूपं मङ्गलमाचरन् शिष्यशिक्षायै पञ्चपद्यैर्निबध्नाति । ननुकाव्यालापांश्च वर्जयेदिति निषेधशास्त्रस्यासत्काव्यविषयत्वादस्मिन् काव्ये आधुनिकानां राज्ञां वर्णनादिदमसत्काव्यमत्र कथं प्रवृत्तिरितिचेदुच्यते । श्रीवेदव्यासेनैतेषां देवांशत्वप्रतिपादनादसत्काव्यं न । देवांशत्वप्रतिपादनप्रकारस्तु मूले एव चरमचमत्कारे स्फुटीकृतः । किंचात्र काव्ये शिवनृपो मुख्यः स हि मनुष्यो भवितुं नार्हति येनार्जुनवदलौकिकानि कृत्यानि विहितानि । भगवद्वाक्यं चात्र प्रमाणम् । यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा । तत्तदेवावगच्छ त्वं ममतेजोंऽशसंभवमिति । किञ्च प्रजाभक्षकैराजभिराक्रान्ते महीतले वर्तमानानामन्नाच्छादनरहितानां ब्राह्मणादिसर्वजातीनां रक्षणार्थमेतद्राजरूपेण भगवानेवावतीर्णः । अत्र प्रमाणं भगवद्वचनम् । परित्राणाय साधूनां विनाशाय च दुष्कृताम् धर्मसंस्थापनार्थाय संभवामि युगे युगे । यदा यदा हि धर्मस्य ग्लानिर्भवति भारत । अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहमिति । किंच भगवती देवी यस्य शरीरमाविश्य दुर्वृत्तान्म्लेच्छानघातयत् तस्य मनुजत्वकल्पनं भ्रमएव । तदनन्तरं जाता राजानोऽपि उत्तरोत्तराधिका अतस्तद्वर्णने पुण्यमिति काव्यं निबबन्ध ।

वन्देतमिति । तं प्रसिद्धं भगवन्तं भगमस्यास्तीति भगवान् तं षड्गुणैश्वर्यसंपन्नं । ऐश्वर्यस्यसमग्रस्य धर्मस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णांभगमितीरितमिति ।

शुंडासंभृतदुग्धपानकरणोद्युक्तस्वबालोद्भम-
च्छुंडाचुम्बनकौतुकोद्गतपयःपूरावृतैकानने
तिर्यग्दृष्टिशरप्रपातनपरेष्वन्येषु चाधोमुखो
लज्जाव्याकुलमानसोऽवतु हरो देवो भवानीपतिः ॥ २ ॥

तदस्यास्त्यस्मिन्निति मतुप् । मादुपधायाश्चेति मतोर्मस्यवः । अंबुजपदं अंबुजे इव पदे यस्य तं सुकुमारपदमित्यर्थः । यद्वा । अंबुजं रेखाकारं कमलं पदे चरणे यस्य तं । सप्तमीविशेषणेबहुव्रीहावित्यत्र सप्तम्यन्तस्य पूर्वनिपातविधानात् ज्ञापकात् व्यधिकरणबहुव्रीहिः । अत्रसप्तम्यन्तस्य पूर्वनिपाताभावस्तुगड्वादित्वात् । रेखात्मककमलपदत्वं श्रीमद्भगवता कपिलेन मातरं प्रत्युक्तं । संचिन्तयेद्भगवतश्चरणारविन्दं वज्रांकुशध्वजसरोरुहलाञ्छनाढ्यमिति । यद्वा । अंबुजं कमलं पदं चिन्हंयस्य तं । यद्वा । अंबुजःशंखःपदं यस्य तं । यद्वा । अंबुजस्य कमलस्य शंखस्य च पदं स्थानं । यद्वा । अंबुजानां मुक्ताफलानां पदं स्थानं मुक्ताहारयुक्तमित्यर्थः । यद्वा । अंबुजस्य लक्ष्मीसंज्ञकस्य कलत्रस्य पदं स्थानं उरःस्थलस्थितलक्ष्मीकामित्यर्थः । पदं व्यवसितत्राणस्थानलक्ष्मांघ्रिवस्तुष्वितिअमरः। पीतं अंबरं वस्त्रं यस्य तं पीतांबरं। वारिमान्सजलो यो मेघस्तस्य आभेव-आभा यस्य तं वारिमन्मेघाभं । तुलशीभिर्विनिर्मिताया महती माला तया अन्वितं युक्तं-तुलशीविनिर्मितमहामालान्वितं । आन्महतइत्यादिना महत आत्वं । कौस्तुभं मणिं कण्ठे धत्तेऽसौ दधानःतं दधानं । डुधाञ्धारणपोषणयोरस्माल्लटिशानच् । पाणिषु करेषु बहुवचनाच्चतुर्षु शंखो मुखं मुख्यं येषां तानि आयुधानीतिशेषः । वामाग्रकरमारभ्य दक्षिणाग्रकरपर्यन्तं शंखचक्रगदापद्मानि यथाक्रमं दधानं धारयन्तम्। सरोजेइव-अक्षिणी यस्य तं सरोजाक्षं । बहुव्रीहौसक्थ्यक्ष्णोरित्यादिनासमासान्तःषच् । कर्णयोरलंकृती अलंकारौ ताभ्यां भासुरं शोभनम् । शोभनो मुकुटो यस्य तं सुमुकुटम्। पायोधिकन्या लक्ष्मीस्तस्याःपतिं पायोधिकन्यापतिं लक्ष्मीसहितमित्यर्थः । हरिं श्रीविष्णुं अहमितिशेषःवन्देनौमि स्तौमि वा वदिअभिवादनस्तुत्योरस्माल्लटिनुमिउत्तमैकवचनम् । अस्मिन्पद्ये पाठक्रमादर्थक्रमोबलीयानिति न्यायमननुसृत्यैव पादादिशिरःप्रभृतिध्यानमनेन प्रकारेण कर्तव्यमितिसूचनार्थं पदानि क्रमेणैव निबद्धानि विष्ण्वादिदेवानामनेनैवप्रकारेणध्यानं कर्तव्यमिति श्रीमद्भागवतादिषूक्तं । सूर्याश्वैर्मसजस्तताःसगुरवःशार्दूलविक्रीडितमिति लक्षणादिदं शार्दूलविक्रीडितं वृत्तम् ॥ १ ॥

शुण्डेति ॥ शुण्डया संभृतं धृतं यद्दुग्धं तस्य पानकरणं पानक्रिया तत्र उद्युक्तःयःस्वःस्वकीयःबालःगजवक्त्रःतस्य उत् उर्ध्वं भ्रमन्ती या शुण्डा तस्याश्चुंबनं तत्र यत्कौतुकं तेन उद्गतो यः पयःपूरस्तेन आवृतं पूर्णं एकं आननं तस्मिन् । अधिकरणे सप्तमी। अन्येषु मुखेषु तिर्यग्दृष्टयएव शरप्रपातास्तेषां प्रकर्षेण पातनं तस्मिन् । परेषु-

अतिप्रीतितः स्वां सतीमर्धदेहां विधायावतस्थे यदा नीलकंठः
तदा तत्र रुष्टोऽपि भक्तेषु तुष्टो गणेशोऽवतात् स्तन्यपानातिसक्तः ॥३॥
तरणिस्तरणिर्भवाम्बुधेः सरणिं यो दिशतीह कर्मणाम्
उदयेन दयाघनोऽघनुन्नुतपादः सुरभूसुरैः स माम् ॥ ४ ॥

आसक्तेषु सत्सु। लज्जया व्याकुलं मानसं यस्य स लज्जाव्याकुलमानसः अतएव अधोमुखं अर्धदेकमेव यस्य तथोक्तः । भवस्य पत्नी भवानी । इन्द्रवरुणेत्यादिनाङीषिआनुगागमः । तस्याःपतिःभवानीपतिः देवः द्योतमानो हरःनःशतिशेषः अवतु रक्षतु । आशिषिलोट् । अनेन वर्णनेन शिवस्याङ्के भवानी तस्याअङ्के गजाननस्तस्मिन् दुग्धपानं-कुर्वति सति शिवश्चुचुम्ब इतिज्ञेयम्। पत्नीस्तन्यपाने दोषस्मरणादेकेन वक्त्रेणअज्ञानतःकृतं स्तन्यपानं तद्दोषोऽस्माकं संसर्गेणामपि भविष्यतीति रोषाविष्टानीतराणि मुखानि क्रोधदृष्ट्या तन्मुखं ददृशुरिति भावः । वृत्तंपूर्ववत् ॥ २ ॥

अतिप्रीतितइति। नीलःकृष्णःकण्ठो यस्य स नीलकण्ठो हरः यदा यस्मिन् काले इति-पदायच्छब्दादाप्रत्ययः । अतिप्रीतितःअत्यन्तप्रीत्या सार्वविभक्तिकस्तसिल् यद्वा । अति-प्रीतेरितिअतिप्रीतितः पञ्चम्यास्तसिल् । स्वां स्वकीयां । स्वोज्ञातावात्मनिस्वंत्रि-ष्वात्मीयेस्वोऽस्त्रियांधनइतिविश्वः ।सतीं स्त्रियं । अर्धो देहो यस्याः सा तामर्धदेहां वियोग भयादितिभावः। यद्वा । अर्धे देहार्धे देहोयस्यास्तां । विधाय कृत्वा अवतस्थे स्थितवान्। अर्धदेहे निधायेति सुगमःपाठः । समवप्रविभ्यस्थइत्यात्मनेपदम् । तदा तस्मिन्काले तस्मिन्निति तत्र शिवे सप्तम्यास्त्रल् । रुष्टोऽपि भक्तेषु तुष्टः। स्तने भवं स्तन्यं । शरीरावयवाद्यत् । तस्य पानं प्राशनं तस्मिन् अतिशयेन सक्तः गणेशः नोऽस्मान् अवतात् रक्षतु । तुह्योस्तातङित्यादिना तातङ् । अतिप्रेमप्रसरसंप्लुते सांबे पत्नी-वियोगभयात् योगबलेनदेहद्वयस्य एकमेव देहं विधाय स्थिते सति बालो गजाननः स्वमातुरेकस्तनावशोषणोदरपूर्त्यभावाज्जाठराग्निना पीडितोऽपि भक्तेषु परमकृपया तुष्टो वोऽवतु इत्यर्थः । अत्रस्तन्यपानातिसक्त इति साभिप्रायविशेषणात्परिकराल-ङ्कारः । तदुक्तं कुवलयानन्दे । अलङ्कारः परिकरः साभिप्राये विशेषणे । सुधांशु कलितोत्तंसस्तापं हरतु वः शिवः । भुजङ्गप्रयातं वृत्तं । भुजंगप्रयातं भवेद्यैश्चतु-र्भिरिति लक्षणात् ॥ ३ ॥

तरणिरिति । भवःसंसार एव अंबुधिःसमुद्रः तस्य तरणि र्नौका । स्त्रियां नौस्त-रणिस्तरिरित्यमरः । मुक्तिप्रदइत्यर्थः । यतो दयाया घनो मेघः । अतः सुरा देवा भूसुरा विप्रास्तैर्नुतौ स्तुतौ पादौ यस्य तथोक्तः । सापेक्षकत्वेऽपि गमकत्वात्समासः ।

१. ' अर्धदेहे । निधाय ' ' गणेशोऽवतु ' इति पाठभेदौ.

२. ' त्रिशिरोःसमोऽवतु ' पाठभेदः

गिरिजां जलजायतेक्षणां क्षणदासंचरचारवारणाम्
करुणापरिपूर्णमानसां सततं चिन्तय चिन्तितां बुधैः ॥ ५ ॥

काव्यानि यद्यपि बुधेष्विह सन्ति सन्ति
श्रीकालिदासमुखसूरिकृतानि तानि
तत्तद्रसं रसितुमत्र समेतु मे तु
प्राज्ञो रसज्ञ इति काव्यमकारि हारि ॥ ६ ॥

पारंगतो मत्कृतिशैवलिन्याः श्रीहर्षकृत्यम्बुनिधेर्जवेन
दर्भाग्रबुद्धिः कुशलः प्रयायादन्तं विनाप्यध्ययनप्लवेन ॥ ७ ॥

अघं नुदतीति अघनुत् । दुःखैनोव्यसनेष्वंघमित्यमरः । य उदयेन कर्मणां सरणिं दिशति दर्शयति स तरणिःसूर्यः । द्युमणिस्तरणिर्मित्र इत्यमरः । मां अवतु इतिशेषः । रूपकानुप्रासयोः संसृष्टिः । वैतालीयं वृत्तम् ॥ ४ ॥

गिरिजामिति । हे मन इतिशेषः । जले जाते जलजे सरोजे । सप्तम्यांजनेर्डः । तेइव आयते विस्तृते ईक्षणे नेत्रे यस्याः सा तां तथोक्तां । क्षणदा रात्रिः । त्रियामा क्षणदा क्षपेत्यमरः । तस्यां सञ्चरन्ति ते क्षणदासञ्चरा राक्षसास्तेषां चारो विहारस्तं वारयतीति तां । वृञोणिजंतात्कर्तरिल्युः । करुणया परिपूर्णं मानसं यस्याः सा तां । स्वान्तं हृन्मानसं मन इत्यमरः । बुधैर्देवैः पण्डितैर्वा सततं निरन्तरं चिन्तितां । सततानारताश्रान्तसंततविरतानिशमित्यमरः । गिरिजां पार्वतीं । गिरिजा मेनकात्मजेत्यमरः । चिन्तय । चिन्तयतेर्लोण्मध्यमैकवचनम् ॥ ५ ॥

काव्यानीति । यद्यपि श्रिया ज्ञानसंपत्या युतः कालिदासः श्रीकालिदासः । शाकपार्थिवादित्वात्समासः । स मुखं मुख्यो येषां तैः सूरिभिः पण्डितैः कृतानि सन्ति शोभनानि काव्यानि पञ्च प्रसिद्धानि इह लोके बुधेषु पण्डितेषु सन्ति वर्तन्ते । बुधाः पठन्ति पाठयन्तीत्यर्थः । तथापि रसान् शृङ्गारादिरसान् जानातीति रसज्ञः प्रकर्षेण जानातीति प्रज्ञः प्रज्ञ एवप्राज्ञः बुद्धिमान् । प्रज्ञादिभ्यश्चेत्यण् । मे अत्र काव्ये तस्य तस्य रसः तत्तद्रसस्तं रचनाविशेषं । नित्यवीप्सयोरितिद्वित्वं । रसितुं आदातुं तु पुनः समेतु आगच्छतु । इति हेतोर्हारि मनोहारि काव्यं मयेतिशेषः अकारि कृतं । करोतेः कर्मणि लुङि चिणः परस्य लुक् । पञ्चानामपि काव्यानामेकत्र रचनाविशेषं ज्ञातुं निबद्धमित्यर्थः । वसन्ततिलकावृत्तम् । उक्ता वसन्ततिलका तभजाजगौग इति लक्षणात् ॥ ६ ॥

पारमिति । ममकृतिर्मत्कृतिर्मत्कविता । प्रत्ययोत्तरपदयोश्चेति अस्मदो मदा-

श्रीमद्भिर्मुनिभिः पराशरमुखैरुक्ताः कलौ ये नृणां
धर्मा भूमिभृतां तएव सकला दृष्टा मयात्रापि हि
राजानः कृतजातधर्मनिरताः केचित्प्रजापालकास्
तद्वृत्तं कुतुकाकुलं कलिहरं संवर्ण्यते विस्तरात् ॥ ८ ॥
यवनैरवनीशपालकै र्निखिलैराकलिता धरा यदा
सुकला विकलाः कलावतां शिवभूपः शिवकृत्तदाजनि ॥ ९ ॥

देशः । सैव शैवलिनी नदी । तरङ्गिणी शैवलिनी तटिनी ह्रादिनी धुनीत्यमरः । मयूरव्यंसकादित्वात्समासः । तस्याः पारं परतीरं समाप्तिमित्यर्थः गतः । दर्भाग्रबुद्धिः सूक्ष्मबुद्धिर्मनुजः । श्रीहर्षनामा कविस्तस्य कृतिः काव्यं स एव अंबुनिधिः समुद्रः तस्य अन्तं समाप्तिं जवेन वेगेन अध्ययनमेव प्लवोनौका । उडुपं तु प्लवः कोलइत्यमरः । तेन विनैव । पृथग्विनेत्यादिना तृतीया । प्रकर्षेण यायात् गच्छेत् । रूपकालंकारः । विषयाभेदताद्रूप्यरञ्जनं विषयस्य यत् । रूपकं तु त्रिधाधिक्यनूनत्वानुभयोक्तिभिरिति लक्षणात् । इन्द्रवज्रावृत्तम् । स्यादिन्द्रवज्रा यदितौ जगौग इति लक्षणात् ॥ ७ ॥

श्रीरिति । श्रीः अतीन्द्रियज्ञानसंपदस्ति येषां तैः पराशरादिर्मुनिभिः कलौ वर्तमानानामितिशेषः नृणां मनुष्याणां ये धर्मा आचरणानि तथा भूमिभुजां राज्ञां धर्मा उक्ताः त एव मयाअत्र अस्मिन् कलौ सकला धर्माः दृष्टा । अत्रापि अस्मिन्नपि अतिदुष्टे कलौ । अत्रेत्यस्या वृत्तिः । केचिद्राजानः शिवप्रभृतयः । कृते जाता उत्पन्ना नलादयस्तेषां धर्मे निरता अत एव प्रजापालका जाता इतिशेषः । तेषां वृत्तं कुतुकेन कौतुकेन आकुलं व्याप्तं कलिहरं कलिदोषहरं विस्तरात् विस्तरेण सम्यक् वर्ण्यते । वर्णयतेः कर्मणि लट् ॥ ८ ॥

अथ शिवभूपं वर्णयति तत्रादौ त्रिभिः श्लोकैर्विशेषकेणाह । यवनैरिति । अवनीश इन्द्रप्रस्थवर्ती सार्वभौमो यवनाधिपः स पालको येषां तैरवनीशपालकैः प्रबलैरितिभावः । यद्वा । अवनीशानां स्वस्वदेशाधिपानां माण्डलिकभूपानां पालकैः सकलराजन्यन्दमाक्रम्य स्थितैरित्यर्थः । निखिलैर्यवनैः नत्वन्यजातीयैरित्यर्थः । यदा धरा पृथ्वी । धरा धरित्री धरणीत्यमरः । आकलिता आक्रान्ता अत एव यदा कलावतां गुणिनां कला गुणा विकला अनुपयुक्ताः । कलावतां कला इत्युपलक्षणं । विद्यावतां विद्या अपि । गीतनृत्यादिकलानामनुपयोगः । का कथा विद्यानामितिभावः । अप्रवर्तितेतिशेषः । तदा तस्मिन् काले । शिवकृत्कल्याणकृत् । कृञः क्विप्-

८. ' भूमिभुजाम् ' पा० भे०.

जनताभवतापहारको निजधर्माचरणप्रवर्तकः
शरणागतदीनपालकः कलिकालाकुलदुःखनाशकः ॥ १० ॥
विजितैः करणैर्महत्तमो मनुमुख्योत्तमभूपवर्त्मगः
द्विजराजपदाब्जपूजन-प्रतिलब्धातुलभौमकामनः ॥ ११ ॥

तुक् । शिवभूपोऽजनि जातः । जनेः कर्तरि लुङि चिण्दीपजनेत्यादिना चिणि लुक् ॥ ९ ॥

जनतेति । शिवभूपमेव द्वाभ्यां विशिनष्टि । जनानां समूहो जनता । ग्रामजनबंधुसहायेभ्यस्तल् । तस्यां भव उत्पन्नो यस्तापो । यद्वा । जनताया भवतापः संसारदुःखं तद्धरतीति जनताभवतापहारकः । ण्वुल् । दारिद्र्यादिपरिहारेण सुखप्रद इत्यर्थः । तथोक्तः । निजाःस्वकीया ये धर्मास्तेषामाचरणं तस्य प्रवर्तकः । तथोक्तः । शरणमागता ये दीनास्तेषां पालकः । कलिरूपो यः कालस्तेनाकुलानां दुःखं नाशयतीति । तथोक्तः ॥ १० ॥

विजितैरिति । विशेषेण जितैर्विजितैःकरणैरिन्द्रियैः अतिशयेन महानितिमहत्तमो जितेन्द्रिय इत्यर्थः । अतिशये तमप् । इत्थंभूतलक्षणे तृतीया जटाभिस्तापसइतिवत् । मनुर्मुख्यो येषां तेषां उत्तमभूपानां वर्त्मं मार्गे गच्छतीति तथोक्तः । मन्वादिप्रोक्तराजनीत्यनुसारीत्यर्थः द्विजराजा ब्राह्मणा स्तेषां पदाब्जे पादकमले तयोः पूजनं तेन प्रतिलब्धाः प्राप्ता अतुला अनुपमा भूमिसंबंधिन्यः कामना मनोरथा येन तथोक्तः । ब्राह्मणभक्त्यालब्धाखिलार्थः इत्यर्थः । भूमिशब्दादिदमर्थेणिङीपि पुंवद्भावः । यद्वा । द्विजे गरुडे राजतेऽसौ द्विजराजो विष्णुः । राजाहः सखिभ्यष्टच् । तस्य पदाब्जयोः पूजनेन प्रतिलब्धाः० । यद्वा । द्विजराजो गरुडः स पदं स्थानं यस्य स द्विजराजपदो विष्णुः तस्य अब्जैः कमलैःपूजनं तेन प्रतिलब्धाः० । विष्णुभक्त्या लब्धाखिलार्थ इत्यर्थः । यद्वा । द्विजराजोहंसः स पदं स्थानं यस्य स द्विजराजपदोब्रह्मा तस्य अब्जैः पूजनेन प्रतिलब्धाः० । ब्रह्मभक्त्या लब्धाखिलार्थ इत्यर्थः । यद्वा । द्विजराजो मयूरः स पदं यस्य स द्विजराजपदः कार्तिकेयः तस्य अब्जैःपूजनेन प्रतिलब्धाः कार्तिकेयभक्त्या लब्धा० । यद्वा । द्विजराजश्चन्द्रस्तस्य पदाब्जपूजनेनप्र० चन्द्रभक्त्या लब्धा० । यद्वा । द्विजराजश्चन्द्रस्तस्यपदं स्थानभूतःशिवः तस्य अब्जपूजनेन प्र० शिवभक्त्या लब्धा० । यद्वा । द्विजराजो विष्णुः स पदं यस्याः सा लक्ष्मी स्तस्या अब्जपूजनं तेनप्र० । लक्ष्मीभक्त्याल० । यद्वा । राज्ञःपातीति राजपः कार्तवीर्यार्जुनः तं द्यति खण्डयतीति राजपदो द्विजो ब्राह्मणश्चासौराजपदश्च द्विजराजपदः परशुरामः तस्य अब्जपूजनंतेनप्र० परशुरामभक्त्या० इत्यर्थः । एवमन्येऽपि अर्था-

११. “ ०मौभभोगभाक् ” पा० भे०.

तरुणीं रमणीं परस्त्रियं जननीं स्वां मनुते स्म सर्वदा
निजयोषितमीश्वरोऽम्बिकामिव देहार्धगताममन्यत ॥ १२ ॥
स चखान यदा यदा भुवं धनमिच्छासदृशं प्रलब्धवान्
सकला हि मही हिरण्मयी कृतपुण्यस्य नरस्य सर्वदा ॥ १३॥
निजसूनुमिवाव भूपतिर्निखिलं लोकमतीन्द्रियार्थवित्
अपराधिनमात्ममप्यसौ मनुवाक्यानुसृतः शशास च ॥ १४ ॥

ऊह्याः । एतद्विशेषणविशिष्टः । शिवभूपोऽजनीति पूर्वेण तृतीयश्लोकेनान्वयः । श्लेषालङ्कारः । नानार्थसंश्रयःश्लेषो वर्ण्यावर्ण्योभयास्पदः सर्वदोमाधवःपायात्सयोगङ्गामदीधरत् ॥ ११ ॥

तरुणीमिति । स इति शेषस्तरुणीं नवयौवनां । नवस्नञीत्यादिनाङीप् । रमणीं सुन्दरीमपि परस्त्रियं पराङ्गनां । वामूशसोरितीयङ् । स्वां स्वकीयां जननीमिव सर्वदा नतु कदाचिदित्यर्थः । मनुतेस्म । लिटोऽपवादःस्मेलट् । अतिसुरूपामपि नवयौवनां परस्त्रियं मातृभावेनावलोकितवानित्यर्थः । निजयोषितं स्वस्त्रियं तु ईश्वरः साम्बोऽम्बिकामिव देहस्यार्धे तत्र गताममन्यत । स्वपत्न्यामतिप्रीत्या-रंस्तेति भावः ॥ १२ ॥

सचखानेति । स शिवभूपो यदा यदा । वीप्सायां द्विर्वचनं । भुवं भूमिं चखान निखातवान् । तदा तदेत्यध्याहारः । इच्छासदृशमिच्छानुरूपं धनं प्रलब्धवा-नलभत । उक्तमर्थान्तरन्यासेन दृढयति । हि यतः कृतपुण्यस्य पुण्यवतो-नरस्य सकला संपूर्णा मही पृथ्वी हिरण्मयी सुवर्णमयी भवतीतिशेषः । हिरण्यशब्दा-त्प्राचुर्ये मयटिदाण्डिनायनेत्यादिसूत्रेण निपातनाद्यलोपः । अर्थान्तरन्यासालङ्कारः । तदुक्तं कुवलयानन्दे । उक्तिरर्थान्तरन्यासः स्यात्सामान्यविशेषयोः । हनूमानब्धि-मतरद्दुष्करं किं महात्मनाम् ॥ १३ ॥

अथास्य दण्डप्रकारमाह । निजसूनुमिवेति । इन्द्रियाण्यतिक्रान्तायेऽर्था धनानि तान् वेत्तीति तथोक्तः । चर्मचक्षुरगोचरभूमिगतधनज्ञानवानित्यर्थः । यद्वा । अतीन्द्रियो योऽर्थो ब्रह्मस्वरूपं तद्वेत्तीति ब्रह्मज्ञानसंपन्नइत्यर्थः । अर्थोभिधेयरैवस्तुप्रयोजननिवृत्तिष्वित्यमरः । भूपती राजा निखिललोकं जनं निजसूनुमिव स्वपुत्रमिव । यद्वा । स्वानुजमिव । सूनुः पत्रेऽनुजेरवाविति विश्वः । आव ररक्ष । अवतेर्लिटि द्वित्वेऽभ्यासदीर्घसवर्णदीर्घः । असौ राजा आत्मं स्वकीयमपि अपराधिनमपराधवन्तं । मत्वर्थीयइनिः । मनुवाक्यानुसृतो मनुस्मृत्यनुसारी सन् शशास अदण्डयत । अद-ण्ड्यान्दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन् । अयशो महदाप्नोति नरकञ्चैव गच्छतीति स्मरन्यथायोग्यं दण्डंचकारेत्यर्थः ॥ १४ ॥

वचसा स जिगाय गीष्पतिं धनदं कोशबलेन रूपतः
मदनं क्षमया महीमिमां तनुशक्त्या मरुदात्मजं नृपः ॥ १५ ॥
नलरामयुधिष्ठिराः पुरा त्रियुगे वाडवकामपूरकाः
इह दानपतेरभावतो द्विजदैन्ये सति सोऽभवत्सुधीः ॥ १६ ॥
त्रिदिवेशतरुः समर्थितं वितरत्येष समर्थितं तथा
अधिकं च महीसुराय यन्नृपतिः कल्पतरोस्ततोधिकः ॥ १७ ॥
रामदास इति भूतले गतं ख्यातिमेतमुपसृत्य मारुतिम्
संप्रणम्य निजगाद हे गुरो मां कुरुष्व भवबंधवर्जितम् ॥ १८ ॥
भूपतिप्रवर कात्र दक्षिणा यन्मनोगतमहं ददामि तत्
पुत्रवत्सकललोकपालनं दक्षिणा मम तथेति सोऽब्रवीत् ॥ १९ ॥

अलौकिकान्गुणानस्याह । वचसेति । नृपेषूत्तमो नृपोत्तमः स शिवभूपो गीष्पतिं बृहस्पतिं । गीष्पति धिषणो गुरुरित्यमरः । वचसा वचनेन । धनदं कुबेरं कोशबलेन । कोशोऽस्त्रीकुड्मले खड्गे पिधानेऽर्थौघदिव्ययोरिति विश्वः । मदनं प्रसिद्धं रूपतो रूपेणेमां महीं क्षमया । मरुदात्मजं हनूमन्तमथवा भीमं तनुशक्त्या शरीरसंपत्या । जिगाय जितवान् । अर्थीपमुपमा ॥ १५ ॥

अथास्यौदार्यमाह । नलरामेति । नलश्च रामश्च युधिष्ठिरश्च नलरामयुधिष्ठिराः पुरा पूर्वे त्रियुगे त्रयाणां युगानां समाहारस्त्रियुगं तस्मिन् कृतयुगादित्रये । पात्रादित्वात्ङीबभावः । यद्वा । त्रियुगीवाडवकामपूरका इति पाठः साधीयान् । वाडवा ब्राह्मणाः । वाडवा विप्रब्राह्मणा इति वैजयन्ती । तेषां कामः इच्छा तां पूरयन्ति ते तथोक्ता आसन्निति शेषः । इहास्मिन् कलौ दानस्य धनत्यागस्य पतिः स्वामी तस्याभावतोऽभावाद्द्विजदैन्ये द्विजानां दीनत्वे सति सुधीः स शिवभूपोऽभवत् ॥ १६ ॥

त्रिदिवेश तरुरिति । त्रिदिवेशा देवाः । त्रिदिवेशा दिवौकस इत्यमरः । तेषां तरुः कल्पवृक्षः समर्थितं प्रार्थितं वितरति ददात्येषनृपति र्यन्महीसुराय ब्राह्मणाय समर्थितं तथाधिकञ्च वितरति तत्तस्मात्कल्पतरोरधिकोस्तीति शेषः ॥ १७ ॥

अथास्यसद्गुरुप्रसादमाह । रामदासइति । स इति शेषः । रामदासइतिनाम्ना ख्यातिं प्रख्यातिंगतं मारुतिं हनूमन्तं । हनूमदवतारमित्यर्थः । उपसृत्य गत्वा संप्रणम्य नत्वा । हेगुरो मां भवः संसारस्तस्य यो बन्धस्तेन वर्जितं रहितं कुर्विति जगादोक्तवान् । आत्मतत्त्वोपदेशेन जीवन्मुक्तं विधास्यतीति बुध्वा रामदासनामानं गुरुं शरणं ययाविति भावः ॥ १८ ॥

निवृत्तिमार्गप्रश्नार्थमुपागतं राजानं लोकोपकारार्थं प्रवृत्तिमार्गं वर्णयन् सद्गुरु भो-

आत्मतत्त्वमुपदिश्य सद्गुरुर्दुर्जनक्षयविधौ पटीयसीम्
शक्तिमस्य च तनौ निधाय तं स्वं गृहं गमयति स्म भूपतिम् ॥२०॥

गैरिकाक्तपटाच्छन्नं ध्वजं दत्तं प्रगृह्य सः ॥
यं यं देशं ययौ राजा स स देशो वशोऽभवत् ॥ २१ ॥

एकदा स जगदे महीपतिर्वत्सलेन जनकेन पुत्रकः
हे तनूज हरिभागमाहरन् जम्बुकः शिवमुपैति किं वद ॥ २२ ॥

पावन्धेन स्ववशं विधत्ते। भूपतिप्रवरेति। हे भूपतिप्रवर राजश्रेष्ठ। अत्रोपदेशे का दक्षिणेति गुरुप्रश्नः। अहं यन्मनसि गतं तद्ददामीति राज्ञोत्तरं। ददामीतिलडंतो स्मारणात् सद्य एव प्रयच्छामि नतु कालान्तरेऽतिभावः। पुनश्च गुरोरुक्तिः पुत्रवदिति। सकलस्य लोकस्य जनस्य पालनं पुत्रवत्पुत्रेणतुल्यं। तेन तुल्यं क्रियाचेद्वतिरिति वतिः। मम दक्षिणा। यथाशास्त्रं प्रजापालनमेव मम दक्षिणा नान्येत्यर्थः। अत्र राजोत्तरमाह। तथेति तथास्तु इति स राजाब्रवीदुक्तवान्। गुर्वनुज्ञया प्रजापालने कृते गुरुप्रसादेन प्रजापालनपुण्येन च मम ज्ञानावाप्तिरपि स्यादिति मनसि निधाय गुरुवाक्यमङ्गीचकारेतिभावः॥ १९ ॥

आत्मतत्त्वमिति। सन् साधुर्गुरू रामदासः। सन् सुधीः कोविदो बुध इत्यमरः। आत्मतत्त्वं ब्रह्मस्वरूपमुपदिश्य। यद्वा। आत्मनः स्वस्य तत्त्वं स्वरूपमुपदिश्य प्रकटय्यास्य राज्ञः शरीरे दुर्जनस्य क्षयो नाशस्तस्य विधिर्विधानं तत्र पटीयसीं पटुतरां। द्विवचनविभज्येत्यादिना ईयसुन्। शक्तिं निधाय संस्थाप्य भूपतिं राजानं स्वगृहं स्वकीयं गृहं गमयतिस्म प्रेषयामास। गतिबुद्ध्यात्यादिना भूपतेः कर्मत्वम्॥२०॥

प्रासादिकध्वजप्राप्तिपूर्वकमेकेन दिग्विजयमाह। गैरिकाक्तेति। स राजा गैरिकया गिरिमृदा आक्तो रञ्जितो यः पटस्तेनासमन्ताच्छन्नं गुरुणेतिशेषः। दत्तं ध्वजं ध्वजदण्डं। यद्वा। राहोः शिर इतिवत् ज्ञेयं। प्रगृह्य यं यं देशं ययौ स स देशः। उभयत्रापि नित्यवीप्सयोरिति द्विर्वचनं। वशोऽधीनोऽभवत्। श्लोकसंज्ञं वृत्तं। पञ्चमं लघु सर्वत्र सप्तमं द्विचतुर्थयोः। गुरु षष्ठं च सर्वेषामेतच्छ्लोकस्य लक्षणमिति लक्षणात्॥ २१ ॥

एकदेति। एकस्मिन् काल एकदा वत्सलेन दयालुना। वत्सांसाभ्यां कामबले इति लच्प्रत्ययः। जनकेन पित्रा स महीपतिः। भाविमहीपतित्वमादायेदं विशेषणं। पुत्रकः अनुकंपितः पुत्रः। अनुकम्पायां कन्प्रत्ययः। इति जगदे उक्तः। गदेः कर्मणिलिट्। इति किं। हे तनूज हे पुत्र जंबुकः क्रोष्टा हरिभागं सिंहभागमाहरन् सन् शिवं कल्याणमुपैति किं वद॥ २२ ॥

बालिशोऽसि बत किं शिशो गृहे नास्ति ते यदिह भूतले स्थितम्
वाजिनः पवनवेगजिज्जवाद् दन्तिनोऽपि हरिदन्तिसंमताः ॥ २३ ॥

दुष्ट एष यवनाधिपोऽस्त्यहं तं सदा परिसरामि दासवत् ॥
तत्कृपालवसुलब्धसंपदां पात्रतामुपगतोऽस्मि सांप्रतम् ॥ २४ ॥

जनकाज्ञापरः पुत्रः पत्नी च पतिदेवता
संपदापत्समं मित्रं त्रितयं दुर्लभं खलु ॥ २५ ॥

जमदग्निः कृते पुत्री त्रेतायां राघवः सुती
द्वापरे शंतनुः पुत्री तदन्ये नैव पुत्रिणः ॥ २६ ॥

ननु गजाश्वादिराजसंपदुपभोगेच्छयेदमारब्धं प्रारब्धवशादग्रे यत्स्यात्तद्भवतु किमुपालंभेनेत्यत आह बालिशोऽसीति । हे शिशो बत इति खेदे बालिशो मूर्खोऽसि । इह भूतले स्थितं यद्वस्तु तन्मे गृहे नास्ति किं । सर्वमप्यस्तीत्यर्थः । पवनो वायुस्तस्य वेगस्तं जयतीति पवनवेगजित् जवो वेगो येषां ते तथाभूता वाजिनो हरेरिन्द्रस्य दन्तिनो गजा ऐरावतादयस्तेषामपि संमता मान्या दन्तिनः । प्रशस्ता दन्ता येषां सन्ति ते दन्तिनो गजाः । प्रशंसायां इनिः । भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । संबन्धेऽस्तिविवक्षायां भवन्ति मतुबादय इति । सन्तीतिशेषः ॥ २३ ॥

दुष्टइति । एष विजयपुरस्थो यवनाधिपो दुष्टोऽस्ति । अहं तं दासवत् दासेन तुल्यं परिसराम्यनुवर्ते । तस्य कृपाया लवो लेशमात्रस्तेन सुतरां लब्धाः प्राप्ता याः संपदस्तासां पात्रतां पात्रत्वं सांप्रतमधुना । एतर्हि संप्रतीदानीमधुना सांप्रतं तथेत्यमरः। उपगतः प्राप्तोऽस्मि । एतावत्कालपर्यन्तं बह्वायासेन तस्य कृपा संपादिता । अधुनैव संपदुपभोगकालः समायातस्तत्र त्वं विघ्नं माकुर्विति भावः ॥ २४ ॥

जनकेति । जनकस्य पितुर्या आज्ञा तस्यां पर आसक्तः । यद्वा । जनकाज्ञैव परा मुख्या यस्य स तथोक्तः पुत्रः । पतिरेव देवता यस्याः पतिदेवता पत्नीचेत्यपरं । संपदापदोः समं तुल्यं मित्रं। एतत्त्रितयं । त्रिशब्दादवयवे तयप्द्वित्रिभ्यांतयस्यायज्वेतिविकल्पात्तयपोऽयजादेशाभावः । दुर्लभं दुःप्रापं खलु निश्चयेन ॥ २५ ॥

जमदग्निरिति । कृते कृतयुगे जमदग्निः प्रसिद्धः पुत्री पुत्रवानासीदिति शेषः । त्रेतायां रघोर्गोत्रापत्यं राघवो दशरथः । अपत्येऽण् । सुती सुतवानासीत् । द्वापरे शन्तनुर्नाम राजा पुत्र्यासीत् । तेभ्योऽन्ये तदन्ये न पुत्रिणः । अतिशयितपुत्रवन्तो नैव । एतत्त्रितयभिन्नेषु पुत्रवत्वमस्ति परं प्रशस्तपुत्रवत्त्वं नास्तीतिभावः । प्रशंसायामिनिः ॥ २६ ॥

निजघान गुरोरनुज्ञया जननीं भ्रातृगणं च तत्क्षणे
जमदग्निसुतो यमालयं सकुलं राजचयं तथानयत् ॥ २७ ॥
सुरराजपुरीपुरःसरां गणनायां स्वपुरं रघूत्तमः
प्रविहाय ययौ स दण्डकं जनकाज्ञावशगः सलक्ष्मणः ॥ २८ ॥
अवगम्य पितुर्मनोगतं समुपेत्याशु स दाशवेश्म तत्
अनुसृत्य जितेन्द्रियात्मतामनयत्सत्यवतीं सुरव्रतः ॥ २९ ॥
मद्वचःकरणे बाल किं दुःखं वद तत्त्वतः
त्वद्धितार्थंब्रवीम्येतज्ज्ञातव्यं हितमिच्छता ॥ ३० ॥

त्रयाणां पुत्रवतां क्रमेण विवृणोति जघानेत्यादिना । निजघानेति । जमदग्निसुतः परशुरामो जननीं रेणुकां भ्रातॄणां गणं च गुरोः पितुरनुज्ञया तत्क्षण आज्ञाक्षण एव निजघान हतवान् । मानसिकव्यभिचारदूषितां रेणुकां विलोक्य क्रुद्धेन जमदग्निना नियोजितो रामोऽकार्यमपि जननीवधं भ्रातृवधं च कृतवानित्यर्थः । तथा कुलेन सहितं सकुलं राजचयं राजवृन्दं यमालयमनयत् नीतवान् । हैहयैर्विच्छेदितशिरसं जमदग्निं दृष्ट्वा रोरूयमाणायां रेणुकायां रामो वनादागत्य क्रुद्धः सन् सकलान् हैहयानवधीदित्यर्थः ॥ २७ ॥

सुरराजेति । जनकस्य दशरथस्य याऽऽज्ञा तस्या वशं गच्छतीति तथोक्तः । लक्ष्मणेन सहितः सलक्ष्मणो रघुषूत्तमो रघूत्तमो रामो गणनायां । केनचित्कुतुकिनोत्तमानां पुरीणां गणने क्रियमाण इत्यर्थः । सुरराजस्य इन्द्रस्य या पुरी तस्या पुरः अग्रे सरतीतिताममरावत्यपेक्षया रमणीयामित्यर्थः । स्वपुरं स्वनगरीं प्रविहाय त्यक्त्वा दण्डकं दण्डकारण्यं राक्षसाक्रान्तमपीति भावः । ययौ जगाम ॥ २८

अवगम्येति । सुरस्येव व्रतं सत्यवक्तृत्वादिकं यस्य स सुरव्रतो भीष्मः पितुः शान्तनोर्मनसि गतं मनोगतं वाञ्छितं दाशकन्यापरिणयनरूपं अवगम्य ज्ञात्वा । वाल्यपीति विकल्पान्मकारलोपाभावः । आशु शीघ्रं तद्दाशस्य कैवर्तस्य वेश्म गृहं । कैवर्तौ दाशधीवरावित्यमरः । समुपेत्य गत्वा जितानि इन्द्रियाणि आत्मा मनश्च येन तस्य भावस्तत्ता तां । अनाद्यदन्तत्वादिन्द्रियशब्दस्य पूर्वनिपातः ब्रह्मचर्यमित्यर्थः । अनुसृत्य अङ्गीकृत्य । समानकर्तृकयोः पूर्वकाले इत्यत्र द्विवचनस्याविवक्षितत्वात् धातुत्रितयादपि क्त्वाप्रत्ययः । स्नात्वा पीत्वा भुक्त्वा व्रजतीतिवत् । सत्यवतीं नाम दाशकन्यां शान्तनोर्विवाहार्थं अनयत् आनीतवान् । पित्रर्थं नैष्ठिकं ब्रह्मचर्यं स्वीकृतवानित्यर्थः ॥ २९ ॥

मद्वचइति । हे बाल मद्वचसः करणं क्रिया तत्र किं दुःखं । अस्तीति शेषः । त्वं तत्त्वतो याथार्थ्येन वद । अहमेतत्पूर्वोक्तं तव हितं त्वद्धितं त्वद्धितायेति त्वद्धि-

निशम्य वाक्यं जनकस्य राजा नत्वा रहस्येतमुवाच वाचम्
उक्तं त्वया यद्वचनं दयालो हितावहं मे श्रुतिशास्त्रगामि ॥ ३१ ॥

तथापि किंचिद्विनिवेदयामि स्वप्ने समागत्य जगद्धितार्था
देवी भवानी निजगाद वाचं हे भूपते राज्यमिदं गृहाण ॥ ३२ ॥

दत्तं मया राज्यमिमेऽतितुच्छा म्लेच्छा जनं मे परिपीडयन्ति
प्रजाप्रपीडाभवपापतस्ते लयं प्रयास्यंति सदा जयस्ते ॥ ३३ ॥

युद्धे विजित्याखिलदुष्टवर्गं विप्रादिकान् पालय गाश्च राजन्
धनं च ते भूरि ददामि यत्र खनिष्यसीहास्य भवेद्धिलाभः ॥ ३४ ॥

तार्थं ब्रवीमि वच्मि । हितं कल्याणं इच्छता त्वया श्रोतव्यं श्रुत्वा तथा कर्तव्यमित्यर्थः ॥ ३० ॥

निशम्येति । राजा शिवभूपो जनकस्य पितुर्वाक्यं निशम्य श्रुत्वा एतं पितरं रहस्येकान्ते नत्वा वाचमुवाचोक्तवान् । तामेवाह । हे दयालो । दयतेऽसौ दयालुस्तत्संबुद्धौ हे दयालो । स्पृहिगृहीत्यादिना दयतेरालुच् । श्रुतिर्वेदः शास्त्रं नीतिशास्त्रं तद्गच्छत्यनुसरति तयोक्तं । गमेर्णिनिः । यद्वचनमुक्तं तन्मे हितं आवहति करोतीति । हितावहमस्तीति शेषः ॥ ३१ ॥

ननु हितावहं चेत्तूष्णीं गृहे स्थीयतां यवनराज्यहरणोद्योगो न कर्तव्य इत्यत आह । तथापीति । तथाप्येवं सत्यपि किञ्चिद् गूढं विनिवेदयामि । तदेवाह । जगतो हितं तदेवार्थः प्रयोजनं यस्याः सा । अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिष्विति विश्वः । भवानी भवपत्नी देवी पार्वती मम स्वप्ने समागत्य वाक्यं जगाद । हे भूपत इदं राज्यं गृहाण इति ॥ ३२ ॥

ननु यवनाधिपतेः प्रबलस्य कथं राज्यं ग्राह्यमेतदत आह । दत्तमिति । इमे अतितुच्छा म्लेच्छा मे जनं मे लोकं परिपीडयन्ति अतो मया तुभ्यं राज्यं दत्तं ननु प्रबलेषु म्लेच्छेषु जीवत्सु कथं ममराज्यप्राप्तिरित्यत आह । प्रजेति । ते म्लेच्छाः प्रजानां प्रकर्षेण या पीडा ततो भवमुत्पन्नं यत्पापं तस्माल्लयं नाशं प्रयास्यन्ति । सदा ते जयश्च स्यादितिशेषः ॥ ३३ ॥

युद्ध इति । हे राजन्नखिलानां दुष्टानां वर्गं समूहं युद्धे विजित्य विप्रा आदिर्येषां तान् वर्णान् गाश्च पालय । ननु युद्धसामग्रीं विना कथं प्रबलैः सह योद्धव्यं । युद्धसामग्री च धनं च विना न सिध्यतीत्यत आह । किञ्चाहं ते धनं ददामि चकाराद्युद्धसामग्रीं च । यत्र यस्यां भूमौ खनिष्यसि इहास्यां भूमौ खानभूमावित्यर्थः ।

---

१. 'एतम्' पा० भे० २. 'पूजय' पा० भे०

इत्थं समादिश्य जगाम देवी तत्प्रत्ययार्थं च खनामि यत्र
यथा लभेऽहं धनमेवमेतान् म्लेच्छान् यमप्राघुणिकान् करिष्ये ॥ ३५ ॥
पिता शिवस्यास्य वचो निशम्य जगाम हृष्टो विजयं पुरं सः
सभामुपेत्य प्रणनाम वीरो[१] म्लेच्छाधिनाथं बहुवीरयुक्तम ॥ ३६ ॥
उच्चालितभ्रूः कुटिलीकृतास्यो म्लेच्छाधिपोवाचमुवाच वीरः
हे सभ्यवर्या वचनंममैतच्छ्रुत्वोत्तरं ब्रूत हितं च सत्यम् ॥ ३७ ॥

पितॄणामिह सर्वेषां पितरौ द्वौ मतौ मम
जनकः पोषकश्चापि जननाद्भरणाद्वरः[२] ॥ ३८ ॥
जनकादधिकं मन्ये पितरं पोषणक्षमं
अत्रार्थे मद्वचो यूयं श्रुणुत प्रियदर्शनाः ॥ ३९ ॥

यद्वा । इह भूमौ यत्र यस्मिन् प्रदेशे खनिष्यसि तत्र तस्मिन् प्रदेशे इति योजनीयं । अस्य धनस्य लाभो भवेत् । हि निश्चयेन ॥ ३४ ॥

इत्थमिति । देवी इत्थं पूर्वोक्तप्रकरेण समादिश्य उक्त्वा जगाम अन्तर्हिताऽभूदित्यर्थः । अहं तस्य देवीवाक्यस्य प्रत्ययः अनुभवस्तदर्थं यत्र खनामि तत्र यथा धनं लभे प्राप्नोमि एवं एतान् म्लेच्छान् यमस्य प्राघुणिकानतिथीन् करिष्ये ॥ ३५ ॥

पिता शिवस्येति । स शिवस्य पिताऽस्य शिवस्य वचो निशम्य श्रुत्वा हृष्टः सन् विजयं विजयाख्यं पुरं जगाम । वीरः शिवपिता सभामुपेत्य गत्वा बहुभिर्वीरैर्युक्तं म्लेच्छानामधिनाथं प्रणनाम नमश्चक्रे ॥ ३६ ॥

उच्चालित भ्रूरिति । उच्चालिते भ्रुवौ येन स तथोक्तः । न कुटिलं अकुटिलं अकुटिलं कुटिलं संपद्यते तथा कृतं कुटिलीकृतमास्यं येन तथोक्तः । अभूततद्भावे संपद्यकर्तरिच्विः । अस्य च्वान्तित्वं । वीरो म्लेच्छाधिपो वाचमुवाच । सभायां भवाः सभ्याः सामायाय: स्तेषु वर्याः श्रेष्ठास्तत्संबुद्धौ हे सभ्यवर्या ममैतद्वचनं श्रुत्वा हितं सत्यं चोत्तरं ब्रूत । यद्वा । उभयोरपि हितं सत्यमुत्तरं कर्तव्यं ब्रूत ॥ ३७ ॥

पितॄणामिति । इह अस्मिन् लोके सर्वेषां पञ्चानां पितॄणां द्वौ पितरौ मम मतौ मान्यौ उत्कृष्टावित्यर्थः । पञ्च पितरस्तु । जनिता चोपनेता च यश्च विद्यां प्रयच्छति । अन्नदाता भयत्राता पञ्चैते पितरः स्मृता इति सद्वृद्धे । द्वावाह । जनयतीति जनकः । जनयतेर्ण्वुल् । जननात्सकलपुरुषार्थसाधनीभूतदेहोत्पादनादित्यर्थः । पुष्णातीति पोषकश्च भरणादन्नादिदानादित्यर्थः । वरः श्रेष्ठः ॥ ३८ ॥

द्वयोरपि मध्ये पोषके श्रेष्ठत्वं प्रतिपादयति । जनकादिति । अहमिति शेषः ।

---

१. ‘ वीरम् ’ पा० भे० २. ‘ वरौ ’ पा० भे०

भूमौ प्राणिगणः सर्वः कंदर्पाकृष्टमानसः
सुखार्थमेव रमते प्रायशो न सुतेच्छया ॥ ४० ॥

सुखार्थं रममाणेस्मिन् जायते जायया सुतः
जनकस्य तु नाण्वस्ति दुःखं सौख्यं पुनः पुनः ॥ ४१ ॥

धनार्जने महद्दुःखं रक्षणे च ततोऽधिकं
यस्मात्पुष्णाति तद्दत्वा पोषको [६]जनकाद्वरः ॥ ४२ ॥

तं मामयमनादृत्य कृतघ्नः पोषणक्षमं
मद्राज्यहरणे पुत्रमाज्ञाप्यात्र समागतः ॥ ४३ ॥

सभ्याः श्रुतं मद्वचनमत्र चोत्तरमुच्यतां
श्रुत्वा यवनवाक्यं तत्सभ्यानामेक उक्तवान् ॥ ४४ ॥

पोषणे क्षमं पितरं जनकादधिकं मन्ये । प्रियं दर्शनं येषां ते हे प्रियदर्शना भवत्स्वपि बहिः साधुत्वं प्रतिभाति अंतः किमस्तीति न वेद्मीति भावः । अत्रार्थे पोषकस्याधिकत्वे यूयं मम वचः शृणुत ॥ ३९ ॥

भूमाविति । कन्दर्पेण कामेनाकृष्टं मानसं यस्य तथोक्तः सर्वप्राणिगणः । प्राणिग्रहणात्पश्वादयोऽपिग्राह्याः । प्रायशो बाहुल्येन । बव्हल्पार्थाच्छस् । कारकादन्यतरस्यामितिशस् । सुखार्थमेव सुखायेति सुखार्थं । रमते मिथुनीभवति सुतस्य या इच्छा तया न रमते ॥ ४० ॥

सुखार्थमिति । अस्मिन्नरे जायया पत्न्या । सहेत्यध्याहारं विनापि तद्योगे तृतीया। सुखार्थं रममाणे सति । लटः शानचि मुमागमः । सुतः पुत्रो जायत उत्पद्यते । अनिच्छयेति भावः । फलितमाह। जनकस्योत्पादकस्य तु अण्वल्पमपि दुःखं नास्ति। पुनःपुनः सुखमेव सौख्यं । चतुर्वर्णादित्वात्स्वार्थेष्यञ् । भवतीतिशेषः॥ ४१ ॥

धनार्जनइति । धनस्यार्जने संपादने महद्दुःखं क्लेशः। किञ्च रक्षणे ततोऽर्जनादधिकं दुःखं भवति । पोषकस्तद्धनं दत्वा यस्मात्पुष्णाति तस्माज्जनकाद्वरः श्रेष्ठः ॥ ४२ ॥

तमिति । कृतं हन्ति इति कृतघ्नः । मूलविभुजादित्वात्कः । अयं पुरोवर्ती । इदमस्तु सन्निकृष्टमिति । पोषणक्षमं मामनादृत्य तिरस्कृत्य मद्राज्यस्य हरणे पुत्रमाज्ञाप्यात्र समागतः प्राप्तः ॥ ४३ ॥

सभ्याइति । हे सभ्या मद्वचनं श्रुतमवधारितमत्र मद्वचन उत्तरमुच्यतां वक्तव्यम । सभ्यानां मध्य एकस्तत्पूर्वोक्तं यवनवाक्यं श्रुत्वोक्तवानुवाच ॥ ४४ ॥

---

५. 'सुतार्थतः' पा० भे० ६. 'जनकाधिकः' पा० भे०

अस्माकमुत्तरं मौनं यवनाधीशपालक
यमुद्दिश्य त्वया प्रोक्तं स एवोत्तरयत्विह ॥ ४५ ॥

शिवपिता निजगाद वचस्तदा करयुगं प्रतिबध्य तदुत्तरम्
यवनपालक रोषमपास्य मद्वचनमत्र शृणुष्व वदाम्यहम् ॥ ४६ ॥

पोष्यपोषकभावाख्यस्तरुः समधिरोपितः
त्वया सभालवालं यो वाक्कुठारश्छिनत्ति तं ॥ ४७ ॥

तव सपत्नचयः सह सेनया जलदनिस्वनयन्त्रततिं पुरः
परिविधाय यदेति तदापुरो ह्यहमपि प्रतियाम्यविशङ्कितः ॥ ४८ ॥

शिर इदं करगं प्रविकल्प्य यत् तव सपत्नसमूहहुताशनम्
झटिति संप्रविशामि ततस्त्वयं विनिमयस्तनुहाटकयोरिह ॥ ४९ ॥

अस्माकमिति । हे यवनाधीश हे पालक । यद्वा । यवनाधीशानां पालक । तव निग्रहानुग्रहसमर्थत्वादस्माकं च सेवकत्वात् उत्तरकरणं अयुक्तमितिभावः । त्वया यमुद्दिश्य यस्योद्देशेनोक्तं स एव इह त्वद्वचसि उत्तरयतु उत्तरं करोतु । उत्तरशब्दात् तत्करोतीत्यादिना णिच् ॥ ४५ ॥

शिवेति । तदा शिवपिता करयुगं पाणियुग्मं प्रतिबध्य तस्य यवनवाक्यस्योत्तरं निजगाद बभाषे । हे यवनपालक अहं अत्र त्वद्वचने वदामि रोषं कोपमपास्य त्यक्त्वा मद्वचनं शृणुष्व । द्रुतविलंबितं वृत्तम् । द्रुतविलम्बितमाह नभौ भराविति लक्षणात् ॥ ४६ ॥

पोष्येति । त्वया यः पोष्यपोषकभाव आख्या यस्य स तथोक्तः । आख्याह्वे अभिधानं च नामधेयं च नाम चेत्यमरः । तरुर्वृक्षः सभैवालवालं समधिरोपितो लापितः । रुहः पोऽन्यतरस्यामिति पकारः । तं वागेव कुठारो यस्य सोऽहं छिनद्मि । रूपकालङ्कारः । विषय्यभेदताद्रूप्यरञ्जनं विषयस्य यत् । रूपकं तु त्रिधाधिक्यन्यूनत्वानुभयोक्तिभिरिति चन्द्रालोके ॥ ४७ ॥

तवेति । तव सपत्नानां शत्रूनां । रिपुवैरिसपत्नारिद्विषद्द्वेषणदुर्हृद इत्यमरः । चयः समूहो जलदस्येवमेघस्येव निस्वनो येषां तानि यन्त्राणि । यन्त्रलक्षणं मूले एव चरमचमत्कारे स्पष्टमुक्तं । तेषां ततिं संघमग्रे पुरो विधाय सेनया सह यदा एति आगच्छति तदाऽहमपि विशेषेण शङ्का सञ्जाता यस्य स विशङ्कितः न विशङ्कितः अविशङ्कितः । तारकादित्वादितच् प्रत्ययः । प्रतियामि गच्छामि ॥ ४८ ॥

शिरइति । अहं इदं शिरः करगं करस्थितं प्रविकल्प्य मत्वा यत् तव सपत्नसमूह एव हुताशनः अग्निस्तं झटिति शीघ्रं प्रविशामि । ततस्तस्मात् अयं तनुहाटक-

शिवनामातिमूढोऽयं नैव सूनुर्मम प्रभो
जनकाज्ञापरः पुत्रो *यतोऽसौ नैव तादृशः ॥ ५० ॥

वीरान् दुर्विषहान् युक्तान् सन्नद्धानतिदुर्जयान्
संप्रेष्य बध्वा मूढं तमानयाचिरतः सखे ॥ ५१ ॥

समानीतेतस्मिन्नखिलजनतातापकरणे
रणेशूरेधीरे तव पुर इदं वच्मि वचनम्
द्विजांस्तृप्तानन्नै र्दधिघृतसितापायसयुतैः
करिष्येऽहं ख्यातान् दशशतशतं साम्बदयितः ॥ ५२ ॥

योः शरीरसुवर्णयोरिह संसाराऽऽपणे विनिमयोऽन्योन्यदानं वणिग्व्यवहार इतिः यावत् ॥ ४९ ॥

शिवेति । हे प्रभो मूढः शिवनामायं मम सूनुः पुत्रो नैव । यतो हेतो जनकाज्ञापरः पुत्रः । असौ तादृशो नैव ॥ ५० ॥

अग्रे कर्तव्यं स्वयमेवाह । वीरानिति । हे सखे हे मित्र । त्वद्धितावह एवाहमिति भावः । त्वं दुर्विषहान् दुर्धर्षान् युक्तान् एकचित्तान् अतिदुर्जयान् सन्नद्धान बद्धपरिकरान् वीरान् संप्रेष्य मूढं शिवं बध्वाऽचिरतः शीघ्रमानय ॥ ५१ ॥

स्ववचने सत्यत्वापादनार्थं ब्राह्मणभोजनं प्रतिजानीते । समानीत इति । सांबदयितः सांबो महादेवो दयितः प्रियो यस्य सांबभक्तोऽहं जनानां समूहो जनता अखिला संपूर्णा या जनता तस्यास्तापं करोतीति तापकरणः । कर्तरि ल्युट् । तस्मिन् अखिलजनतातापकरणे धर्तुं योग्ये इति भावः । यद्वा । अखिलजनतातापस्य करणे साधनीभूते । रणे संग्रामे अशूरे सुसाध्य इति भावः । यतोऽधीरे धैर्यरहिते तस्मिन् शिवे समानीते धृत्वा आनीते सति ख्यातान् प्रख्यातान् ज्ञानिन इति यावत् । दश च तानि शतानि सहस्रमित्यर्थः । तस्य शतं लक्षसंख्यान् द्विजान् विप्रान् दधि च सिता शर्करा पायसं पयोविकारस्तैर्युतैरन्नैस्तृप्तान् करिष्ये इति तव पुरो वच्मि प्रतिजाने । एवं यवनाधिपतोषार्थमुक्तं । शिवपित्रा यवनाधिपप्रतारणार्थं उक्तोऽर्थो व्याख्यातः । श्लेषेण निबद्धो वास्तवोऽर्थो व्याख्यायते । सांबदयितः सांब एव मयि कृपां करिष्यतीति भावः । अहं खिलाऽसंपूर्णा या जनता तस्यास्तापकः रणः संग्रामो यस्य तया न भवतीति नाखिलजनतातापकरणस्तस्मिन् । न अर्थस्य न शब्दस्य सुप्सुपेति समासः । अरणे रक्षके शूरे वीरे यद्वा रणे संग्रामे शूरे दुःसाध्ये इति भावः । यतो धीरे तस्मिन् शिवे मा आनीते सति न धृते सतीत्यर्थः । निषेधार्थो

*. 'पुत्रोयतोऽयम्' पा० भे०

इत्थं विचिन्त्य मेधावी प्रातः सदसि वीरराट् ॥
वीरानाहूय सर्वांस्तानिदं वचनमब्रवीत् ॥ ३ ॥
यदर्थं पूजिता यूयं धनभूषणवाहनैः ॥
वस्त्रादिभिश्च समयस्तस्यायं समुपस्थितः[1] ॥ ४ ॥
पण्डितं च वरं शूरं पूजयन्ति नृपाः[2] सदा ॥
सभायां रणभूमौ च जेतायमिति धीयुताः ॥ ५ ॥
तस्मिन्नुपागते काले वीरः[3] पण्डितमान्यपि ॥
पराङ्मुखो यदि भवेद्धिगस्तु नटवेषिणम् ॥ ६ ॥
पाण्डित्यं चापि शूरत्वमपरीक्ष्य वृथास्य यः ॥
सर्वदार्चति तं जाल्मं भूमिपालात्मजं च धिक् ॥ ७ ॥

न्यतरेण हन्तव्यो मारणीयः । हन्तेः कर्मणि तव्यत् । हि यस्मादसौ यक्ष्मेव राजयक्ष्मेव परितः पुष्टो बद्धमूलः सन् दुःखेन चिकित्सितुमुन्मूलयितुं शक्यो दुश्चिकित्स्यो जायते भवति ॥ २ ॥

इत्थंविचिन्त्येति । इत्थं श्लोकद्वयोक्तप्रकारेण विचिन्त्य प्रातः । प्रातरित्यनेन रात्रौ जागरोगम्यते । सर्वान् वीरानाहूय इदं वक्ष्यमाणं वचनमब्रवीत् ॥ ३ ॥

यदर्थमिति । यूयं धनवाहनभूषणैर्वस्त्रादिभिश्च यस्मै कार्यायेति यदर्थं पूजिताः स्य तस्य कार्यस्यायं समयः कालः समुपस्थितः प्राप्तः ॥ ४ ॥

पण्डितमिति । अयं पण्डितो वीरश्च सभायां रणभूमौ च जेता नयतीति जेता । कर्तरितृच् । इति या धीस्तया युता नृपाः । वरं श्रेष्ठं पण्डा बुद्धिः संजाता यस्य तं । तदस्य संजातमित्यादिना इतच् । पण्डितं विद्वांसं शूरं वीरं च सदा पूजयन्ति ॥ ५ ॥

तस्मिन्निति । वीरः आत्मानं पण्डितं मन्यतेऽसौ पण्डितमानी । आत्ममाने खश्चेति चकाराण्णिनिः । तस्मिन् काले जयकाले प्राप्ते सति यदि पराङ्मुखं यस्य स तथोक्तः । भवेत्तर्हि नटस्य वेषो नटवेषः सोऽस्त्यस्य तं धिक् धिक्कारोऽस्तु । धिक् शब्दयोगे द्वितीया । उभसर्वतसोःकार्याधिगुपर्यादिषु त्रिषु । द्वितीयाम्रेडितांतेषु ततोऽन्यत्रापि दृश्यते ॥ ६ ॥

पाण्डित्यमिति । यो भूपतिरस्य पण्डितस्य वीरस्य च पाण्डित्यं पण्डितस्य भावः पाण्डित्यं पण्डितत्वं । गुणवचनब्राह्मणादिभ्यः कर्मणि चेति ष्यञ् । वीरस्य भावो वीरत्वं । तस्यभावस्त्वतलाविति त्वः । अपरीक्ष्य अदृष्ट्वा तं पण्डितं वीरं च सर्वदा वृथा अर्चति पूजयति तं जाल्मं असमीक्ष्यकारिणं पूजयति । जाल्मोऽसमीक्ष्यकारी स्यात् इत्यमरः । भूमिपालस्य आत्मजं सुतं च धिक् ॥ ७ ॥

1. ' समुपागतः ' पा० मे० । 2. ' नराः ' पा० मे० । 3 ' शूरः ' पा० मे० ।

विद्याशूरं दानशूरं रणशूरं च या सुतम् ॥
सूते सा पुत्रिणी नान्या पुत्रवत्यपि पुत्रिणी ॥ ८ ॥
किमत्र बहुनोक्तेन शृणुत प्रकृतं भटाः ॥
यो वीरसूसुतः सद्यः स एवायतु मेऽग्रतः ॥ ९ ॥
गृहीत्वा वीटिकामेतां गत्वा धृत्वा च तं शिवम् ‡ ॥
बद्ध्वा बाहुयुगे पाशैरानयत्विह मद्रिपुम् ॥ १० ॥
इत्थं ब्रुवाणे यवनाधिपे ते चिन्ता-ज्वराक्रान्ततरा बभूवुः ॥
ततः सभायामुदतिष्ठदग्रे भटाग्रणीर्धर्मधुरंधराख्यः ॥ ११ ॥
कृतकार्यो भवेयं चेद्दर्शयिष्यामि वो मुखम् ॥
नोचेद्यास्यामि काकानां श्वेतानां वसतिं भटाः ॥ १२ ॥
इत्युक्त्वायुतसंख्याकवाजिस्थादिपुरःसरः ॥
यत्नैः पदातिभिर्युक्तो भेरीमुद्घोषयन्ययौ ॥ १३ ॥

विद्याशूरमिति । या अङ्गना विद्यायां शूरः तं वा दानशूरं वा रणशूरं वा सुतं पुत्रं सूते प्रसवति सा स्त्री पुत्रिणी । अन्या पुत्रवत्यपि पुत्रिणी न ॥ ८ ॥

किमत्रेति । हे भटा अत्र शिवभूपहननविचारे बहुना उक्तेन किं न किंचिदित्यर्थः । प्रकृतं प्रस्तुतं शृणुत । या वीरं सूते सा वीरसूः तस्याः सुतः पुत्रः लोकोक्तिरियं स एव । सद्यः तत्कालं । सद्यःपरुदित्यनेन निपातनं । मे अग्रतः अग्रभागे सार्वविभक्तिकस्तसिः । आयातु ॥ ९ ॥

गृहीत्वेति । स एतां हस्ते धृतामिति भावः वीटिकां नागवल्लीदलनिर्मितां गृहीत्वा ततो गत्वा मद्रिपुं शिवं धृत्वा बाहुयुगे पाशैर्बद्ध्वा आनयतु । विधौ लोट् । सप्राण एव आनेय इतिभावः ॥ १० ॥

इत्थमिति । ते भटा यवनाधिपे अनेन प्रकारेण इत्थं । इदमस्थमुः । पूर्वोक्तप्रकारेण ब्रुते असौ ब्रुवाणस्तस्मिन् सति चिन्तैव ज्वरस्तेन आक्रान्ततरा अभूवन् । ततस्तदनन्तरं धर्मधुरंधराख्यः भटाग्रणीः सभाया अग्रे अग्रदेशे उदतिष्ठत् उत्थितवान् ॥ ११ ॥

कृतकार्यइति । हे भटा अहमिति शेषः कृतं निष्पादितं कार्यं येन तथोक्तः । भवेयं चेत् वो युष्मान् मुखं दर्शयिष्यामि । दृशेर्ण्यन्ते अण्यन्तावस्थायां कर्तुर्ण्यन्तावस्थायां कर्मत्वं । वैपरीत्ये प्रतिज्ञामाह । नो चेत् कृतकार्यत्वाभावश्चेत् श्वेतानां काकानां वसतिं यास्यामि गमिष्यामि । इयं लोकोक्तिः ॥ १२ ॥

इत्येति । अयुतं दशसहस्राणि संख्या येषां ते अयुतसंख्याकाः । शेषादिभाषायां कप् आशेऽन्यतरस्यामिति विकल्पाद्ध्रस्वाभावः । ते च ते वाजिस्थादिनः अ-

‡ 'रिपुम्' पा० भे० ।

राजदुर्गोपत्यकायां तस्थौ वर्षद्वयं स हि ॥
शिवभूपोऽधित्यकायामासीदानन्दसंयुतः ॥ १४ ॥

राजदुर्गशिखरादुपागतैर्यन्त्रमुक्तगुरुगोलकैर्हताः ॥
धर्मधूर्वहभटा उपाययुः प्रायशो यमनिकेतनं परे ॥ १५ ॥

धान्यदार्वादिमार्गो मे रुद्धोऽनेन दुरात्मना ॥
किमत्र प्रतिकर्तव्यमिति राजा विचिन्तयन् ॥ १६ ॥

रात्रावागत्य बहुभिर्भटैर्युद्धविशारदैः ॥
सुप्तेषु तस्य सर्वेषु शिरोऽवृश्चत्कृपाणवान् ॥ १७ ॥

श्वारोहास्तेषां । पुरःसरति गच्छति इति तथोक्तः । यद्वा । अयुतसंख्याकवाजिमादिनः पुरःसरा यस्येति बहुव्रीहिः । यन्त्रैः पदातिभिस्तद्रक्षकैर्युक्तः स भेरीं दुन्दुभिं । भेरीस्त्री दुन्दभिः पुमानित्यमरः । उद्घोषयन् सन् ययौ ॥ १३ ॥

राजदुर्गेति । स धर्मधुरंधरः राजदुर्गस्य राजदुर्गाख्यस्य पर्वतस्य उपत्यकायामासन्नभूमिकायां वर्षद्वयं तस्थौ हि निश्चयेन । अकर्मकधातुभिर्योगे देशः कालो भावो गंतव्योध्वा च कर्मसंज्ञक इत्यनेन वर्षद्वयमित्यस्य कर्मत्वं । शिवभूपः अधित्यकायामूर्ध्वभूमिकायां आनन्देन संयुत आसीत् । उपत्यकाद्रेरासन्नाभूमिरूर्ध्वमधित्यकेत्युभयत्राप्यमरः ॥ १४ ॥

राजदुर्गेति । धर्मधूर्वहस्य धर्मधुरंधरस्य भटाः शिवभूपस्येति शेषः परे शत्रवः । अस्य परशब्दस्य सर्वनामता तु देशवाचकस्य परशब्दस्य शत्रौ औपचारिकः प्रयोगः । तदुक्तं मनोरमायां । देशवाचितया व्यवस्थाविषयेरेव परापरशब्दयोरुपचाराच्छत्रौ प्रतिवादिनि च प्रयोगः । राजदुर्गस्य शिखरात् सानुप्रदेशात् उपागतैः प्राप्तैः यन्त्रेभ्यो मुक्ता ये गुरुगोलकास्तैर्हताः सन्तः प्रायशो बाहुल्येन यमनिकेतनं यमगृहं उपाययुर्जग्मुः । अनवधानस्थितया यन्त्रगोलकाघातमृताः स्वर्गदौर्लभ्यात् यमगृहं बहवो गताः । केचित्तु युध्यमानाः स्वर्गमपि ययुरितिभावः ॥ १५ ॥

धान्यदार्वादीति । दुरात्मना अनेन धर्मधुरंधरेण धान्यं च दारूणि च आदिर्येषां तेषां मार्गः आनयनमार्गः रुद्धः अत्र प्रतिरोधविषये किं प्रतिकर्तव्यं का प्रतिक्रियेति विशेषेण चिन्तयन् कृपाणः असिरस्यास्तीति कृपाणवान् राजा तस्य शिरः अवृश्चदिति द्वितीयश्लोकेनान्वयः १६ ॥

रात्राविति ॥ स शिवभूपो रात्रौ सर्वेषु सुप्तेषु सत्सु युद्धे विशारदैः कुशलैर्भटैः सहागत्य तस्य धर्मधुरंधरस्य शिरः अवृश्चत् छिन्नवान् ॥ १७ ॥

---

३. 'यद्वा' पा० भे० । ५. 'व्यचिन्तयत्' पा० भे० । ६. 'कृपाणभृत्' पा० भे० ।

हतावशिष्टास्ते वीरा आगत्य यवनाय तत् ॥
वृत्तं सर्वं समाचख्युः शिवभूपतिसंभवं ॥ १८ ॥
न साहाय्यं न वा शौर्यं न कोशो न बहुज्ञता ॥
वृद्धेः क्षयस्य भूपानां दैवमेव हि कारणम् १९ ॥
इत्युक्त्वापि पुनः सोऽयं स्वीयमोसं बलाधिकम् ॥
अब्दुल्लाख्यं यवनपमानीयोवाच चारदृक् ॥ २० ॥
सर्वेषु वीरेषु बलाधिकस्त्वं मतोऽसि मे वीरवराग्रगण्यः ॥
अतःस्वसेनासहितश्च यत्नैः प्रयाहि सार्धं शिवनामभूपम् ॥ २१ ॥

हतावशेषाइति । हतेभ्यः अवशिष्टा हतावशिष्टास्ते वीरा आगत्य शिवभूपतेः सकाशात् संभवं उत्पन्नं धर्मधुरंधरवधादिकं सर्वं वृत्तं यवनाय समाचख्युः कथयामासुः ॥ १८ ॥

एवं श्रुत्वा पराक्रमापेक्षया दैवस्य प्राबल्यं प्रतिपादयति । नेति । भूपानां राज्ञां वृद्धेः । सहायस्य भावः साहाय्यं सहायता । गुणवचनेत्यादिनाप्यत्र् । कारणं न । शूरस्य भावः शौर्यं शूरत्वं कारणं न । कोशः अर्थराशिः । कोशोस्त्रीकुड्मलेखड्गपिधानेर्थौघदिव्ययो रिति शाश्वतः । कारणं न । बहुज्ञत्वं बहुत्वज्ञं कारणं न । किन्तु दैवमेव कारणं । दैवं दिष्टंभागधेयं हेतुर्ना कारणंबीजमित्युभयत्राप्यमरः । तथा क्षयस्य नसाहाय्यं सहायस्याभावः न भयस्य न शब्दस्य सुप्सुपेतिसमासः । एवमग्रेऽपि वाऽन्वयता । अशौर्यमिति छेदः अशौर्यं शूरत्वाभावः वा न कोशः कोशाभावः वा न बहुज्ञता मूर्खत्वं कारणं न किन्तु दैवमेव कारणं हि निश्चयेन ॥ १९ ॥

इत्यादि । चार एवदृष्टिर्यस्य चारदृक् । तदुक्तं । गावः पश्यन्ति गन्धेन वेदैः पश्यंति वै द्विजाः । चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः । इति । चारद्वारा शिवभूपस्य बहुधा पराक्रमश्रवणाज्ज्ञात इति भावः । सोऽयं विजयपुराधिराजिति पूर्वोक्तप्रकारेण उक्त्वापि दैवप्राबल्यं प्रतिपाद्यापि पुनर्दैवपरीक्षार्थं एव स्वस्य अयं स्वीयः तं । वृद्धात्मजः । वीरं बलेन अधिकं धुरंधरमित्यर्थः । अब्दुल्लाख्यमानीय उवाच उक्तवान् ॥ २० ॥

सर्वेति । सर्वेषु वीरेषु मध्ये बलेनः शरीरशक्त्या अधिकः उत्कृष्टः असि । अतो वीरवरास्तेषां अग्रे गण्यतेऽसौ वीरवराग्रगण्यः । कर्मणियत् । यद्वा । धनगणं लब्धा इति सूत्रेण यत्प्रत्ययः । असि अतो मे मतो मान्योऽसि । मतिबुद्धिपूजार्थेभ्यश्च इति वर्तमानेक्तः । क्तस्य च वर्तमाने इति षष्ठी । अतः स्वसेनया सहितः सन् शिवनामभूपं प्रयाहि ॥ २१ ॥

---

१. 'हतावशेषाः' पा० भे० । ८ 'वृत्त' पा० भे० । ९. 'वीर' पा० भे० । १०. 'मतःसमे' पा० भे० ।

तथेति संभाष्य स वाजिसादिसहस्रयुक्तः पदगैश्च वीरैः ॥
यन्त्रैरुपेतो घनगर्जिताढ्यैः प्रकम्पयन् भूमितलं प्रतस्थे ॥२२॥
यतो यतो याति ततस्ततोऽसौ विष्ट्या निगृण्हन् जनतां बलेन ॥
धनं तृणं काष्ठचयं च धान्यं हरन्प्रजानां[11] प्रययौ दुरात्मा ॥ २३ ॥
खट्वाशयानान्यत्रनान्विरक्तान् मद्येन मांसेन च पुष्टदेहान् ॥
वृत्तिं श्रितानाजगरीं नितांतं बह्वन्नभक्षान्मलमूत्रदिग्धान् ॥
साधून् स मत्वा दश तान्पुरस्तात्कृत्वाधिरूढान् द्विजवर्यवाहून् ॥
ययौ प्रजापीडनकृत्तरस्वी शिवप्रदेशं तरुसंघगुप्तम् ॥ *

सामैव पूर्वमचिरेण रिपौ प्रयोज्य-
मेवं विचिन्त्य यवनः स दयालुसंज्ञम् ॥
विप्रं स्वकार्यनिरतं रहिते जनेन
स्थाने जगाद वचनं वदतां वरिष्ठः ॥ २४ ॥
नानाविधैस्तरुवरैर्गिरिदुर्गमेत-
दाच्छन्नमत्र पदगैः सततं स आस्ते ॥
यानं गजादिसहितस्य सुदुष्करं तद्
गत्वा त्वया स वचनैरनुनेय इत्थम् ॥ २५ ॥

तथेति । वाजिसादिनां सहस्राणि तैर्युक्तो वीरैः पदगैः । घनस्येव गर्जितं तेन आढ्यैर्यन्त्रैश्च उपेतः असौ यवनः तथेति तथास्तु इति संभाष्य उक्त्वा भूमितलं प्रकंपयन् सन् प्रतस्थे ॥ २२ ॥

यत इति । दुरात्मा दुष्टचित्तोऽसौ यतो यतो यस्मात् यस्मात् ग्रामात् याति अग्रे गच्छति ततस्ततो ग्रामात् । नित्यवीप्सयोरिति वीप्सायामुभयत्रापि द्वित्वं । प्रजानां धनं तृणं काष्ठचयं धान्यं च हरन् तद्वाहनार्थं जनतां जनसमूहं विष्ट्या [ अमूल्यकर्मकरणे विष्टिरिति मुकुटः ] निगृण्हन् पीडयन् सन् । गृण्हातेः शतरिश्नाभ्यस्तयोरात इत्यातोलोपः । ययौ ॥ २३ ॥

सामैवेति । वदतां वक्तॄणां मध्ये वरिष्ठः श्रेष्ठः स यवनो रिपौ शत्रौ पूर्वं सामैव सांत्वमेव अचिरेण शीघ्रं प्रयोज्यं इत्थं अनेन प्रकारेण विचार्य स्वस्य कार्ये निरतं दयालुसंज्ञं विप्रं जनेन रहिते स्थाने एकान्ते वचनं जगाद ॥ २४ ॥

नानेति । हे विप्रेति शेषः । एतत्पुरोवर्त्ति गिरिदुर्गं नानाविधैरनेकप्रकारैस्तरुवरैस्तरुश्रेष्ठैराच्छन्नं व्याप्तं । स शिवभूपः अत्र गिरिदुर्गे सततं निरन्तरं आस्ते न कदाचित् बहिर्निर्गच्छतीति भावः । गजा आदिर्येषां ते गजादयस्तैः सहितस्य

---

११. 'जनानां' पा० भे० । * इदं युग्मं एकस्मिन्नेव पुस्तके दृश्यते नान्येषु ।

विजयाधिपतिर्वीरो गुणान् बहुविधांस्तव ॥
श्रुत्वा स[12] तुष्टधीर्मेने त्वया संधिर्हितः[13] सह ॥ २६ ॥
तेन त्वत्संधिकामेन यवनो यो विसर्जितः ॥
स आगतोऽस्ति निकटे तद्वचःश्रुणु भूपते ॥ २७ ॥
नर्मदातीरमारभ्य रामनाथावधि त्वया ॥
राज्यं विधेयं सेनेयं मदीया स्यात्तवानुगा ॥ २८ ॥
इत्याज्ञा यवनेशस्य विजयाधिपतेस्त्वयि ॥
सार्वभौमाज्ञया काष्ठां दक्षिणामधितिष्ठतः ॥ २९ ॥
एकाकी त्वं पुरो याहि मयाप्यागम्यते तथा ॥
आवयोः संगमः प्रेष्ठो[14] भविता चिरतः सखे ॥ ३० ॥

मे यानं गमनं सुतरां दुष्करं तत्तस्मात् त्वया गत्वा स शिवभूप इत्थं वक्ष्यमाणप्रकारेण अनुनेयः प्रार्थनीयः ॥ २५ ॥

विजयाधिपतिरिति । वीरो विजयस्य पुरस्य अधिपतिस्तव बहुविधान् बहुप्रकारान् गुणान् श्रुत्वा । तुष्टा धीर्यस्य तथोक्तः सन् त्वया सह सन्धिर्मैत्री हितो युक्त इति मेने मन्यते स्म ॥ २६ ॥

तेनेति । तव सन्धिः त्वत्सन्धिस्तं कामयतेऽसौ तेन त्वत्सन्धिकामेन तेन विजयपुराधिपेन यो यवनो विसर्जितः प्रेषितः स निकटे समीपे आगतोऽस्ति । हे भूपते तद्वचः तद्वाक्यं श्रुणु ॥ २७ ॥

नर्मदेति । हे भूप त्वया नर्मदाया नद्यास्तीरमारभ्य रामनाथो रामेश्वरः सोऽवधिर्यया तया राज्यं विधेयं कर्तव्यं । इयं अधुना प्रेषिता सेना तव अनुगच्छतीति अनुगा स्यात् । कर्तृकर्मणोः कृतीति षष्ठी ॥ २८ ॥

इत्याज्ञेति । हे नृप सार्वभौमस्य इन्द्रप्रस्थाधिपस्याज्ञया दक्षिणां काष्ठां दिशं । दिशस्तुककुभः काष्ठा इत्यमरः । अधितिष्ठत आस्थितस्य सार्वभौमस्यापि संमतिरस्तीति भावः । अधिपूर्वात्स्थाधातोःशतरिनिर्देशः । अधिशीङ्स्थासां कर्मेतिकर्मत्वं । यवनेशस्य विजयपुराधिपतेः त्वयि त्वद्विषये इति पूर्वोक्तप्रकारेण आज्ञा अस्तीति शेषः ॥ २९ ॥

अवशिष्टं वक्तव्यांशमाह । एकाकीति । हे सखे त्वं पुरः अग्रभागे एकाकी असहायः । एकादाकिनिच्चासहायेइति आकिनिच् । याहि आगच्छ । मयापि तथा एकाकिनैव आगम्यते । आवयोः नौ अतिशयेन प्रिय इतिप्रेष्ठः । प्रेयानप्रियशब्दादिष्ठनिप्रियस्थिरेत्यादिनाप्रियशब्दस्यप्रादेशः । सङ्गमः समागमः अचिरतः शीघ्रं भविता ।

१२. 'स्त्वायितुः' पा० भे०. । १३. 'संधिर्विधीयताम्' पा० भे० । १४. 'प्रीत्या' पा० भे० ।

इत्थं तथा भूमिदेव गत्वा तत्र सविस्तरम् ॥
चातुर्येण वचो ब्रूहि यथासौ मोहितोभवेत् ॥ ३१ ॥
संगमे भुजयोर्मध्ये धृत्वा पेष्टास्म्यहं रिपुम् ॥
इदं गुह्यं त्वयान्यत्र नैव वाच्यं कदाचन ॥ ३२ ॥
उक्त्वा तथेति गत्वासौ शिवभूपस्य सन्निधिम् ॥
सर्वं तद्वर्णयामास सङ्गमे भुजयोर्विना ॥ ३३ ॥
अत्रोत्तरं प्रवक्ष्याम इत्युक्त्वान्तर्गतो नृपः ॥
सर्वान्मन्त्रिण आहूय विप्रवाक्यमवर्णयत् ॥ ३४ ॥
सचिवसंमतिमाशु समेत्य तं तरुतलश्रितमाश्रितपालकः ॥
[15]समवदत्प्रजपंतमजं स्रजा करगया स्फटिकाक्षसमुत्थया ॥ ३५ ॥
अदृष्टं दृश्यते स्पष्टं विप्र मे सुफलप्रदम् ॥
सर्ववर्णगुरौ विप्रे त्वयि माध्यस्थ्यमत्र यत् ॥ ३६ ॥

अनद्यतने लुट् । श्व आगन्तव्यमिति भावः ॥ ३० ॥

इत्थमिति । हे भूमिदेव ब्राह्मण त्वं तत्र गिरिदुर्गे गत्वा इत्थं पूर्वोक्तं वचश्चातुर्येण सविस्तरं तथा ब्रूहि यथासौ राजा मोहितो भवेत् ॥ ३१ ॥

समागमानन्तरं कर्तव्यार्थमाह । सङ्गम इति । अहं सङ्गमे समागमे सति रिपुं राजानं भुजयोर्मध्ये धृत्वा पेष्टास्मि चूर्णयिष्यामि । त्वयेदं गुह्यं अन्यत्र नैव वाच्यं नैव वक्तव्यं न प्रकटितव्यमिति यावत् ॥ ३२ ॥

उक्त्वेति । असौ ब्राह्मणः तथेति तथास्तु इति उक्त्वा शिवभूपस्य सन्निधिं समीपप्रदेशं गत्वा सङ्गमे भुजयोरित्यर्धश्लोकार्थं विना तत्सर्वं पूर्वोक्तं वर्णयामास शशंस ॥ ३३ ॥

अत्रेति । नृपः अत्र त्वद्वचने उत्तरं प्रवक्ष्यामः कथयिष्यामः । सचिवाभिप्रायेणोत्तरदानार्थं बहुवचनं । इति उक्त्वा अन्तः गृहमध्यं गतः सन् सर्वान् मन्त्रिण आहूय विप्रवाक्यं अवर्णयत् ॥ ३४ ॥

सचिवेति । आश्रितानां पालकः स शिवः सचिवानां संमतिं समेत्य प्राप्य तरोः न्यग्रोधस्य तलं श्रितं स्थितं । द्वितीयाश्रितत्यादिना समासः । करगया करस्थया स्फटिकाक्षेभ्यः स्फटिकमणिभ्य उत्थया उत्पन्नया स्रजा मालया अजं विष्णुं प्रकर्षेण जपन्तं भगवद्भक्तमित्यर्थः । तं ब्राह्मणं अवदत् उक्तवान् ॥ ३५ ॥

अदृष्टमिति । हे विप्र मे अदृष्टं दैवं सुफलं प्रददातीति सुफलप्रदं स्पष्टं असंदिग्धं दृश्यते भासत इत्यर्थः । यद्यस्मात् हेतोः सर्ववर्णानां गुरौ विप्रे त्वयि अत्र अस्मिन् यवनसंगमनिरूपे कार्ये मध्यस्थस्य कर्म माध्यस्थ्यं अस्तीति शेषः ॥ ३६ ॥

१५. 'तमवदत्' पा० भे० ।

ब्रह्मंस्तत्कपटं किंचिद्वर्तते यदि तद्वद ॥
अहं सराज्यस्त्वद्दासः सत्यमस्मि द्विजाधिप ॥ ३७ ॥
एवं वदति भूपाले द्विजोऽश्रुपरिपूरितः ॥
सर्वं शनैस्तत्कपटं कथयामास विस्तरात् ॥ ३८ ॥
राजा प्रोवाच हे विप्र तत्राप्यस्ति प्रतिक्रिया ॥
त्वमद्य गत्वा तं ब्रूहि भविता नौ समागमः ॥ ३९ ॥
इत्युक्त्वा तं नमस्कृत्य संपूज्य च धनादिभिः ॥
ययौ राजा दयालुश्च प्रायात्तं यवनाधिपम् ॥ ४० ॥
मनोनुकूलं सकलं कृतं त्वद्धितमिच्छता ॥
मयेति विप्रः प्रोवाच यवनोऽपि जहर्ष च ॥ ४१ ॥
पूजयित्वार्चितां देवीं देवैः सुकुसुमादिभिः ॥
राजाप्यचिन्तयच्चित्ते धौर्त्यमत्र हितावहम् ॥ ४२ ॥

ब्रह्मन्निति । हे ब्रह्मन् हे ब्राह्मण । ब्राह्मणपर्यायो ब्रह्मन् शब्दः । किंचित् तस्य यवनस्य कपटं तत्कपटं वर्तते यदि अस्ति चेत् तर्हि तत्कपटं वद । हे द्विजाधिप ब्राह्मणश्रेष्ठ अहं राज्येन सहितः सराज्यः त्वद्दासः अस्मि सत्यं ॥ ३७ ॥

एवमिति । द्विजः भूपाले राज्ञि एवं पूर्वोक्तप्रकारेण वदति सति अश्रुभिः नेत्रोदकैः परिपूरितः युक्तः सन् तस्य यवनस्य तत्सर्वं कपटं संगमे भुजयोरित्यधोक्तं शनैः विस्तरात् कथयामास ॥ ३८ ॥

राजेति । हे विप्र तत्रापि तस्मिन्नपि यवननिश्चितकर्मणि प्रतिक्रिया प्रतीकारः अस्ति अतश्चिन्ता न कर्तव्येतिभावः । त्वं अद्य अस्मिन् दिने गत्वा न तु दिनान्तरे इत्यर्थः । गत्वा नौ आवयोः सङ्गमो भविता इति ब्रूहि इति राजा शिवभूपः प्रोवाच उक्तवान् ॥ ३९ ॥

इतीति । राजा इति पूर्वोक्तप्रकारेण उक्त्वा तं विप्रं नमस्कृत्य धनादिभिः आदिशब्देन वस्त्रभूषणैः संपूज्य सम्यक् पूजयित्वा ययौ स्वगृहं प्रविष्ट इत्यर्थः । दयालुश्च दयालुरपि तं यवनाधिपं प्रायात् जगाम यातेर्लङ् ॥ ४० ॥

मन इति । त्वद्धितं इच्छता मया सर्वं संपूर्णं तत् त्वदुक्तं मनसः अनुकूलं मनोनुकूलं कृतं । त्वदुक्तप्रकारेण सर्वं चातुर्येण साधितमित्यर्थः । इति विप्रः प्रोवाच । यवनोऽपि जहर्ष हृष्टवान् ॥ ४१ ॥

पूजेति । राजापि देवैः अर्चितां पूजितां । संकटसमये इतिभावः । देवीं शोभनैः कुसुमादिभिः पूजयित्वा । स्वकार्यसिद्धावानुकूल्यार्थमित्यर्थः । अत्र रात्रौ धौर्त्यं धूर्तत्वं हितं आवहतीति हितावहं हितकरं इति चित्ते अचिन्तयत् ज्ञातवान् । देवी-

१६. 'वर्णयामास' पा० भे० । १७. 'प्रागात्' पा० भे० । १८. 'तत्सर्वं' पा० भे० ।

धूर्ते तु धौर्त्यं सुधिया विधेयं[19] सदार्जवं कार्यकरं न शत्रौ ॥
ज्वरेण कट्वी रसना भवेच्चेद्धितावहा स्यात्कटुकी सिता न ॥ ४३॥
प्रतापदुर्गस्य पुरःप्रदेशे स्थलं सुविस्तीर्णमतीव रम्यं ॥
चकार भूपो यवनप्रियार्थं नानाविधैरास्तरणैरुपेतम् ॥ ४४ ॥
उल्लोचसंघैरपि तोरणैश्च मुक्ताफलानां प्रकरैरुपेतम् ॥
सुधोपलिप्तामलराजगेहसमं स चक्रे पटवेश्म तत्र ॥ ४५ ॥
सैन्यं स्वकीयं सकलं विभूषावस्त्रैः समभ्यर्च्य स सैन्यपालम् ॥
रहस्यवोचद्यवने हतेऽत्र यन्त्रप्रणादो भविता प्रतापे ॥ ४६ ॥
यदा तदा दुर्जनसैन्यसंघं कक्षं शिखीवाशु नय त्वमन्तम् ॥
यदर्चितोऽसीह विभूषणाद्यैस्तस्यैष कालः समुपागतोऽस्ति ॥ ४७ ॥

प्रसादात् इति भावः ॥ ४२ ॥

धूर्तइति । सुधिया सुबुद्धिना धूर्ते शत्रौ धौर्त्यं धूर्तत्वं सदा सर्वकालं न तु कदाचिदिति भावः । विधेयं कर्तव्यं । आर्जवं सरलता कार्यस्य करं कार्यकरं न भवतीति शेषः । आर्जवं हि कुटिलेषु न नीतिरिति कामन्दके । उक्तमर्थमर्थान्तरन्यासेन द्रढयति । रसना जिव्हा ज्वरेण कट्वी । ओतोगुणवचनादिति ङीप् । भवेच्चेत्तर्हि कटुकी कटुरोहिणी हितावहा कटुत्वनाशनी स्यात् । सिता शर्करा न । पित्तज्वरे वक्त्रस्य कटुत्वं माधवनिदाने उक्तं । प्रलापो वक्त्रकटुतेति ॥ ४३ ॥

प्रतापेति । भूपः प्रतापस्य दुर्गस्य पुरःप्रदेशे अग्रभूमौ अधित्यकायामिति यावत् । सुतरां विस्तीर्णं प्रशस्तं नानाविधैः नानाप्रकारैः आस्तरणैः उपेतं युक्तं अत एव अतीव रम्यं रमणीयं स्थलं यवनस्य प्रियायेति यवनप्रियार्थं चकार कृतवान् ॥४४॥

उल्लोचेति । स शिवभूपः तत्र स्थले उल्लोचानां वितानानां संघैः समूहैः । अस्त्री वितानमुल्लोच इत्यमरः । उपेतं युक्तं । मुक्ताफलानां मौक्तिकानां प्रकरैः समूहैः उपलक्षितैः तोरणैर्बहिर्द्वारैः । तोरणोऽस्त्री बहिर्द्वारमित्यमरः । उपेतं सुधया चूर्णेन उप समंताल्लिप्तं अमलं यद्राजगेहं प्रासादः तेन समं तुल्यं पटवेश्म वस्त्रगृहं कृतवान् ॥ ४५ ॥

सैन्यमिति । स शिवभूपः सकलं संपूर्णं स्वस्येदं स्वकीयं । स्वशब्दादिदमर्थेछप्रत्यये कुगागमः । सैन्यं सेनां विभूषाश्च वस्त्राणि च तैः । अभ्यर्हितत्वात्विभूषाशब्दस्य पूर्वनिपातः । समभ्यर्च्य सम्यक् पूजयित्वा सैन्यंपालयतीति सैन्यपालस्तं सेनापतिं रहसि एकांते इत्याह । इति किं । अत्र वसनगृहे यवने हते सति यदा प्रतापदुर्गे यन्त्रस्य प्रणादः शब्दः भविता तदेत्युत्तरश्लोकेनान्वयः ॥ ४६ ॥

यदेति । तदा त्वं दुर्जनस्य सैन्यस्य संघं शिखी अग्निः कक्षमिव तृणमिव अन्तं

---

१९. 'प्रयोज्यं' पा० भे० । २०. अयंश्लोकःक्वचिन्नदृश्यते. ।

अहं त्वदीयोऽस्मि सराज्यकोशः[21] कालो बलीयान् कुटिलो ममायम्॥
शत्रुर्महान्भीमबलोऽहमल्पो दुर्गैव देवी शरणं न चान्यः ॥ ४८ ॥
तस्याः प्रसादादहमेनमद्य निहन्मि चिन्ता न हि काचिदत्र॥
तद्वाहिनीं त्वं शमयाशु वीर वीरैर्भटैः पातितवीरसंघैः ॥ ४९ ॥
इत्थं स सेनाधिपतिं प्रबोध्य हस्ताङ्गुलौ व्याघ्रनखं निबध्य ॥
वामे करे सूक्ष्मतरां च शस्त्रीं निधाय देवीं प्रणमन्प्रयातः ॥५०॥
हे देवि देववरवन्दित[22]पाद[23]पीठे सर्वाश्रिते[24] श्रितजनावनहेतुदेहे ॥
बद्धो मया परिकरो विनिहन्तुमेनं दुष्टं जगज्जननि तं सफलं कुरुष्व॥५१॥

नाशं नय प्रापय । इदं सैन्यविनाशनं त्वयैवावश्यं कर्तव्यमिति सहेतुकं प्रतिपादयति । इह मदीये कुले यत् यस्मात् कार्यात् हेतोः विभूषणाद्यैः अर्चितः पूजितोऽसि तत् कार्यस्य शत्रुहननरूपस्य अयं कालः समुपागतः प्राप्तोऽस्ति ॥ ४७ ॥

अहमिति । राज्यं च कोशश्च राज्यकोशौ ताभ्यां सहितः सराज्यकोशः अहं त्वदीयोऽस्मि । अस्मिन् रिपौ हते मदीयः अर्थराशिः मदीयं राज्यं मदीयः अयं देहोऽपि त्वदधीनः एव स्यादिति भावः । अयं वर्तमानः अतिशयेन बली इति बलीयान् दुर्धरः । द्विवचनविभज्योपपदादिना ईयसुन् । मम मत्संबद्धः कालः कुटिलः विपरीतः दृश्यते इति शेषः । कालवैपरीत्ये हेतुमाह । भीमं भयंकरं बलं शक्तिः सैन्यं वा यस्य तथोक्तः शत्रुर्महान् उच्चशरीरः । अहं अल्पशरीरोऽस्मि । दुर्गैव देवी शरणं रक्षणकर्त्री । शरणं गृहरक्षित्रोरितिविश्वः । अन्यो न च ॥ ४८ ॥

तस्या इति । अहं तस्या देव्याः प्रसादात् । एनं शत्रुं अद्य निहन्मि मारयामि । अत्र मारणविषये काचित् चिन्ता न । हीति निश्चये । हे वीर त्वं तस्य वाहिनीं सेनां ध्वजिनी वाहिनी सेना पृतनानीकिनी चमूरित्यमरः । पातिताः वीरसंघाः यैस्तैर्वीरैः भटैश्च दर्शितपराक्रमाः वीराः संभावितपराक्रमाः भटास्तैः आशु शमय नाशय ॥ ४९ ॥

इत्थमिति । स शिवभूपः इत्थं पूर्वोक्तप्रकारेण सेनाधिपतिं प्रबोध्य हस्तस्य अङ्गुलौ व्याघ्रस्य नखं निबध्य धृत्वा वामे करे सूक्ष्मतरां शस्त्रीं छुरिकां । स्याच्छस्त्री चासिपुत्री च छुरिका चासिधेनुकेत्यमरः । निधाय धृत्वा देवीं दुर्गां प्रणमन् नमस्कुर्वन् सन् प्रयातः गतः ॥ ५० ॥

एकेन देवीप्रार्थनामाह । हे देवीति । देववरैः इन्द्रादिभिः पूजितं पादपीठं यस्यास्तत्संबुद्धौ हे देवि । सर्वैः जनैः श्रिते सेविते । यद्वा । सर्वाश्रिता सर्वाश्रिता तत्संबुद्धौ हे सर्वाश्रिते । द्वितीयाश्रितेति समासः । या देवी सर्वभूतेषु विष्णुमायेति शब्दिता इत्यादिना सर्वभूते स्थितत्वं मार्कण्डेयपुराणे देवीमाहात्म्ये प्रतिपादितं । श्रितजनस्य अवन

२१. 'कोशौ' पा० भे० । २२. 'पूजित' पा० भे० । २३. 'पद्म' पा० भे० । २४. 'सर्वाश्रिते' पा० भे० ।

नात्युच्चो नाति नीचः कमलदलनिभाक्षोऽतिपीनोन्नतांसो ॥
गौराङ्गो गूढजत्रुर्मनसि च जनयन्[25] योषितां कामदेवम् ॥
निर्भीकः सिंहयानोऽरुणकरचरणः कण्ठभूषाधिभूषो
मृद्वंघ्यानद्धरक्ताजिनविहितपदत्राणकोऽसौ प्रतस्थे ॥ ५२ ॥
भटाग्रणीभ्यां रणदुर्जयाभ्यां सपट्टिशाभ्यां सहितो भटाभ्याम् ॥
ययौ नृपो धैर्यधरस्तरस्वी निजप्रपालो ललितांबरोऽसौ ॥ ५३ ॥
लोलालम्बितनीललोहितकचव्राताधमूर्धाधृता-
रक्तोष्णीषपटो नटोऽतिविततश्मश्रूणि संमार्जयन्[26] ॥
उच्चः स्थूलतरः सुकंचुकबृहद्भागेन भूमिं स्पृशन्
स्वान्सर्वान्यवनान्विहाय पुरतस्तूर्णं तथासौ ययौ ॥ ५४ ॥

रक्षणं तस्य हेतुः देहः अवतारो यस्यास्तयोक्त । मया एनं दुष्टं हन्तुं परिकरः उपक्रमः । उपक्रमः परिकर इति हैमः । बद्धः कृतः । यद्वा । परिकरो नाम उत्तरीयेण दृढं कटिप्रदेशवेष्टनं तं अमुं परिकरं सफलं अमोघं कुरुष्व ॥ ५१ ॥

अथ यत्राकृतिस्तत्र गुणा वसन्तीति स्मरणादस्याकृतिवर्णनपुरःसरं प्रस्थानमाह । नेति । न अति अत्यन्तं उच्चः नात्युच्चः । न अर्थस्य न शब्दस्य सुप्सुपेति समासः । एवमग्रेऽपि । नअति अत्यन्तं नीचस्तयोक्तः । कमलस्य दले पत्रे ताभ्यां निभे तुल्ये अक्षिणी यस्य तयोक्तः । बहुव्रीहौ सक्थ्यक्ष्णोरित्यादिना समासान्तःषच् । अति अत्यन्तं पीनौ पुष्टौ अंसौ स्कन्धौ यस्य तयोक्तः । गौराणि अङ्गानि अवयवा यस्य तयोक्तः । करौ च चरणौ च करचरणं । आरक्तं करचरणं यस्य तयोक्तः । कण्ठभूषां अधिभूषयतीति कण्ठभूषाधिभूषः । मूलविभुजादित्वात्कः । अत एव योषितां मनसि कामदेवं विशेषेण जनयति विजनयन् । लटः शत्रादेशः । एतैर्विशेषणै राजचिन्हानि प्रदर्श्य प्रकृते युक्तं पराक्रमप्रतिपादकं वेषमाह । निर्गता भीर्यस्मात् स निर्भीकः । शेषाद्विभाषेति कप् । भीशब्दस्य स्त्रीप्रत्ययान्तत्वाभावाद्ध्रस्वोन । सिंह इव यानं गमनं यस्य तयोक्तः ।मृद्वोः अंघ्र्योः आ समन्तान्नद्धे धृते रक्तेन अजिनेन विहिते ये पदत्राणे उपानहौ ते येन तयोक्तः । समासान्तः कप् । असौ शिवः प्रतस्थे ॥ ५२ ॥

भटाग्रणीभ्यामिति । रणे संग्रामे दुर्जयाभ्यां अत एव भटेषु अग्रणीभ्यां श्रेष्ठाभ्यां पट्टिशाभ्यां सहिताभ्यां भटाभ्यां शूराभ्यां सहितो युक्तः । धैर्यस्य धरः । पचादित्वादच् । तरस्वी बलवान् अस्मायामेधास्रजोविनिः । निजान् प्रकर्षेण पालयति इति तयोक्तः । कर्मण्यण् । ललितानि अंबराणि यस्य स शिवभूपः अग्रे ययौ जगाम ॥ ५३ ॥

लोलेति । लोलाश्चंचलाः । लोलश्चलसतृष्णयोरितिविश्वः । आ समन्ताल्लंबिता

---

२५. 'विजयन' पा० भे० २६. 'संदर्शयन' पा० भे० ।

सहस्रशः समागत्य प्रेक्षकाश्चेदमब्रुवन् ॥
अपर्वणि दिवा भूमौ शशिराहुसमागमः ॥ ५५ ॥
देवदेव जगन्नाथ भक्तानामभयङ्कर ॥
यदस्मदीयं सुकृतं तेन रक्ष नराधिपम् ॥ ५६ ॥
मत्तमातङ्गकलभयोगो भवति यादृशः ॥
तादृशोऽयं द्वयोर्योगो न विद्मोऽग्रे कथं भवेत् ॥ ५७ ॥
पातिव्रत्यं यदस्माकमाजन्मपरिपोषितं ॥
तस्य पुण्येन भगवानराजानंरक्षताद्धरिः ॥ ५८ ॥

नीलाः कृष्णा लोहिता आरक्ताः कचानां केशानां व्राताः समूहा यस्मिन् मूर्धः अर्धे अर्धमूर्धा तस्मिन्। अर्धं नपुंसकमितिसमासः। परवल्लिंगंद्वन्द्वतत्पुरुषयोरितिपरपदस्यैवलिंगं। आ समन्तात् धृतौ रक्तं उष्णीषं पटः उत्तरीयवस्त्रं च येन स तथोक्तः अत एव नटो नाम नटवेशवान्। विततानि श्मश्रूणि मुखरोमाणि संमार्जयन् स्पृशन् दुःसाध्योऽपि शत्रुः सुसाध्यत्वं गमित इति संतोषादिति भावः। उच्च उन्नतः अतिशयेन स्थूल इति स्थूलतरः। शोभनस्य कंचुकस्य बृहता भागेन प्रदेशेन भूमिं स्पृशन् असौ यवनः स्वान् स्वकीयान् सर्वान् यवनान् विहाय अपसार्य तूर्णं शीघ्रं पुरतः अग्रभागे तथा शिवभूपागमनप्रकारेण एक एव इतिभावः। ययौ जगाम। शिवभूपोऽपि समानौ वीरौ परित्यज्यैव पुरोगत इति ज्ञेयम् ॥ ५४ ॥

अन्येप्राचुः। मत्तमातङ्गेति ॥ मत्तो मातङ्गः करी कलभः करिशावकः तयोर्योगो यादृशः अननुरूपः भवति तादृशोऽयं द्वयोर्योगो जात इतिशेषः। अग्रे युद्धसमये कथं भवेत् तन्नविद्मः न जानीमः ॥ ५५ ॥

सहस्रशइति। सहस्रशः बहुसहस्रसंख्याकाः। बह्वल्पार्थादित्यादिनाशस्। प्रेक्षन्ते इति प्रेक्षकाः। कर्तरि ण्वुल् समागत्य इदं वक्ष्यमाणं अब्रुवन् अवोचन्। अपर्वणि पूर्णिमेतरतिथौ तत्रापि दिवा दिवसे तत्रापि भूमौ शशिनश्चन्द्रस्य राहोश्च समागमो दृश्यत इति शेषः ॥ ५६ ॥

देवेति। हे देवदेव हे जगन्नाथ हे भक्तानां अभयं करोतीति अभयंकर। मेघर्तिभयेषु कृञ इत्यनेन तदन्तात् अभयशब्दात् खाचि मुमागमः। कर्तृकर्मणोः कृतीति षष्ठी। यदस्माकमिदं अस्मदीयं। वृद्धाच्छः। सुकृतं पुण्यं तेन नराधिपं रक्ष पालय ॥ वने रणे शत्रुजलाग्निमध्ये। महार्णवे पर्वतदुर्गभूमौ। सुप्तं प्रमत्तं विषमस्थितंवा। रक्षन्तिपुण्यानि पुराकृतानि॥ इतिवचनादस्मिन् संकटे पुण्यमेव रक्षकं। राज्ञि पुण्यमस्ति नवेतिसंदिह्य स्वपुण्यदानेन राजरक्षणार्थं श्रीविष्णुं प्रार्थयामासुरित्यर्थः॥ ५७॥

स्त्रियऊचुः। पातिव्रत्यमिति। अस्माकं यत् जन्म अभिव्याप्येति आजन्म जन्मप्रभृति परिषेवितं आचरितं। परिनिविभ्य इत्यादिना षत्वम्। पतिव्रतानां कर्म पातिव्रत्यं पति-

आलिङ्गनक्षण इभं मृगराडिवैनं
धृत्वा नृपस्य स शिरःप्रविधाय बाह्वोः ॥
तस्थौ नृपोऽपि बलवान्नखतोऽस्य कुक्षौ
शस्त्र्याँ विभेद विशिखो ह्यवनौ पपात ॥ ५९ ॥
जीवाख्य वीरवरराट् त्वरया स तस्य
छित्त्वा शिरो नृपगिरिं प्रययौ नृपश्च ॥
यन्त्रप्रणादमधिगम्य शिवस्य वीराः
सर्वेऽपि योद्धुमुपजग्मुरमुष्य सेनाम् ॥ ६० ॥
हत्वा तं यवनं तस्य श्रियं हृत्वा नृपोत्तमः ।
गत्वा निजं राजगिरिमवसत् सुखमक्रमः† ॥ १ ॥
॥ इति श्री शिवकाव्ये पुरुषोत्तमपण्डितविरचिते द्वितीयश्चमत्कारः ॥

---

॥ श्रीगणेशायनमः ॥

शिवनृपस्य तु वीरवरास्तदा तुरगिणो रथिनो गजिनस्तथा
विविधहेतिविभूषितपाणयः प्रतिययुः सशराः सशरासनाः ॥ १ ॥

व्रताधर्मः । गुणवचनब्राह्मणादिभ्यइत्यादिनाकर्मार्थेष्यञ् । अस्तीतिशेषः । भगवान् हरिस्तस्यपातिव्रत्यस्यन पुण्येन राजानं रक्षतात् रक्षतु ॥ ५८ ॥

आलिंगनेति । स यवनो मृगराट् सिंह इभमिव आलिंगनस्य क्षणे समये एनं राजानं धृत्वा नृपस्य शिरः बाह्वोर्मध्ये प्रतिधाय दृढं धृत्वा तस्थौ। बलवान् नृपोऽपि अस्य यवनस्य कुक्षौ कुक्षिप्रदेशौ । नखेनेति नखतः ।सार्वविभक्तिकस्तसिः । व्याघ्रनखेनेत्यर्थः । शस्त्र्या च बिभेद चिच्छेद । हि यस्मात् भेदनात् विगता शिखा यस्मात्स विशिखो यवनोऽपि अवनौ पपात पतितवान् ॥ ५९ ॥

जीवाख्यइति । जीव इति आख्या यस्य स जीवाख्यः वीरवरेषु राजतेऽसौ वीरवरराट् तस्य यवनस्य शिरः त्वरया छित्त्वा नृपगिरिं राजगिरिं प्रययौ । नृपश्च शिवभूपोपि प्रययौ॥ शिवस्य वीरा यन्त्रस्य प्रणादं प्रकृष्ट शब्दं पूर्वसंकेतितमित्यर्थः। अधिगम्य ज्ञात्वा अमुष्य यवनस्य सेनां योद्धुं उपजग्मुः ययुः ॥ ६० ॥

इतिश्रीशिवकाव्यव्याख्यायां काव्यप्रकाशिकायां स्वकृतायां द्वितीयश्चमत्कारः ॥

॥ श्रीगणेशायनमः ॥

शिवेति । तदा यन्त्रशब्दश्रवणक्षेण विविधाभिः हेतिभिः आयुधैः विभूषिताः पाणयो येषां ते तथोक्ताः । हेतिर्ज्वालाङ्कुशायुधे इत्यमरः । तथा सशराः सशरासनाः सधनुषः

---

२७. 'शस्त्रया' पा० भे० । † अधिकोयं श्लोकः क्वचित्

पदचरा अपि यंत्रपुरःसराः सुरविमाननिवेशनहर्षिताः
कवचिनो विविधायुधधारिणो रणविनिर्जितशत्रुचया ययुः ॥ २ ॥
यवनवर्यचमूपतयस्त्विदं चरमुखैरवगम्य सुविस्तरम्
भयविकम्पितपाणिपदादयोऽग्रिमविधावतिमन्दधियोऽभवन् ॥ ३ ॥
अयुतसंख्यतुरंगमसादिनः करिगता विशिखाधिपतेश्च ते
शकटवेशितयन्त्रततीः पुरः किल विधाय भटा अवतास्थिरे ॥ ४ ॥
उभयसैन्यसमुत्थितरेणुभिर्दशदिशो नितरां परिपूरिताः
दिनकरो जलदैरिव संवृतः समभवद् घटिकाद्वयमावृतः ॥ ५ ॥
करिवरैरसितैस्तुरगैः सितै रविकरोद्धतभैः करवालकैः
समरभूः सतडिद्घनसंवृताम्बररुचं सकलानुचकार सा ॥ ६ ॥

तुरगाः सन्ति येषां ते तुरगिणः अश्वारोहाः रथिनः रथारोहाः गजिनः गजारोहाः। मत्व-र्थीय इनिः सर्वत्र । शिवनृपस्य वीरवराः वीरश्रेष्ठाः प्रतिययुः प्रतिजग्मुः ॥ १॥

पदेति । यन्त्राणि तोफाः पुरःसराः येषां ते तथोक्ताः । सुरविमानेषु निवेशनेन कर्त्रा हर्षिताः हर्षं प्रापिताः। अपुनरावर्तिन इति भावः। कवचिनःवर्मधारिणः विविधा-युधानि धारयन्ति ते तथोक्ताः । रणे विनिर्जिताः शत्रुचयाः यैस्ते तथोक्ताः। पदाभ्यां चरन्ति ते पदचराः पदातयोऽपि । कर्त्रोर्हेतुताच्छील्यानुलोम्येष्विति ताच्छील्येऽयोत्पटः प्रत्ययः। ययुः जग्मुः ॥ २ ॥

यवनेति । यवनवर्यस्य चमूपतयः सेनापतयस्तु इदं यवनाधिपहननं शिवनृपसे-नागमनं च चरमुखैः दूतमुखैः सुविस्तरं यथा तथा अवगम्य ज्ञात्वा भयेन विकंपिताः पाणि-पदादयः अवयवा येषां ते तथाभूताः सन्तः। अग्रेभवः अग्रिमः अग्रादिपश्चाड्डिमच् इति डिमच्प्रत्ययः। अग्रिमो यो विधिः तत्र अति अत्यन्तं मन्दधियः अभवन् ॥ ३ ॥

अयुतेति । अयुतं दशसहस्राणि संख्या येषां ते च ते तुरंगमसादिनश्च अयु-तसंख्यतुरंगमसादिनः अश्वारोहाः करिगताश्च विशिखाधिपतेः ते भटाः शकटेषु वेशिताः स्थापिताः यन्त्रततीः यन्त्रसमुहान् पुरः विधाय कृत्वा अवतस्थिरे स्थिताः। समवप्रविभ्यःस्थ इत्यात्मने पदं । इदानीं युद्धमेव वरं इति निश्चित्य युद्धोद्योगं चक्रु-रिति भावः ॥ ४ ॥

उभयेति । दशदिशः उभये च ते सैन्ये च उभयसैन्ये ताभ्यां समुत्थिता ये रेणवः तैः कर्तृभिः नितरां अत्यंतं परितः पूरिताः कर्मणिक्तः। अतः तैः आवृतो व्याप्तो दिनकरः सूर्यः घटिकाद्वयं जलदैः मेघैः संवृत इवेत्युत्प्रेक्षा समभवत् जातः ॥ ५ ॥

करिवरैरिति । करिवरैः गजोत्तमैः असितैः कृष्णैः सितैः शुभ्रैश्च तुरंगमैः रवेः

१. 'यन्त्र' पा० भे०। २. 'सविस्तर' पा० भे०। ३. 'पूरितः' पा० भे०।

समरभूर्द्विरदादिभिरावृता सजलदाम्बरकान्तिमपाहरत्
गगनमप्यसकृद्रजसावृतं समहरत्किल भूमिभवां रुचम् ॥ ७ ॥
नरपतिः स्वयमेव रिपोश्चमूं न विनिहन्तुमगात्पतिवर्जिताम्
बुधमतो निजधर्मरतः सदा न हि महान् विजहाति महापथम् ॥ ८ ॥
यवनभूपतिसैनिकपालका विविधवाद्यविवादनतत्पराः
कवचिनो रथिनो ध्वजिनोऽखिला रणभुवि व्यसृजन् शरसंहतीः ॥९॥
जलदनिस्वनयन्त्रमुखोद्गता पृथुतरायसगोलकसंहतिः
नरपतेः पृतनां समकंपयन्मरुदिव प्रबलः कदलीततिम्[१] ॥ १० ॥

सूर्यस्य कराः किरणाः । किरणोस्रमयूखांशुगभस्ति घृणिरश्मय इत्यमरः । तैः उत् ऊर्ध्वं गता भा प्रकाशो येषां तैः करवालकैः उपलक्षिता सकला संपूर्णा समरभूः संग्रामभूमिः तडिद्भिः विद्युद्भिः सहिता ये घना मेघाः तैः संवृतं अंबरं आकाशं तस्य रुचिं कान्ति । स्युः प्रभा रुग् रुचिस्त्विड्भेत्यमरः । अनुचकार तद्वद्बभौ इत्यर्थः ॥ ६ ॥

समरेति । द्वौ रदौ येषां ते द्विरदाः ते आदिर्येषां तैस्तुरगादिभिः आवृता व्याप्ता समरभूः सजलदं यदम्बरं आकाशं तस्य कान्ति अपाहरत् हृतवती । गगनमपि धूल्या रजसा आवृतं व्याप्तं सत् भूमिभवां रुचं कान्ति असकृत् वारंवारं समहरत् किल ॥ ७ ॥

नरपतिरिति । नरपतिः शिवभूपः पत्या भर्त्रा वर्जितां रहितां विधवामित्यर्थः रिपोः शत्रोः चमूं सेनां स्वयमेव विनिहन्तुं नागात् नागमत् । हि यस्मात् बुधानां पण्डितानां मतः मान्यः यतः सदा निजे स्वकीये धर्मे रतः अत एव महान् श्रेष्ठः महान्तं पन्थानं शिष्टमार्गं । ऋक्पूर्धूरित्यादिना समासान्तः । न विजहाति न त्यजति ॥ ८ ॥

यवनेति । कवचिनः कवचवन्तः ध्वजिनः ध्वजवन्तः रथिनः रथाधिरूढा इत्यर्थः सकलाः संपूर्णाः यवनस्य भूपतेः सैनिकाः सेनाचराः तेषां पालकाः सेनापतयः विविधानि वाद्यानि तेषां विशेषेण वादनं तस्मिन् तत्पराः आसक्ताः सन्तः रणभुवि समराङ्गणे शरसंहतीः बाणसमूहान् व्यसृजन् अमोचयन् । यवनसेनापतयः पूर्वं युद्धारंभं चक्रुरित्यर्थः । प्रायः युद्धारंभं प्रथमं कृतवतः पराजयो भवतीति ॥ ९ ॥

जलदेति । जलदनिस्वनानि मेघनिन्हादानि यन्त्राणि तेषां मुखेभ्य उद्गता उत्पन्ना । यन्त्रलक्षणं मूले एव विशदीकृतं । पृथुतरा प्रथीयसी । द्विवचनेत्यादिना तरप् । अयसः लोहस्य इमे आयसाः । तस्येदमित्यण् । गोलकाः प्रसिद्धाः तेषां संहतिः नरपतेः शिवभूपस्य पृतनां सेनां । ध्वजिनीवाहिनीसेनापृतनानीकिनीचमूरित्यमरः । प्रबलः मरुत् वायुः कदलीनां रंभाणां ततिमिव समकंपयत् ॥ १० ॥

---

१. 'कदलिका बहुला इव मारुतः' पा० मे० ।

नरपतिध्वजिनीपतिपालकाः पुरत एकगणं विनिधाय ते
युगपदाविविशुर्द्विषतश्चमूं तुरगिणः सकला अपि सर्वतः ॥ ११ ॥
हरिखुरोद्धतधूलिचयावृताः प्रचुरधूमपटैरपि संवृताः
यवनपास्तिमिरौघगता इव स्वपरलोकविवेकविवर्जिताः ॥ १२ ॥
योधा नृपस्य गजिनस्तुरगाधिरूढाः पद्गा अपि द्विषदनीकिनिकां समेत्य
वीरव्रजं गजसमूहमलं प्रमत्तं सिंहा इव प्ररुरुजुर्भयवार्धिमग्नम् ॥ १३ ॥
यवनसैन्यपतिः करिमस्तकोपरिगतः सशरः सशरासनः
सकलयन्त्रसमूहविमोक्षणे तदधिपान् सकलान् समचोदयत् ॥ १४ ॥
निःस्त्रिंशखड्गकरवालकृपाणकुन्त-भल्लासिपट्टिशशिलाशितबाणपूगैः
यन्त्रैश्च तोमरपाशपरशुशक्तिवज्र-चक्रैश्च उग्रप्रपातान् शिवभूपयोधाः ॥ १५॥

नरपतेरिति । नरपतेः शिवभूपस्य या ध्वजिनी सेना तस्याः पतयस्तेषामपि पालकाः ते सकलाः तुरगिणः पुरतः अग्रे । आदाविच्यर्थः । एकगणं एकं सेनासंघं विनिधाय स्थापयित्वा प्रलोभनार्थमिति भावः । सर्वतः सर्वप्रदेशैः युगपत् द्विषतः शत्रोः चमूं आविविशुः ॥ ११ ॥

ननु यवनपध्वजिनीपालेषु सुस्थेषु शिवभूपतिसेनापालानां कथं प्रवेशस्तत्राह हरीति । हरीणां अश्वानां ये खुराः । अर्कमर्कटमण्डूकविष्णुवासववायवः । तुरङ्गसिंहसीतांशुयमाश्च हरयो दशेति । शफं क्लीबे खुरः पुमानित्यमरः । तैः उद्धता उत्क्षिप्ता या धूलिस्तस्याश्चयाः पुंजाः तैः आवृताः । प्रचुराः ये धूमाः यन्त्रमुखोद्गताः ते एव पटाः वस्त्राणि तैः संवृता आच्छादिता यवनपाः तिमिराणां अन्धकाराणां ओघः तं गता इव स्वे परेच ते लोकाश्चतेषां विवेको विविच्य ग्रहणं तेन विवर्जिता अभूवन्निति शेषः ॥ १२ ॥

योधा इति । नृपस्य शिवभूपस्य गजिनो गजारोहाः तुरगाधिरूढाः पद्गाः अपि योधाः द्विषतः अनीकिनिकां सेनां समेत्य प्राप्य भयमेव वार्धिः समुद्रः तस्मिन् मग्नं वीराणां व्रजं समूहं सिंहा अलं अत्यन्तं प्रमत्तं अनवधानं गजसमूहमिव रुरुजुः पीडयामासुः ॥ १३ ॥

तदा यवनसेनापतेः कृत्यमाह । यवनेति । करिणः गजस्य मस्तको मूर्धा तदुपरिगतः सशरः सबाणः सशरासनः धन्वी यवनसैन्यस्य पतिः सकलानां यन्त्राणां समूहः तस्य विमोक्षणे मोचने सकलान् तदधिपान् यन्त्राधिपतीन् अचोदयत् प्रेरितवान् ॥ १४ ॥

अन्तःप्रविष्टशिवभूपसैनिककृत्यमाह । निःस्त्रिंशेति । शिवभूपस्य योधाः निर्गतः त्रिंशद्भ्यः अङ्गुलिभ्यः निस्त्रिंशाः खड्गः करवालःकृपाणः एते असरेव अवान्तरभेदाः । कुन्तः

---

५. 'भव' पा० भे० ।

ते बर्बरा अपि शका अपि पारसीका हूणाश्च तंगणगणाः सशिखाशिखाश्च
म्लेच्छा विघूर्णितदृशो मधुपानमत्ता नानायुधा युयुधिरे नरपस्य योधैः॥१६॥
मध्यान्हगे सवितरि प्रबभूव युद्धं भीरोर्भयोद्भवकरं बहुहर्षदं तत्
शूरव्रजस्य रुधिरौघपरिवृतास्ते रेजुः सपुष्पनिचया इव किंशुकौघाः॥१७॥
छिन्नेऽपि दक्षिणकरेऽन्यकरेण शत्रोर्दक्षं करं समलुनात्सहखड्गमेकः
अन्यः करद्वयविहीनकलेवरोऽपि दंतैर्भुजंगम इव व्यदशत् स्वशत्रुम् ॥१८॥
विद्धोऽपि वक्षसि शरेण सपुंखमेको दाङ्गिविदश्य दशनच्छदमत्र रोषात्
छित्त्वा शिरो निजरिपोर्विमुमोच देहं हे शंकरेश भव सांब शिवेति जल्पन्
॥ १९ ॥

भल्लः असिः पट्टिशश्च शिलायां सिताः ये बाणपूगाश्च तैर्यन्त्रैः हस्तधृतैः बिन्दुरवेति प्रसिद्धैः तोमराश्च परश्वधाश्च शक्तयश्च ऋष्टयश्च । ऋष्टयक इति प्रकृतिभावः । यद्वा रिष्टिरितिपाठः । तूण्यां खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टयइत्यमरः । चक्राणि च तैः अपरान् शत्रूञ्जघ्नुः ॥ १५ ॥

यवनसेनापतीनां च कृत्यमाह । ते बर्बराइति । मधुनः मद्यस्य पानेन मत्ताः अत एव विशेषेण घूर्णिताः भ्रामिताः दृशः दृष्टयः येस्ते नानाप्रकाराणि आयुधानि येषां ते बर्बराः अपि शकाः पारसीकाः हूणाः तंगणानां गणाश्च शिखाभिः सहिताः सशिखाः नास्ति शिखा येषां ते अशिखाश्च ते म्लेच्छाः म्लेच्छजातयः नरपस्य शिवभूपस्य योधैः भटैः । विनापि तद्योगे तृतीयेति तृतीया । युयुधिरे ॥ १६ ॥

मध्याह्नगे इति । भीरोः भयशीलस्य भयस्य उद्भवः उत्पत्तिः तस्य करोतीति करं । पचादित्वादच् । शूरव्रजस्य शूरसंघस्य बहुहर्षं अतिसंतोषं ददातीति तथोक्तं तत् युद्धं सवितरि सूर्ये अह्नो मध्यो मध्याह्नः तं गच्छतीति मध्याह्नगः तस्मिन् सति । अहन् शब्दात् राजाहःसखिभ्यष्टच् इति टच् । अह्नोह्न एतेभ्य इति अह्नादेशः । रात्राह्नाहाः पुंसीति पुल्लिंगत्वं । प्रबभूव । रुधिरौघेण परितः वृता व्याप्तास्ते वीराः पुष्पनिचयैः सहिताः सपुष्पनिचयाः किंशुकानां ओघा इव रेजुः शुशुभिरे ॥ १७ ॥

छिन्नेपीति । एकः वीरः दक्षिणकरे छिन्ने सत्यपि अन्यकरेण वामकरेण शत्रोः स्वहस्तच्छेत्तुः सहखड्गं खड्गेन सहेति सहखड्गः तं खड्गयुतं । तेन सहेति तुल्ययोगे इति समासः । वोपसर्जनस्येति विकल्पात् सादेशाभावः । दक्षं दक्षिणं करं हस्तं समलुनात् छेदितवान् । लुनातेः कर्तरि लङ् । अन्यः वीरः करयोः द्वयं तेन विहीनं कलेवरं यस्य सोऽपि भुजङ्गम इव सर्प इव स्वं स्वकीयं शत्रुं दन्तैः व्यदशत् दष्टवान् । भुजङ्गमोपमया क्रोधबाहुल्यं गम्यते ॥ १८ ॥

विद्ध इति । एकः वीरः शरेण वक्षसि उरसि सपत्रं सपुंखं यथा तथा विद्धः सन्नपि

६. 'विशिखाः' पा० भे०.

छिन्नेऽपि मूर्धनि शिरो झटिति स्वशत्रोश्-
छित्त्वासृजन्निजतनुं करवालपाणिः
गच्छामि नाकममुनैनमतो नयामि
नोचेत्कृतघ्नतरता भवितेति चान्यः ॥ २० ॥

छित्त्वा करं करिवरं विनिपात्य भूमा-
वेकोयदा गजपतिं निजघान हंत ॥
अल्लेत्युदीर्य वचनं निपपात भूमौ
देहं मुमोच करिणा सह तत्क्षणेऽसौ ॥ २१ ॥

वीरौ धनुःप्रहरणौ युगपत्सपत्रा
कृत्वा परस्परमुभौ प्रविहाय देहौ ॥
एकं विमानमधिरुह्य दिवं प्रयातौ
दृष्ट्वाविवातिरुचिरौ समुपेत्य सख्यं ॥ २२ ॥

दशनच्छदं ओष्ठं दद्भिः दन्तैः। पाददन्नेति दन्तशब्दस्य ददादेशः। रोषात्रिदश्य दष्ट्वा निजारिणा: वद्धः शिरः छित्वा हे शंकर हे ईश हे भव हे सांब हे शिव इति जल्पन् भाषमाणः सन् अत्र रणभूमौ देहं मुमोच। अन्तकाले शिवनामस्मरणादयं वीरः उत्तमां गतिं गत इति ज्ञेयं। तदुक्तं गीतासु॥ अन्तकाले च मामेव स्मरन्मुक्त्वा कलेवरं। यः प्रयाति त्यजन् देहं स याति परमां गतिमिति॥ रणभूमौ हतस्य शिवनामस्मरणाभावेऽपि उत्तमा गतिः नामस्मरणेतु उत्तमागतिरितिकिं वक्तव्यं। अयं च शिवस्मरणात् राज्ञो वीर इति ज्ञेयम्॥ १९॥

छिन्नेऽपीति। करवालः कृपाणः पाणौ यस्येति तथोक्तः। प्रहरणार्थेभ्यः परे निष्ठासप्तम्याविति वचनात् पाणिशब्दस्य परनिपातः। अन्यः वीरः मूर्धनि शिरसि। छिन्नेऽपि सत्यपि अमुना शत्रुणा हेतुभूतेन नाकं स्वर्गं गच्छामि अतः हेतोः एनं शत्रुं नाकं नयामि नो चेत् कृतघ्नतरस्य भावः कृतघ्नतरता भविता इति हेतोः झटिति शीघ्रं स्वशिरश्छेदनक्षण एव स्वशत्रोः स्वशिरश्छेत्तुः शिरश्छित्त्वा निजतनुं स्वशरीरं असृजत् अत्यजत्॥ २०॥

छित्त्वेति। एकः वीरः करं शुण्डां छित्त्वा करिवरं गजश्रेष्ठं भूमौ विनिपात्य यदा गजपतिं गजारोहं जघान हतवान् तदा असौ गजारूढः हन्त इति खेदे अल्ल हे अंब इति मातरं संबोध्य। अंबार्थनद्योर्ह्रस्व इति ह्रस्वत्वं। संकटे हि मातरं स्मरन्ति सर्वे। यद्वा अल्ला इति यवनदेवतानाम। अयं यवन इति ज्ञेयं। उदीर्य उक्त्वा भूमौ गजादिति ज्ञेयं। निपपात असौ करिणा सह तत्क्षणे देहं मुमोच॥ २१॥

वीराविति। धनुःप्रहरणं ययोः तौ धनुःप्रहरणौ उभौ वीरौ कर्तारौ परस्परं युगपत् एकसमयावच्छेदेन सपत्राकृत्वा सपुंखशरप्रवेशेन अतिव्यथितकरणेन। सपत्र-

शाक्तीक एक उरसि प्रतिरोपितं स्वे
बाणं विलोक्य रिपुणा पुरतः स्थितेन ॥
रोषान्वितोऽस्य हृदयं प्रविदार्य* शक्त्या
भित्त्वार्कमण्डलमसावपि निर्जगाम ॥ २३ ॥
कुन्तायुधौ तुरगिणौ समरांगणस्थौ
भित्त्वा परस्परमुभावपि मर्मदेशे ॥
वैरं कलेवरमपि प्रविहाय यातौ
स्वर्गं सुरोत्तमसमानवपुर्दधानौ ॥ २४ ॥
सपटिशः कश्चन वारबाणी रणांगणं चर्मकरः समेत्य ॥
गजान्विशुण्डांस्तुरगान्वितुण्डान्भटान्विमुण्डान्कृतवान्प्रचण्डान् ॥२५॥

निष्पत्रादतिव्यथनेसपत्रशब्दात्कॄञअतिव्यथनेडाच् । देहौ प्रविहाय त्यक्त्वा दस्रौ अश्विनीकुमाराविव सख्यं समुपेत्य अतिरुचिरौ सन्तौ दिव्यदेहावित्यर्थः । एकं विमानं अधिरुह्य दिवं प्रयातौ । यद्वा दस्राविव अतिरुचिरौसुन्दरदेहौ । देवमध्ये तयोरति रुचिरत्वं प्रसिद्धं । सख्यं उपेत्य विमानं अधिरुह्य दिवं स्वर्गं प्रयातौ ॥ २२ ॥

शाक्तीक इति । एकः अन्यः । एकोऽन्यार्थे प्रधाने च प्रथमे कवले तथा । साधारणे समानेऽल्पे संख्यायांच प्रकथ्यत इति विश्वः ! शक्तिः प्रहरणं यस्येति शाक्तीकः । शक्तियष्ट्योरीकक् इति ईकक् प्रत्ययः । पुरतः अग्रभागे स्थितेन रिपुणा स्वे स्वकीये उरसि प्रतिरोपितं बाणं विलोक्य रोषेण अन्वितः युक्तः सन् अस्य रिपोः हृदयं शक्त्या लोहमयेन आयुधविशेषेण लोके सांग इति प्रसिद्धेन प्रविदार्य ततः-अर्कमण्डलं भित्त्वा निर्जगाम । असौ रिपुरपि अर्कमण्डलं भित्त्वा निर्जगाम उत्तमां गतिं गत इत्यर्थः । रणे अभिमुखं हतः सूर्यमण्डलं भित्त्वा व्रजतीति पुराणेषु प्रसिद्धं ॥ द्वाविव पुरुषौ लोके सूर्यमण्डलभेदिनौ । परिव्राड्योगयुक्तश्च रणे चाभिमुखे हत इति ॥ २३ ॥

कुन्तायुधाविति । समरः संग्रामः तस्य अजिरं अंगणं तत्र तिष्ठतः तौ समराङ्गणस्थौ । आतोनुपसर्गे कः । कुन्तः आयुधं ययोस्तौ तुरगिणौ अश्वारोहौ उभावपि मर्मदेशे जीवस्थाने परस्परं भित्त्वा कलेवरं वैरं च प्रविहाय त्यक्त्वा सुरोत्तमौ देवश्रेष्ठौ ताभ्यां समानं वपुः दधाते तौ दधानौ सन्तौ स्वर्गं यातौ गतौ ॥ २४ ॥

सपटिश इति । पटिशेन सहितः सपटिशः वारबाणः कञ्चुकः सोऽस्यास्तीति वारबाणी । अत इनि ठनाविति इनि प्रत्ययः । कञ्चुको वारबाणोऽस्त्रीत्यमरः । चर्म करे यस्येति चर्मकरः रणस्य अङ्गणं उपेत्य गजान् विगता शुण्डा येभ्यस्ते विगतशुण्डास्तान् तुरगान् अश्वान् वितुण्डान् तुण्डरहितान् प्रचण्डान् कोपनान् ।

---

*. 'विदार' पा. भे०.

रक्तोक्षिता समरभूर्विजहार सायं
सूर्यप्रभाकलितवारिदसंघशोभाम् ॥
शान्तं रजोऽपि सकलं समगात्तदानीं
पङ्कत्वमत्र बत केचन शेरते स्म ॥ २६ ॥
दात्यूहगृध्रनिचया उपरि भ्रमन्तो
नैवालभन्त वसतिं कुहचित् समेताः ॥
मन्येऽपकीर्तिपटलं यवनाधिपस्य
शीर्षस्थितं भ्रमति तद्वसतेरभावात् ॥ २७ ॥
योधा विकोशकरवालकराः कराला-
स्तां कातरां यवनपध्वजिनीमकृन्तन् ॥
द्रौणिर्यथा निजसुहृत्प्रियकृत्कृपाणी
शिष्टं व्यनीनशदलं बलमर्जुनस्य ॥ २८ ॥

चण्डस्त्वत्यन्तकोपन इत्यमरः । भटान् वीरान् विमुण्डान् छिन्नशिरस्कान् कृतवान् चकार ॥ २५ ॥

रक्तोक्षितेति । रक्तेन उक्षिता सिक्ता समरभूः संग्रामभूमिः सायं सन्ध्याकाले सूर्यप्रभया आकलितो यो वारिदसंघः मेघसमूहः तस्य शोभां विजहार हृतवती । सकलं रजोऽपि शान्तं सत् तदानीं पंकत्वं कर्दमत्वं समगात् अगच्छत् । अत्र पंके बत इति खेदे केचन वीराः शेरते स्म । भिन्नाङ्गत्वादन्यत्र गन्तुमशक्तत्वात्तत्रैव स्थिता इत्यर्थः ॥ २६ ॥

दात्यूह इति । समेता मिलिता दात्यूहाः काकाः गृध्राः प्रसिद्धास्तेषां निचयाः संघाः । गृध्रापेक्षया दात्यूहानां किंचिदभ्यर्हितत्वात् पूर्वनिपातः । यद्वा । दात्यूहाश्च गृध्रनिचयाश्चेति समासः । उपरि रणभूमेरूर्ध्वप्रदेशे भ्रमन्तः सन्तः कुहचित् कुत्रचित् वसतिं स्थितिं नैवालभन्त । लभेः कर्तरि लङ् । अत्र कविः उत्प्रेक्षते । यवनाधिपस्य अब्दुल्लाख्यस्य शीर्षे स्थितं तदपकीर्तिपटलं अयशोमण्डलं वसतेः स्थितेरभावात् भ्रमतीत्यहं मन्ये । शिवभूपेन पराजितस्य यवनाधिपस्य शिरसि अयशोमण्डलं तस्थौ । तस्मिन् मृते तु तत् कृष्णकाकगृध्रसंघमिषेण शिवभूपसेनापतिं सुखं वस्तुं स्थलं याचतीवेति भावः ॥ २७ ॥

योधा इति । विगताः कोशाः पिधानानि येषां ते विकोशाः । कोशोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययोरिति विश्वः ॥ करवालाः खड्गाः करेषु येषां ते तथाभूता अत एव करालाः भयंकराः योधाः भटाः । तां कातरां भीतां यवनपध्वजिनीं तथा अकृन्तन् अच्छिन्दन् । कृती छेदने अस्मात् लङ् मुचादित्वान्नुम् । तथा

८. 'कचिदन्य हो ते' पा० भे०

कंधरां समपहाय कं धरां प्राप्य संयति जहास कस्यचित् ॥
मां सदा नमयतः प्रपूर्तये दुर्भरस्यं जठरस्य किं पुरः ॥ २९ ॥
प्रेतव्राताचलोत्था रुधिरजलवहा हस्तिहस्तौघमीना
शुभ्राच्छोष्णीषफेना नरकरभुजगा केशजंबालयुक्ता ॥
बालाल्यालीढवक्त्रावलिजलजचया चर्मकच्छा गजेंद्र-
ग्रावाघातप्रशब्दा समजनि तटिनी तां भुवं प्लावयन्ती ॥ ३० ॥

कथं । यथा निजः स्वकीयं सुहृन्मित्रं दुर्योधनः । अथ मित्रं सखा सुहृदित्यमरः । तस्य प्रियं इष्टं तत्करोतीति कृत । कृञः क्विपि तुक् । कृपाणोऽस्यातीति कृपाणी । अदन्तान्मत्वर्थीय इनिः । द्रोणस्य अपत्यं द्रौणिः अश्वत्थामा । अत इञ् । अर्जुनस्य शिष्टं अवशिष्टं बलं सैन्यं व्यनीनशत् नाशितवान् । नश अदर्शने इति धातोः णिजन्तात् लुङि चङि द्वित्वं ॥ २८ ॥

कंधरामिति । कस्यचिद्वीरस्य कं शीरः । को ब्रह्मात्मानिलार्केषु शमने सर्वनाम्नि च । पावके च मयूरे च सुखशीर्षजलेषु कमिति विश्वः ॥ कन्धरां ग्रीवां अपहाय त्यक्त्वा । धरां पृथ्वीं प्राप्य । संयति संग्रामे जहास हासं चक्रे । हासाशयं विवृणोति । दुःखेन भ्रीयते तत् दुर्भरं तस्य दुर्भरस्य उदरस्य पूर्तये पूरणाय मां सदा निरन्तरं नमयतीति नमयन् तस्य नमयतः । नमयतेः शतृ प्रत्ययः । ते इति शेषः पुरः अग्रे किं । मम वियोगे तव जठरपूरणं कथं स्यात् इत्यर्थः ॥ २९ ॥

प्रेतव्रातेति । प्रेतानां व्रातः समूहः स एव अचलः पर्वतस्तस्मात् उत्या उत्पन्ना । तथा रुधिरं तदेव जलं तद्वहतीति तथोक्ता । हस्तिनां हस्ताः शुण्डास्तेषां ओघा एव मीना मत्स्या यस्यां सा । शुभ्राणि अच्छानि उष्णीषाणि शिरोवेष्टनानि तान्येव फेनो यस्याः सा । नराणां कराः पाणय एव भुजंगाः पंचफणाः सर्पा यस्यां सा । केशा एव जंबालं शैवालं तेन युक्ता । बालानां केशानां आलिः पंक्तिः तया आलीढानि व्याप्तानि वक्त्राणि मुखानि तेषां अवलिः पंक्तिः सैव जलजचयः कमलसंघो यस्यां सा । चर्माणि लोके ढालइति प्रसिद्धानि तान्येव कच्छाः कमठाः यस्यां सा । गजेन्द्राः करिश्रेष्ठास्त एव ग्रावाणः नदीमध्यवर्तिपाषाणास्तेषामाघातः आघट्टनं तेन प्रकृष्टः शब्दो यस्याः सा । तां रणभुवं प्लावयन्ती । प्लुगतावित्यस्माण्णिजन्तात् शतरि नुमि ङीप् । तटिनी नदी समजनि उत्पन्ना । जनी प्रादुर्भावे अस्माद्दैवादिकात् लुङि च्लेश्चिणितलोपः जनिवध्योश्चेति उपधावृध्द्यभावः ॥ ३० ॥

---

९. 'किलानमयतः' पा० भे०.

१०. 'दुर्भरात्किमुदराद्वियोगतः' पा० भे० (?)

११. 'शैवाल' पा० भे०.

द्रुतां स्वसेनां प्रसमीक्ष्य वीरो जमालनामाऽभ्यपतत्तरस्वी ॥
सहस्रसंख्यैस्तुरगाधिरूढैः समन्वितः सैन्यपतिर्जयैषी ॥ ३१ ॥
स सांयुगीनः समराजिरस्थः सवारबाणः सतलः सतूणः ॥
सकार्मुकः सर्वभटैरुपेतः ससर्ज बाणान् समपर्वभाजः ॥ ३२ ॥
घनो यथा प्रावृषि वर्षधारा महीधरे वर्षति चातिमात्रम् ॥
तथा शरान् व्यात्तमुखान् भुजंगानिवासृजद्राजनियुक्तसैन्ये॥३३॥
तदीययोधा अपि वाजिवाहाः कचाचितास्ताम्रमुखाः सुरापाः ॥
शरैश्च भल्लैः परिघैः कृपाणैरपीडयन् पार्थिवसैन्यमाजौ ॥ ३४ ॥
दिनावसाने नृपसैन्यनाथः खलीनलीनाननवाजिसादी ॥
कृपाणपाणिः सह योधसंघैः पुरोऽभियातो यवनाधिपस्य ॥ ३५ ॥

अथ उभयसेनाधिपतयोर्युद्धोपक्रममाह । द्रुतमिति । जयं इच्छति तच्छीलः जयैषी । सुप्यजातौ णिनिस्ताच्छील्ये इति णिनिः । तरस्वी वेगवान् । तरस्वी त्वरितो वेगी प्रजवी जवनो जव इत्यमरः । जमालनामा वीरः सेनापतिः स्वसेनां द्रुतां भयादपयातां प्रसमीक्ष्य । सहस्रं संख्या येषां तैः तुरगाधिरूढैः अश्वारोहैः समन्वितः युक्तः सन् अभ्यपतत् आगतवान् ॥ ३१ ॥

स इति । संयुगे रणे साधुः सांयुगीनः । प्रतिजनादिभ्यः खञ् इति प्रतिजनादि गणे संयुगशब्दस्य पाठात् खञ् । समराजिरे रणाङ्गणे तिष्ठतीति तथोक्तः । वारबाणेन कञ्चुकेन सहितः सवारबाणः । कञ्चुको वारबाणोऽस्त्रीत्यमरः । तलेन ज्याघातवारणेन सहितः सतलः । गोधे तले ज्याघातवारण इत्यमरः । तूणेन निषङ्गेण सहितः सतूणः । तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोरित्यमरः । कर्मणे प्रभवतीति कार्मुकं तेन सहितःसकार्मुकः । कर्मण उकञ् । सर्वैः अवशिष्टैः भटैः उपेतः स जमालनामा सेनापतिः । समानि पर्वाणि भजन्ति तान् बाणान् ससर्ज मुमोच ॥ ३२ ॥

घनइति । यथा घनः मेघः प्रावृषि वर्षाकाले महीधरे अतिमात्रं वर्षति तथा स शरान् । व्यात्तं मुखं यैस्तान् भुजङ्गान् इव । राज्ञा शिवेन नियुक्तं यत्सैन्यं तस्मिन् असृजत् विसृष्टवान् ॥ ३३ ॥

तदीयेति । कचैः आचिताः व्याप्ताः ताम्राणि मुखानि येषां ते ताम्रमुखाः सुरां पिबन्ति ते सुरापाः । आतोनुपसर्गे क इति क प्रत्ययः । वाजिवाहाः तस्य इमे तदीयाः तदीयाश्च ते योधाश्च तदीययोधाः । वृद्धाच्छः । शरैः भल्लैः परिघैः कृपाणैः आजौ संग्रामे । पृथिव्या ईश्वरः पार्थिवः तस्य शिवभूपस्य । तस्येश्वर इत्यण् । सैन्यं अपीडयन् ॥ ३४ ॥

दिन इति । खलीनेन मुखरज्वा लोके लगामइति प्रसिद्धेन लीनं नम्रं आननं

तयोरभूद्युद्धमतीव घोरं ससैन्ययोः सादितवीरचम्वोः ॥
घटीद्वयं तीक्ष्णशरैरमोघैः खड्गैश्चभल्लैः करवालकैश्च ॥ ३६ ॥
गजाश्चमत्तास्तुरगाः क्रमेला वृषाश्च खड्गाभिहता निपेतुः ॥
नृणां शिरोभिः पतितैश्चदेहैः समास्तृता भूरुधिरौघपूर्णा ॥ ३७ ॥
नृपस्य वीरैर्बहुधा विशीर्णा विदुद्रुवुस्ते यवनाःप्रभीताः ॥
तृणं दधुः केचन वक्त्रमध्ये भटाः प्रणेमुश्च तथैव केचित् ॥ ३८॥
गजं विशुण्डं विनिपात्य भूमौ जमालसंज्ञं बिभिदुः कृपाणैः ॥
नृपस्यवीराः स तु देहमाजौ निधाय* यातो दिवमेव वीरः ॥३९ ॥
हतावशिष्टा[१२] विदिशोदिशश्च ययुर्निशायां विनिधाय हेतीः ॥
मृगा§ यथालक्ष्य भयाद्द्रवन्ति वृकांस्तथा भीतिविवर्णवक्त्राः॥४०॥

मुखं यस्य स च असौ वाजी अश्वःतेन सीदति गच्छतीति तथोक्तः । कृपाणः पाणौ यस्येति कृपाणपाणिः नृपस्य सैन्यनाथः सेनापतिः योधसंघैः सह । यवनाधिपस्य यवनसेनापतेः पुरः अग्रभागे। दिनस्य अवसानं समाप्तिः सन्ध्याकाले इत्यर्थः । अभियातः प्राप्तः ॥ ३५ ॥

तयोरिति । सैन्येन सहितौ ससैन्यौ तयोः ससैन्ययोः । वीराणां चमूः वीरचमूः सादिता वीरचमूर्याभ्यां तौ तयोः सेनाधिपयोः युद्धं अमोघैः सफलैः तीक्ष्णैः शरैः खड्गैः भल्लैः करवाला एव करवालकास्तैश्च घटीद्वयं अतीव अत्यन्तं घोरं दारुणं अभूत्॥ ३६ ॥

गजा इति । मत्ताः गजास्तुरगाश्च क्रमेला उष्ट्राश्च वृषा यन्त्रनियुक्ताः खड्गैः अभिहताः सन्तः निपेतुः पतन्ति स्म । भूः नृणां पतितैः शिरोभिः देहैश्च समास्तृता अत एव रुधिरौघेणपूर्णा अभूत् ॥ ३७ ॥

नृपस्येति । नृपस्य शिवभूपस्य वीरैः बहुधा बहुप्रकारेण विशीर्णाः विखण्डिताः। शॄ हिंसायामित्यस्मात् क्तप्रत्यये रदाभ्यामित्यादिना तकारस्य नकारः । अत एव भीताः यवना विदुद्रुवुः पलायनं चक्रुः । केचन भटा वक्त्रमध्ये तृणं दधुः । तथैव केचित्प्रणेमुः नमश्चक्रुः ॥ ३८ ॥

गजमिति । नृपस्य वीरा गजं विगता शुण्डा यथा स्यात्तथा भूमौ विनिपात्य जमालसंज्ञं कृपाणैः बिभिदुः विदारयामासुः । स तु जमालनामा आजौ देहं निधाय दिवमेव यातः समरादनिवर्तनादिति भावः ॥ ३९ ॥

हतावशेषा इति । हतेभ्यो ये अवशिष्टास्ते हेतीः आयुधानि रणभूमाविति शेषः विनिधाय निशायां रात्रौ सत्यां । निशा निशीथिनी रात्रिरित्यमरः । भीत्या भयेन

---

* 'निवेश्य' पा० मे०. १२. '०वशेषा' पा० मे०. § 'अजा' पा० मे०.

महाबलोऽब्दुल्लसुतस्तु वल्ली निबध्य चीराणि पदद्वये सः ॥
दुद्राव वृक्षैः पिहितं प्रदेशं दिनावसाने तिमिरप्रपूर्णम् ॥ ४१ ॥
पचिक्रियार्णोनयनादिकर्म-रता मनुष्या अपि भिक्षुका ये ॥
भिषग्वराः स्त्रीनिचयाश्च दीनाः शस्त्रैर्विहीना अपि तान्न जघ्नुः ॥४२॥
बभूव तद्भूमितलं पिशाच-पतेर्निवासेन समं तदानीम् ॥
उदूचुरेके शिवमामवेति हा तात हा बालसुतेति केचित् ॥ ४३ ॥
अनर्गलावाजिगजादिवाहा इतस्ततो बभ्रमुरार्तिभाजः ॥
नृपालसेनापतिसैनिकास्तानपाहरन् हृष्टतराः समेताः ॥ ४४ ॥
सदुंदुभिध्वाननिवेदितोग्रजयो ययौ बन्दिजनस्तुतश्रीः ॥
यशोवितानैर्विदिशो दिशश्च विपूरयन् राजगिरिं ससैन्यः ॥ ४५ ॥

विवर्णानि वक्त्राणि येषां ते तथा भूताः सन्तः विदिशो दिशश्च तथा ययुर्जग्मुर्यथा मृगा वृकानालक्ष्य दृष्ट्वा भयाद्द्रवन्ति ॥ ४० ॥

महेति । महत् बलं यस्येति महाबलः । आन्महत इत्यादिना आत्वं । अब्दुल्लस्य सुतः वल्ली पदयोः द्वये चीराणि वस्त्रखण्डानि निबध्य उपानदभावादिति भावः । दिनस्य अवसानं प्रदोषः तस्मिन् तिमिरेण अंधकारेण । तमिस्त्रं तिमिरं तम इत्यमरः । पूर्णं वृक्षैः पिहितं आच्छादितं प्रदेशं दुद्राव ॥ ४१ ॥

पचिक्रियेति । राजभटा इतिशेषः । पचिक्रिया पाककरणं अर्णसः उदकस्य नयनं प्रापणं । पाथोऽर्णः सलिलं जलमित्यमरः । ते आदी येषां तानि कर्माणि तत्र नियुक्ता मनुष्या । ये च भिक्षन्ति ते भिक्षवः भिक्षव एव भिक्षुकाः । सनाशंसभिक्षउरितीति कर्तरि उ प्रत्ययः ततः स्वार्थे कः । ये च भिषग्वरा वैद्या दीनाश्च स्त्रीनिचयाश्च शस्त्रैर्विहीना अपि ये तान् न जघ्नुः ॥ ४२ ॥

बभूवेति । तत् भूमितलं तदानीं तस्मिन् काले पिशाचपतेः शिवस्य निवासेन श्मशानेन तुल्यं बभूव । तत्र भूतले एके ज्ञानिनः हे शिव शंभो मां अव रक्ष उत्तमां गतिं देहीति प्रार्थयामासुरित्यर्थः । एके अज्ञा हा इति खेदे हा तात हे पितः एके हा बाल सुत अल्पवयस्क पुत्र । अल्पवयस्त्वव कथं भरणं स्यादिति बुद्ध्येति भावः । यद्वा । बालः सुतो यस्याः सा बालसुता स्त्री ममेति केचित् उदूचुः उच्चैः बभाषिरे ॥ ४३ ॥

अनर्गला इति । नास्ति अर्गला बन्धनं येषां ते अनर्गलाः । तद्विष्कंभोऽर्गलं न ना इत्यमरः । आर्तिं पीडां भजन्ति ते आर्तिभाजः वाजिगजादयो वाहाः वाहनानि इतस्ततः रणभूमौ बभ्रमुः । शास्तृणामभावादिति भावः । नृपालस्य शिवभूपालस्य सेनापतेः सैनिकाः समेता मिलिता हृष्टतराः । स्वजयादिति भावः । तान् वाहान् अपाहरन् ॥ ४४ ॥

स इति । दुन्दुभेः भेर्याः । भेरी स्त्री दुन्दुभिः पुमानित्यमरः । तस्य ध्वानः

शिवोऽपि भूपो जयिनं तमारात् गतं समालिंग्य विभूषणाद्यैः ॥
गिरा च सत्कृत्य महीसुरेभ्यो धनं ददौ भूरितरं नरेन्द्रः ॥ ४६ ॥
शतं गजाः पञ्चसहस्रसंख्यतुरंगमास्तद्विगुणाः क्रमेलाः ॥
रथाः सहस्रं वसनानि भूषा मुक्ताफलानां प्रकराश्च यत्तत् ॥४७ ॥
रत्नानि हेम्नोऽपि च सप्तलक्षमुद्राः पुरस्तस्य निधाय तस्थौ ॥
भटाग्रणीः सादितशत्रुपक्षः स वाहिनीपो विनिबध्य पाणी ॥४८॥
नृपस्तु तत्सर्वमपि प्रगृह्य प्रत्यर्पयद्वीरभटाधिपाय ॥
जगाद चैतत् सकलं त्वयाद्य प्रदेयमेवं स्वभटप्रभुभ्यः ॥ ४९ ॥

शब्दः । ध्वनिध्वानरवस्वना इत्यमरः । तेन निवेदितः प्रख्यापितः उद्यन् नयो यस्य सः । बन्दिजनेन स्तुतिपाठकजनेन स्तुता श्रीर्जयश्रीर्यस्य सः । यशांस्येव वितानानि उल्लोचास्तैः दिशः विदिशश्च विपूरयन् ससैन्यः स नयुनामा सेनापतिः रात्नगिरिं नाम पर्वतं शिवभूपाधिष्ठितं ययौ जगाम ॥ ४५ ॥

शिवोऽपीति । नर इन्द्र इव नरेन्द्रः । उपमितव्याघ्रादिभिरित्यादिना समासः । शिवोऽपि भूपः जयः अस्यास्तीति जयी तं जयिनं आरात्समीपे गतं प्राप्तं तं सेनापतिं समालिंग्य विभूषणाद्यैर्गिरा वाण्या च सत्कृत्य महीसुरेभ्यः ब्राह्मणेभ्यः भूरितरं प्रभूततरं धनं ददौ ॥ ४६ ॥

युग्मेन राज्ञे शत्रुसेनाधिगतगजाश्वादिसमर्पणमाह । शतमिति । अग्रं नयतीत्यग्रणीः । कर्तरि क्विप् । अग्रग्रामाभ्यां नयतेरिति णत्वं । भटेषु अग्रणीः श्रेष्ठः अत एव सादितः विनाशितः शत्रुपक्षो येन । वाहिनीं सेनां पाति इति वाहिनीपः सेनापतिः स नयुनामा शतं शतसंख्या गजाः पंचसहस्राणि संख्या येषां ते तुरङ्गमाः तद्विगुणिताः क्रमेलाः सहस्रमिता रथा वसनानि भूषाः भूषणानि मुक्ताफलानां प्रकराश्च इति यत् तत् सामान्ये नपुंसकं कर्म ॥ ४७ ॥

रत्नानीति । तथा रत्नानि हीरकादीनि हेम्नः सुवर्णस्यापि सप्तलक्षसंख्या मुद्रा होनइति लोके प्रसिद्धाः । चकाराद्रजतस्यापि मुद्राः । तस्य शिवभूपस्य पुरो निधाय पाणी हस्तौ विनिबध्य वस्त्रेणेति शेषः तस्थौ स्थितवान् ॥ ४८ ॥

नृप इति । नृपस्तु शिवभूपस्तु तत्सर्वं गजाश्वादिकं प्रगृह्य भटानां अधिनायः भटाधिनायः वीरश्चासौ भटाधिनायश्च वीरभटाधिनायस्तस्मै प्रत्यर्पयत् अर्पितवान् । त्वया अद्य अस्मिन् दिने न तु दिनान्तरे एतत्सकलं स्वे स्वकीया ये भटास्तेषां प्रभुभ्यः । एवं । मया यथा लोभं परित्यज्य तुभ्यं तथैव त्वयापीत्यर्थः प्रदेयं इति जगाद च ॥ ४९ ॥

---

१. 'तत्रभटैकनाये' । 'वीरवराधिपेऽस्मिन' इति च वा पाठः.

प्रजाप्रपीडाकरशत्रुवर्गविनाश आरब्ध इतो मया यत् ॥
स्वप्ने समागत्य निशावसाने[14] यदाह देवी हर नीचवर्गम् ॥ ५० ॥
निशम्य वाक्यं नयुनामधेयस्तथा स चक्रे वरवीरनाथः ॥
भटा यथाभागमवाप्य सर्वे कृतज्ञतामस्य जगुः समेताः ॥ ५१ ॥
अतीव[15] भक्तो नरनाथनाथः समर्चनार्थं[16] जगतो जनन्याः ॥
विधाय शैलीं प्रतिमां शिवाया स वासयामास गिरौ प्रतापे ॥५२॥
विजयपुरपतिर्निशम्य वृत्तं समरभवं सकलं चराखिलेभ्यः ॥
त्वदयसरसिजे स कुन्तघातैरविरतविद्ध इवाभवत्तदानीम् ॥ ५३ ॥

वीरेभ्यः पारितोषकदाने हेतुमाह । प्रजेति । मया इतः अस्मादिति इतः अस्माद्दिवसात् अमुं दिवसमारभ्य इत्यर्थः । प्रजानां प्रपीडास्तासां कराः कारकाः । पचादित्वादच् । शत्रवस्तेषां वर्गः समूहः तस्य विनाशो यस्मात् आरब्धोऽस्ति । विनाशस्यापि हेतुमाह । यद्यस्मात्कारणात् देवी जगदंबिका निशाया राज्या अवसाने गोदोहनसमये इत्यर्थः । एतेन स्वप्नस्य झटिति प्रत्ययः स्यादितिभावः । स्वप्ने स्वप्नावस्थायां समागत्य । हे शिवेति शेषः नीचानां दुर्वृत्तानां वर्गं हर नाशय इत्याह वदति । ब्रूञ् व्यक्तायां वाचीत्यस्माल्लटि तिपि णलि आहादेशः । देव्याः पुनः पुनः प्रेरणादवश्यं कर्तव्ये दुर्जनक्षये सहायभूतवीरतोषार्थं सर्वमिदं तेभ्यो देयमिति भावः ॥ ५० ॥

निशम्येति । वराः श्रेष्ठा ये वीरास्तेषां नाथः स्वामी नयुरिति नामधेयं यस्येति नयुनामधेयः । आख्याह्वे अभिधानं च नामधेयं च नाम चेत्यमरः । तथा शिवभूपोक्तप्रकारेण चक्रे कृतवान् । सर्वे भटा । भागं अनतिक्रम्येति यथाभागं । यथार्थेऽव्ययीभावः । अवाप्य प्राप्य अस्य नयुनाम्नः शिवभूपस्य च कृतं जानातीति कृतज्ञः तस्य भावः तत्ता तां समेता मिलिताः सन्तो जगुः वारंवारं सस्मरुरित्यर्थः ॥ ५१ ॥

अतीवेति । जगतः जनन्या अंबिकाया अतीव अत्यन्तं भक्तः । नराणां मनुष्याणां नाथाः स्वामिनस्तेषां नाथः शिवभूपः । शिवाया अंबिकायाः । शिवा भवानी रुद्राणीत्यमरः । सम्यक् अर्चनं पूजनं समर्चनं तदर्थं । शिलाया इयं शैली तां शिलामयीं । शिलाशब्दादिदमर्थेऽणि टिड्ढेति ङीप् । प्रतिमां प्रतिकृतिं विधाय कृत्वा प्रतापे प्रतापसंज्ञे गिरौ वासयामास स्थापयामास । वस निवासे इत्यस्मात् हेतुमण्णिचि अनेकाच्त्वादाम् प्रत्यये कृञ् चानुप्रयुज्यते लिटीति लिट्परः असधातोः प्रयोगः । स्थावरजङ्गमात्मके सकले जगति देवीवाभमनानन् मूढः अब्दुल्लो यवनः विजयपुरात् पूर्वं निर्गत्य तुलजापुराख्यदेवीस्थानं आगत्य तत्रत्यां देवीप्रतिमां शिवभूपेऽति

[14] 'जगद्धितार्थां' पा० भे०. [15] 'भियोतिभक्तो' । [16] 'समर्हणार्थं' इति च पाठः । [17] 'भिया' पा० भे०.

अब्दुल्लं निहतं तदीयतनयं यातं भयार्त्तं रणा-
च्छ्रुत्वा सा यवनाधिपस्य महिला हेला विसृज्याखिलाः ॥
पर्यङ्कादवरुह्य कुन्तलचयं प्रोन्मुच्य हा हन्त हा
राज्यं मग्नमिदं मदीयमधुनेत्येवं बभाषे वचः ॥ ५४ ॥
पुरपतिः पतितो भयवारिधौ किमधुनाधियुता जनताऽखिला॥
मम करिष्यति यास्यति चेच्छिवो बत शिवोऽप्यशिवो भवितेति सा ॥
॥ ५५ ॥

इति श्रीशिवकाव्ये पुरुषोत्तमपण्डितविरचिते तृतीयश्चमत्कारः ॥

प्रसन्नां विस्फोट्य चूर्णं चकार । पुनश्च घरट्टैर्गोधूमचूर्णवत् अतिसूक्ष्मं विधाय शिवभूपेन सार्धं युद्धार्थमागतस्तद्दोषेणैव स मृतः ततः शिवभूपः स्ववासस्थानसमीपे एव गण्डक्याः शिलामानीय प्रतापदुर्गे तां देवीं स्थापयामासेति कथानुसंधेया ॥५२॥

विजयेति । विजयपुरस्य पतिः स समरभवं रणोत्पन्नं सकलं वृत्तं । चरन्ति ते चराः । पचाद्यच् । तेषां अवलयः पंक्तयस्ताभ्यः निशम्य श्रुत्वा हृदयसरसिजे हृत्कमले कुन्तघातैरविरतं निरन्तरं यथा तथा विद्ध इव । संतताविरतानिशमित्यमरः । तदानीं तस्मिन् काले अभवत् ॥ ५३ ॥

विजयपुराधिपतेः स्त्री सर्वं राज्यकृत्यं चकारातस्तयोक्तं द्वाभ्यामाह । अब्दुल्लेति । यवनाधिपस्य विजयपुराधिपस्य महिला स्त्री अब्दुल्लं निहतं श्रुत्वा भयार्तं तदीयं तनयं रणात् यातं च श्रुत्वा । अखिला हेला लीलाः । हेला लीला क्रिया चेष्टेत्यमरः । विसृज्य । पर्यंकात् अवरुह्य उत्तीर्य । कुन्तलानां चयं प्रकर्षेण उन्मुच्य । हा इति खेदे हन्त खेदे हा खेदे मदीयं इदं राज्यं अधुना अस्मिन् काले मग्नं इत्येवं वचः बभाषे उवाच ॥ ५४ ॥

पुनश्च यद्बभाषे तदाह । पुरपतिरिति । पुरपतिः मम भर्ता भयमेव वारिधिस्तस्मिन् पतितः । अतः प्रजारक्षणासमर्थ इति भावः । शिवः शिवभूपः अधुना इदानीं यास्यति चेत् आधिना मनोव्यथया युता । पुंस्याधिर्मानसी व्यथेत्यमरः । अखिला संपूर्णा जनानां समुहो जनता किं करिष्यति । तस्याः रक्षणं कथं भवेदित्यर्थः । बत इतिखेदे । शिवोऽपि नाम्ना कर्मणा च मंगलोऽपि स शिवभूपः अस्माकं अशिवः अमंगलः दुःखप्रद इत्यर्थः भविता इति बभाषे इति पूर्वेणान्वयः ॥ ॥५५॥

इति श्री शिवकाव्यटीकायां प्रकाशिकाख्यायां स्वयकृतायां तृतीयश्चमत्कारः ॥ ३ ॥

---

राज्ञा न तुष्टेन कदापि भाव्यं तुष्टं नृपं यात्यपहाय लक्ष्मीः ॥
यात्रा मयातः सततं विधेया राज्यस्य रक्षा च कथं मम स्यात् ॥ १ ॥
इत्थं चिरं चिन्तयति प्रपेदे तत्रेति कृत्यं मनसा नृपालः ॥
सह्याद्रिसानुष्वखिलेषु दुर्ग-संघो विधेयः सुदृढो मयात्र ॥ २ ॥
सद्यः समुत्थाय निजाधिवासाद्दुर्गात्स मूलेऽस्य विदार्य भूमिम् ॥
पाषाणचूर्णादि च दर्शयित्वा तत्कार्यकर्त्रे धनमप्यतोऽदात् ॥ ३ ॥
षष्ट्यन्वितं दुर्गशतत्रयं तत्सकारयामास चतुर्भिरब्दैः ॥
पाषाणचूर्णादि धनं च तत्तन्मूले निखायास्य च सिद्धयेऽदात् ॥ ४ ॥
यन्त्राणि तद्गोलकसंघराशीन् धनं च धान्यं तृणकाष्ठवृन्दम् ॥

राज्ञेति । राज्ञा भूपेन कदापि तुष्टेन न भाव्यं न भवितव्यं । तयात्वेऽनिष्टमाह । लक्ष्मीः तुष्टं नृपं अपहाय त्यक्त्वा याति गच्छति । तदुक्तं । असंतुष्टा द्विजा नष्टाः सन्तुष्टा इव पार्थिवाः । सलज्जा गणिका नष्टा निर्लज्जेव कुलाङ्गना ॥ अतः अस्माद्धेतोः मया सततं निरन्तरं । सततानारताश्रान्तसन्तताविरतानिशमित्यमरः । यात्रा जैत्रयात्रा विधेया कार्या । यात्रायां च एकमनिष्टमस्तीति चिन्तयति । मम राज्यस्य । संपादितस्येत्यर्थः । रक्षा रक्षणं कथं स्यात् । शत्रूणां बाहुल्यात् इतिभावः ॥ १ ॥

इत्थमिति । तस्मिन्निति तत्र राज्ञि । सप्तम्यास्त्रल् । मनसा चेतसा अनेन प्रकारेण इत्थं पूर्वश्लोकोक्तप्रकारेण चिरं चिरकालं चिन्तयति सति नॄन् पालयतीति नृपालः राजा । कर्मण्यण् । इति वक्ष्यमाणप्रकारेण कृत्यं प्रपेदे प्रतिज्ञातवान् । इति किं । अखिलेषु संपूर्णेषु सह्याद्रेः सानुषु शिखरेषु । स्नुः प्रस्थः सानुरस्त्रियामित्यमरः ॥ सुतरां दृढः दुर्गसंघः विधेयः कार्यः ॥ २ ॥

सद्य इति । सः शिवभूपः सद्यः तत्कालं । सद्यः परुदित्यादिना निपातितः । निजस्य स्वस्य अधिवासात् वासस्थानात् दुर्गात् राजदुर्गादित्यर्थः । समुत्थाय निर्गत्य अस्य राजदुर्गस्य मूले भूमिं विदार्य खात्वा तस्य दुर्गस्य कार्यं प्राकारबन्धरूपं तस्य कर्त्रे शिल्पिने पाषाणाश्च चूर्णं च पाषाणचूर्णानि तानि आदिर्यस्य तत् द्रव्यं बंधनसामग्रीमिति यावत् दर्शयित्वा । अतः अस्मादेव गिरेः मूलादित्यर्थः धनमपि अदात् दत्तवान् ॥ दानार्थादस्माल्लुङि गातिस्थेत्यादिना सिचो लुक् ददातिरिह भाक्तः रजकाय वस्त्रं ददातीति वत् । यदाह भगवान्भाष्यकारः खण्डिकोपाध्यायः शिष्याय चपेटिकां ददाति ॥ ३ ॥

षष्ट्येति । शिवभूपः तत लोके प्रसिद्धं षष्ट्या अन्वितं दुर्गाणां शतत्रयं षष्ट्यधिकत्रीणि शतानीत्यर्थः । पंक्तिविंशतीत्यादिना निपातितः षष्टिशब्दः । चतुर्भिः अब्दैः

१. 'मूलेषु खात्वा०' पा० भे० ।

सर्वेषु दुर्गेषु दशाब्दपूरं निवेशयामास स राजराजः ॥ ५ ॥
सर्वेषु दुर्गेषु स धीरवीरान्कुलेषु जातान्प्रथितान् रणेषु ॥
अचीकरद्वीरसमूहमुख्यां स्तांस्तान्धनं तोषकरं च दत्त्वा ॥ ६ ॥
एवं विधायाशु स वीरवर्यो मेने मयाद्यैव जितं हि राज्यम् ॥
दुर्गाणि धान्यादियुतानि कोशो मित्राण्यमात्याश्च यतः सहायाः॥७॥
एकदाचिन्तयद्राजा जलदुर्गाणि कानिचित् ॥
समुद्रे सन्ति तत्रत्या बाधन्ते मत्प्रजा इमाः ॥ ८ ॥
तेषु दण्डः कथं हा स्यात्कथं रक्ष्याः प्रजा मया ॥
समुद्रे यदि दुर्गं स्यात्संसेत्स्यति तदाखिलम् ॥ ९ ॥

कारयामास कारितवान्। तस्य तस्य दुर्गस्य मूले निखाय खात्वा पाषाणचूर्णादि धनं च अस्य दुर्गसमूहस्य सिद्धये अदात्। तपःसामर्थ्यादिति भावः ॥ ४ ॥

यन्त्राणीति। राज्ञां राजा इति राजराजः। राजाहःसखिभ्यष्टच्। स शिवभूपः सर्वेषु दुर्गेषु यंत्राणि तोफासंज्ञानि तेषां यंत्रोपयुक्तानां गोलकानां संघानां राशीन्। पूरयति तर्पयति पालयति वा। पूरं पचाद्यच्। दशानांअब्दानां पूरं पूरकं। दशवर्षपर्यंतं वीररक्षणकरमित्यर्थः। धनं च धान्यं तृणकाष्ठानां वृन्दं समूहं निवेशयामास स्थापयामास ॥ ५ ॥

सर्वेष्विति। स शिवभूपः सर्वेषु दुर्गेषु धीरान् धैर्यवन्तः वीरान् शूरान् कुलेषु वीरकुलेषु जातान् रणेषु संग्रामेषु प्रथितान् प्रख्यातान् तान् तान् तत्तन्नामकान् तोषकरं धनं च दत्वा वीरसमूहमुख्यान् नायकान्। लोके हवालदार इतिप्रसिद्धान्। अचीकरत् कृतवान्। स्वार्थे णिजंतात् कृधातोर्लुङि चङि द्वित्वे रूपं ॥ ६ ॥

एवमिति। स वीरवर्यः एवं उक्तप्रकारेण विधाय कृत्वा मया अद्यैव अस्मिन्नेव दिने राज्यं जितं इति हि निश्चयेन मेने। यतः यस्माद्धेतोः धान्यादियुतानि दुर्गाणि कोशः अर्थराशिः मित्राणि। अमाभवा अमात्याः। सहार्थात् अव्ययादमाशब्दात्त्यप्। अमान्तिकसहार्थयोरित्यमरः। सहायाः सन्तीति शेषः ॥ ७ ॥

एवं सागरजलाद्बहिःस्थितशत्रुपीडापरिहारोपायं विधाय सागरमध्यस्थशत्रुपराजयसाधनं चिन्तयति। एकदेति। राजा एकस्मिन् काले एकदा इति अचिन्तयत्। इति किं। समुद्रे जलदुर्गाणि कानिचित् सन्ति तत्र भवास्तत्रत्याः। त्रल्प्रत्ययान्तस्य तद्धितश्चासर्वविभक्तिरित्यनेन अव्ययत्वात् भवार्थेत्यप्। इमाः मत्प्रजाः बाधन्ते पीडयन्ति ॥ ८ ॥

तेष्विति। तेषु शत्रुषु हा इति खेदे दण्डः शासनं कथं स्यात् मया प्रजाः कथं रक्ष्याः। समुद्रे यदि दुर्गं स्यात्तदा अखिलं प्रजारक्षणं संसेत्स्यति सिद्धं भवेत् ॥९॥

इत्थं विचिन्त्य मेधावी गतोऽसौ सागरं प्रति ॥
तत्र स्नात्वा चानशनो रात्रौ सुष्वाप तत्तटे ॥ १० ॥
अब्धिः पुरुषरूपेण रात्रावागत्य चाब्रवीत् ॥
राजराज जनानन्दकारिन्मम वचः शृणु ॥ ११ ॥
इतोऽविदूरेऽस्ति[2] महान्पर्वतो जलमध्यगः ॥
तस्योपरि त्वया दुर्गं विधेयं नातिविस्तृतम् ॥ १२ ॥
एकेन दिवसेन त्वं यदि दुर्गं विधास्यसि ॥
तर्हि ते[3] दर्शयिष्यामि पर्वतं नातिदूरतः ॥ १३ ॥
इत्युक्त्वाऽदर्शनं वार्धिर्गतो राजाप्यकारयत् ॥
शिल्पिनां स सहस्रैस्तु दुर्गं दृढतरं महत् ॥ १४ ॥
दृषत्संघोपरिदृषत्संघोऽयमिति चाङ्किताम् ॥
कृत्वा प्राकाररचनां नरपोऽगात्स सागरम् ॥ १५ ॥

इत्थमिति । मेधास्यास्तीति मेधावी बुद्धिमान् । अस्मायामेधास्रजो विनिरितिविनिः । राजा इत्थं उक्तप्रकारेण विचिन्त्य सागरं प्रति गतः तत्र सागरे स्नात्वा अनशनः उपोषितः तस्य सागरस्य तटे सुष्वाप ॥ १० ॥

अब्धिरिति । अब्धिः पुरुषरूपेण रात्रौ आगत्य तं उत्थाप्य च अब्रवीत् उक्तवान् । हे राजराज राजश्रेष्ठ जनानामानन्दं करोति तच्छील हे जनानन्दकारिन मम वचः शृणु ॥ ११ ॥

इतोऽइति । इतः त्वदधिष्ठितात् प्रदेशात् अविदूरे समीपे महादुर्गविधानोपयुक्तः जलमध्यगः पर्वतः अस्ति तस्य उपरि त्वया नातिविस्तृतं । नञर्थनशब्दस्य सुप्सुपेतिसमासः । दुर्गं विधेयं कर्तव्यं ॥ १२ ॥

राज्ञो लोके तपस्वित्वं प्रकटयितुं कार्यशैघ्र्यमुपदिशति । एकेनेति । त्वं एकेन दिवसेन यदि दुर्गं विधास्यसि तर्हि ते तुभ्यं नातिदूरतः समीपे एव पर्वतं दर्शयिष्यामि ॥ १३ ॥

इतीति । वार्धिः समुद्रः इति पूर्वोक्तप्रकारेण उक्त्वा अदर्शनं गतः पुरुषरूपं तिरोहितवानित्यर्थः । राजापि शिल्पिनां सहस्रैः दृढतरं महत् विस्तृतं तन्मालवणाख्यं दुर्गं अकारयत् कारितवान् ॥ १४ ॥

दुर्गविधानप्रकारमाह । दृषदिति । नरान् पातीति नरपः शिवभूपः । आतोनुपसर्गे कः । दृषतां पाषाणानां यः संघः तस्योपरि अयं दृषत्संघ इति अंकितां चिन्हितां प्राकारस्य रचनां निर्मितिं कृत्वा सागरं अगात् गतवान् । एकेन दिवसेनैव दुर्गं कुर्वित्युक्तमतः स राजा पूर्वं सागरतीरे पाषाणैः सुघटि॰ः प्राकाररचनां आ-

२. '॰ऽस्तुमहान' पा॰ भे॰ । ३. 'त्वां' पा॰ भे॰ ।

नत्वा स प्रार्थयामास दर्शयाद्य महीधरम् ॥
एवं वदति राजेन्द्रे जलं तत्याज पर्वतम् ॥ १६ ॥
शिलोच्चये सुशीलोऽसावेकेनाह्नैव तद्व्यधात् ॥
उदितं सरसस्तस्मात्किमु पुष्करमद्भुतम् ॥ १७ ॥
अब्धिरच्छादयत्तूर्णं पर्वतं सर्वतस्ततः ॥
जलादुपरि तद्दुर्गं द्विहस्तं ददृशे जनैः[४] ॥ १८ ॥
गृहाणि रमणीयानि यन्त्रस्थापनभूमिकाः ॥
पश्चादकारयद्राजा जलयानसुसाधनः ॥ १९ ॥
सागरस्य जलेनात्र निर्वाहो लवणेन किम् ॥
तन्मालवणमित्याहुर्जलदुर्गं सुदुर्गमम् ॥ २० ॥

दावेकेन वर्षेण चकार सा च इयं पाषाणपंक्तिः प्रथमा तदुपरि इयं द्वितीया तदुपरि इयं तृतीयेत्यादिअंकैश्चिह्नितां कृत्वा अनन्तरं जलमध्यगते पर्वते तस्या निवेशनार्थं समुद्रमगादित्यर्थः ॥ १५ ॥

नत्वेति । असौ राजा तमितिशेषः नत्वा प्रणम्य महीधरं दर्शयेतिप्रार्थयामास । एवं राजेन्द्रे वदति सति जलं पर्वतं तत्याज पर्वतादपससारेत्यर्थः ॥ १६ ॥

शिलोच्चय इति । सुशीलः असौ राजा शिलोच्चये पर्वते एकेनैव अह्ना तद्दुर्गं व्यधात् कृतवान् । पूर्वं तीरे एकेन वर्षेण पाषाणघटना कृता पर्वतोपरिदुर्गं तु एकेनैवदिवसेन चकारेत्यर्थः । अतित्वरयोत्पादितत्वात् कमलत्वेनोत्प्रेक्षते । तस्मात् सरसः सरोवरात् । सागरस्य सरस्त्वं भगवता गीतासूक्तं । सरसामस्मिसागर इति । अद्भुतं पुष्करं कमलं उदितं किमु ॥ १७ ॥

अब्धिरिति । ततः दुर्गविधानानन्तरं अब्धिः तूर्णं शीघ्रं । सत्वरं चपलं तूर्णमि-मित्यमरः । सर्वतः सर्वं प्रदेशं । सार्वविभक्तिस्तसिः । अच्छादयत् आच्छादितवान् । तद्दुर्गं जलस्य उपरि ऊर्ध्वभागे द्वौ हस्तौ प्रमाणं यस्येति द्विहस्तं ददृशे दृष्टं जनै-रिति शेषः ॥ १८ ॥

गृहाणीति । जलयानानि नौकास्ता एव साधनं यस्य स राजा रमणीयानि गृ-हाणि यंत्रस्थापनभूमिकाश्च पश्चादकारयत् शिल्पिभिरिति शेषः ॥ १९ ॥

तस्य दुर्गस्य मालवणमिति संज्ञा विहिता तस्या निरुक्तिमाह । सागरस्येति । अत्र अस्मिन् दुर्गे सागरस्य जलेन निर्वाहः पाकसिद्धिः । लवणस्थाने जलमेव प्रक्षेप्यं अतः लवणेन किं नाकिंचित्प्रयोजनमित्यर्थः । ततः तस्मात्कारणात् सुतरां दुर्गमं दुर्गं मालवणमिति आहुः । बुधा इति शेषः ॥ २० ॥

---

४. 'तदा' पा, भे० ।

तत्राप्येकं निजं कंचित्स्थापयित्वा ययौ सुधीः ॥
सतारदुर्गं सुमहत्कृष्णादक्षिणतीरगम् ॥ २१ ॥
तत्रैव कतिचित्कालान् जनताकार्यकृन्नृपः ॥
अवसद्राजधानी सा बभूव जनवल्लभा ॥ २२ ॥
कृतादिजाता अपि राजवर्या नलादयो मद्वशगा अभूवन् ॥
युगे मदीये निवसन्नृपोऽयं न मत्परश्चेद्भवितापकीर्तिः ॥ २३ ॥
इत्थं कलौ चिन्तयति प्रपेदे गागाख्यविप्रो नरराजपार्श्वम् ॥
संयोज्य चैवाशिषमाह राजन्नहं त्वदीयः शुभचिन्तकोऽस्मि ॥ २४ ॥
यत्क्षात्रधर्मेऽभिरतोऽसि नित्यं तत्क्षत्रियस्त्वं खलु कर्मणासि ॥
तवात्र मौञ्जी विहिता विवाहो वेदोक्तमार्गेण तवान्वयेऽपि ॥ २५ ॥

तत्रेति । सुधीः स तत्रापि माल्वणेऽपि एकं निजं आप्तं कंचित्स्थापयित्वा अधिकारिणं कृत्वेत्यर्थः । कृष्णाया दक्षिणे तीरे गच्छति वर्तते तत्तथोक्तं सुमहत् महत्तरं सतारदुर्गं लोके सातारा इति प्रसिद्धं दुर्गं ययौ जगाम ॥ २१ ॥

तत्रैवेति । जनानां समूहो जनता । ग्रामजनबन्धुसहायेभ्यस्तल् । तस्याः कार्यं तत्करोतीति कृत् । क्विपि तुक् । नृपः राजा तत्रैव सतारदुर्गे कतिचित्कालान् कानिचित् वर्षाणि । कालाध्वनोरत्यन्तसंयोगे द्वितीया । संवत्सरावयवत्वविवक्षया कालस्य बहुत्वं । अवसत् स्थितवान् । अतः सा जनवल्लभा जनप्रिया राजधानी बभूव जाता ॥ २२ ॥

राज्ञः परममुत्कर्षमसहमानः कलिश्चिन्तातुरो बभुवेत्याह । कृतादीति । कृतं कृतयुगं आदिर्ययोस्तयोस्त्रेताद्वापरयोः । त्रिषुयुगेष्वित्यर्थः । तद्गुणसंविज्ञानबहुव्रीहिरयं । जाता उत्पन्ना अपि राजवर्या राजश्रेष्ठा नलादयो मद्वशगा मदधीना अभूवन् मया आक्रांता इत्यर्थः । ममेदं मदीयं कलियुगं तस्मिन् । वृद्धाच्छः । अयं नृपः शिवाख्यः मत्परः मदधीनः न चेत् ममेत्यध्याहारः अपकीर्तिः भविता ॥ २३ ॥

इत्थमिति । कलौ कलियुगाभिधाने देवे इत्थं पूर्वोक्तप्रकारेण चिंतयति सति गागाख्यः विप्रः काशीस्थः नरराजस्य पार्श्वं पार्श्वदेशं प्रपेदे प्राप्तवान् । किंच आशिषं आशीर्वादं संयोज्य चिरंजीवेत्यादि आशीर्वादं दत्वा हे राजन् अहं त्वदीयः त्वदाश्रितः अतः शुभस्य कल्याणस्य चिंतकः । ण्वुलि अकादेशः । अस्मीत्याह ॥ २४ ॥

यदिति । त्वं यद्यस्मात् क्षतात् त्रायते इति क्षत्रं क्षत्रियजातिः तस्यायं क्षात्रो धर्मः तस्मिन् अभिरतः असि तस्मात्कर्मणा क्षत्रियोऽसि न जात्येति भावः । अतः

५. 'सतारे॰' पा॰ भे॰ । ६. 'मासान्' पा॰ भे॰ । ७. 'येन जिताः स्वकोत्यां' पा॰ भे॰ । ८. 'युगे कलावत्र सतो विजिग्ये । नृपानय चित्रतरं न चैतत्' पा॰ भे॰ । ९. 'गच्छति त' पा॰ भे॰ । १०. 'नरराजराज' पा॰ भे॰ । ११. 'कर्मणापि' पा॰ भे॰ ।

राजा[12]ऽतितुष्टो नरयानमध्ये द्विजं समारोप्य सहैव[13] निन्ये ॥
मच्चिन्तितं यत्सकलं तथेति कलिः प्रहर्षं परमं जगाम ॥ २६ ॥
तदोपनीतो[14] गुरुणा नृपोऽसौ समेखलः साजिनकः सदण्डः ॥
विहाय मौञ्जीं विधिना स्वकाले[15] पाणिग्रहं चापि चकार वध्वाः ॥ २७ ॥
धनाधीशाः कृता येन धनधीशसमा अपि ॥
वैरिणो वैरिणश्चक्रे स च रंकसमान् समान्[16] ॥
स्वधर्ममनुतिष्ठन्यश्चकार जनपालनम् ॥
कलिना भिन्नधी राजा जजाप त्रिपदीमसौ[17] ॥ २८ ॥
साबित्रीं जपतस्तस्य कियद्भिर्दिवसैर्धनम् ॥
अन्तर्हितं भूमिगतं तावताभूत्कलिः कृती ॥ २९ ॥

अस्मिन् कलौ तव मौंजी उपनयनं विवाहश्च वेदे उक्तो यो धर्मस्तेन विहिता विहितश्चेतिलिंगव्यत्ययेन योज्यं । इतःपरं तवान्वयेऽपि वंशेऽपि भविष्यतीति शेषः । विद्वानपि गागाभट्टः कलिभिन्नमतिः सन् राज्ञः कृपां संपादयितुं शास्त्रविरुद्धं बभाषे इति भावः ॥ २५ ॥

राजेति । राजा अतितुष्टः सन् द्विजं गागाख्यं नरयानमध्ये शिबिकायां समारोप्य स्वेन सहैव एनमिति शेषः निन्ये । कलिः मच्चिंतितं यत् तत्सकलं तथा मच्चिंतितानुरूपमिति परमं प्रहर्षं जगाम प्राप्तवान् ॥ २६ ॥

तदेति । तदा मौंज्युक्ते काले गुरुणा गागाभट्टेन उपनीतः अत एव समेखलः मौंजीयुक्त साजनिकः सदण्डः असौ नृपः स्वकाले समावर्तनोक्ते काले मौंजीं मेखलां विधिना यथाशास्त्रं विहाय उत्सृज्य वध्वाः पाणिग्रहं विवाहं चकार कृतवान् वेदोक्तमार्गेणेतिभावः ॥ २७ ॥

स्वधर्ममिति । यः राजा स्वजातिधर्मं अनुतिष्टन् आचरन् सन् जनपालनं चकार सः असौ कलिना हेतुभूतेन भिन्ना विपरीता बुद्धिर्यस्यतथा सन् त्रिपदीं गायत्रीं जजाप ॥ २८ ॥

अकार्यकरणस्य सद्यः फलमाह । सावित्रीति । तस्य राज्ञः सावित्रीं जपतः सावित्रीजपाद्धेतोः भूमिगतं धनं कियद्भिः दिवसैः अंतर्हितं अदृश्यमभूत् इत्यर्थः । कलिः तावतैव धनाच्छादनेनैव कृती कृतकृत्यः अभूत् ॥ २९ ॥

---

१२. 'राजापि' पा० भे० । १३. 'निकेतनं स्वं सुरराजवेश्मसमानमानंदितसर्वलोकः' पा० भे० । १४. 'तथोपनीतो' पा० भे० । १५. 'स काले' पा० भे० । १६. अयं अधिकः श्लोकः क्वचित् दृश्यते । १७. "पालनं तस्य तच्चक्रे देवो देववरार्चितः" पा० भे० ।

**स राजराजो जितशत्रुसेनः पतिः प्रजानां नयविद्दयालुः ॥**
**शचीपतिश्रीः श्रितकल्पवल्ली दिल्लीपतिं जेतुमसौ प्रतस्थे ॥ ३० ॥**
**रेवामरे वांछितदां नमात्र स्नाहीति सर्वे जगदुश्च सस्नुः ॥**
**पितॄन्प्रतर्प्य द्विजदेवताश्च नौकाशतैस्तां प्रविलंघ्य जग्मुः ॥ ३१ ॥**
**अतीत्य रेवामपि यान्तमग्रे निशम्य दिल्लीपतिराबभाषे ॥**
**अल्लेत्यभीक्ष्णं विगतान्यवाचः सल्ला विधेयो न विरोधकालः ॥ ३२ ॥**

एवं दक्षिणां दिशं जित्वा तत्र दुर्गविधानादि विधायोत्तरां दिशं जेतुं ययावित्याह। स राजराज इत्यादिना। स इति। अथ राजराजः राजाहः सखिभ्यष्टच्। जिता शत्रुसेना येन। नयं नीतिशास्त्रं वेत्तीति नयवित्। अतएव प्रजानां जनानां पतिः पालकः। प्रजास्यात्संततौ जन इत्यमरः। दयतेऽसौ दयालुः। स्पृहिगृहीत्यादिना कर्तरि आलुच्। एभिस्त्रिभिर्विशेषणैर्देशान्तरेऽपि प्रजापीडकत्वाभावः सूचितः। शच्या इन्द्राण्याः पतिः इन्द्रस्तस्य श्रीरिव श्रीर्यस्य। तथोक्तः अतः श्रितानां कल्पवल्ली कल्पवृक्षः। मुक्तानां परमागतिरितिवत् स्त्रीलिंगस्य विशेषणत्वं। असौ राजा दिल्लीपतिं सार्वभौमं जेतुं प्रतस्थे। समवप्रविभ्यःस्थ इत्यात्मने पदं। श्रितकल्पवल्लीति दिल्ल्याः विशेषणं। यद्वाश्रितकल्पवल्लीति दिल्लीपतेर्विशेषणं ॥ ३० ॥

स्वनिवासान्नर्मदापर्यन्तं देशे आक्रान्ते महता हर्षेण युता वीराः परस्परं संबोध्योचुः। रेवामिति। अरे इति अतिहर्षोत्साद्भवं संबोधनं। वांछितं ददातीति वांछितदा तां रेवां नमस्कुरु अत्र अस्यां स्नाहि स्नानं कुरु इति सर्वे वीराः परस्परं जगदुः सस्नुश्च। स्नानमात्रेणैहिकपारलौकिकवांछिततदा इयं नर्मदा इति बाह्योर्थः। अस्यामुत्तीर्णायां बहुलेप्सितधनवस्त्रादिलाभः स्यादत इयं वांछितदेति गूढाशयः। द्विजाश्च देवताश्च द्विजदेवताः अल्पाच्त्वात् द्विजशब्दस्यपूर्वनिपातः। देवान् ततः द्विजान् सनकादीन् ततः पितॄन् सन्तर्प्य। नौकाशतैस्तां प्रविलंघ्य उत्तीर्य जग्मुः ॥ ३१ ॥

अतीत्येति। दिल्लीपतिः इन्द्रप्रस्थाधिपः अस्मिन् काले इन्द्रप्रस्थस्य दिल्लीति संज्ञयैव प्रसिद्धत्वाद्दिल्लीति पदस्य श्लोके निवेशः। रेवां नर्मदां अतीत्य अतिक्रम्य यान्तं शिवभूपं निशम्य श्रुत्वा। विगता अन्या वाचा वाग्यस्मात् स विगतान्यवाचः सन्। भागुरिमतेन हलंतस्याप्याबंतत्वं। अल्ला इति अभीक्ष्णं बभाषे पौनःपुन्येन स्वदेवं सस्मारेत्यर्थः। यद्वा। अल्ल इति मातृस्मरणं। लोके हि अति संकटे मातरं स्मरन्तीति प्रसिद्धं। सल्ला साम विधेयः कर्तव्यः। यवनभाषया सल्ला इति साम नाम। यद्वा। सन्तं लाति रक्षतीति सल्ला। विन्धातूनां अनेकार्थत्वाद्रक्षणार्थत्वं। विरोधस्य कालः न इति अभीक्ष्णं पौनःपुन्येन बभाषे उक्तवान् ॥ ३२ ॥

---

१८. '°मथ' पा० भे०। १९. 'सतर्प्य पितृन' पा० भे०।

ततश्च संमन्त्र्य सुमन्त्रियुक्तः[20] सेनापतिं पातितवीरसेनम् ॥
वीरैः सहस्रैः परिवारितं तं संप्रेषयामास स सार्वभौमः ॥ ३३ ॥
युद्धं तयोर्दारुणमत्र शश्वत्सप्ताहमाखण्डललोकदायि ॥
बभूव सेना यवनेश्वरस्य कृतान्ततलोकं प्रति निर्जगाम ॥ ३४ ॥
सेनापतिर्निर्जितसर्वसेनो[21] जगाम दिल्लीं त्रिचतुर्भिरश्वैः ॥
अकीर्तिभारं शिरसा वहन्सन्नधोमुखः खिन्नतरः कृपाणी ॥ ३५ ॥
सा राजधानीजनता भयेन विलीनसर्वाभरणा कुवासाः ॥
उन्निद्रदृष्टिर्विगतान्नपाना भवेत्कथं हेति जगाद चोच्चैः[22] ॥ ३६ ॥

तत इति । किंच ततः तदनंतरं स इन्द्रप्रस्थाधिपः मंत्रयन्ति ते मंत्रिणः शोभनाश्च ते मंत्रिणश्च सुमंत्रिणस्तैर्युक्तःसन् । संमन्त्र्य विचार्य पातिता वीरसेना येन तं सहस्रैः बहुसहस्रैः वीरैः परिवारितं तं सेनापतिं संप्रेषयामास ॥ ३३ ॥

युद्धमिति । अत्र नर्मदातीरे तयो राजसेनापत्योः दारुणं आखण्डलस्य लोकः तं ददातीति आखण्डललोकदायि । णिनि प्रत्यये युगागमः । युद्धं सप्तानां अह्नां समाहारः सप्ताहः तं सप्तदिनं । समासान्ते टचि टिलोपे रात्राह्नाहाः पुंसीति पुंस्त्वं अनन्तरत्वात्परवल्लिंगतापवादोप्ययं परत्वात् समाहारनपुंसकतां बाधते । कालाध्वनोरत्यन्तसंयोगे इति द्वितीया । शश्वत् निरंतरं बभूव । यवनेश्वरस्य सेना कृतान्तस्य यमस्य लोकं प्रति जगाम गतवती । शिवभूपवीरा युद्धे अभिमुखं हतत्वादाखण्डललोकं ययुः । यवनेश्वरवीरास्तु तथात्वाभावाद्यमलोकं जग्मुरिति सर्वमविरुद्धम् ॥३४॥

सेनापतिरिति । निर्जिता सर्व सेना यस्य सनिर्जितसर्वसेनः अत एव अकीर्तिभारं शिरसा वहन् अत एव अधोमुखः अतएव खिन्नतरः कृपाणी कृपाणमात्रमवशिष्टमित्यर्थः । सन् सुधीरपि । सन् सुधीः कोविदो बुध इत्यमरः । सेनापतिः दिल्लीं त्रयश्चत्वारो वा त्रिचत्वारस्तैस्त्रिचतुर्भिः । संख्ययाव्ययासन्नेत्यादिनासमासः बहुव्रीहौ संख्येये इत्यादिना समासान्तस्तु न अनित्यत्वात् । यद्वा । नायं बहुव्रीहिः । त्रयश्च चत्वारश्च त्रिचत्वारः सप्तेत्यर्थः तैः अश्वैः जगाम ॥ ३५ ॥

सेति । सा राजधानीजनता इन्द्रप्रस्थजनसमूहः भयेन विलीनानि सर्वाभरणानि यस्याः सा कुत्सितानि मलिनानि वासांसि यस्याः सा उद्गता निद्रा यस्याः सा उन्निद्रा दृष्टि र्यस्याः सा विगतं अन्नं पानं च यस्याः सा तथोक्ता अभवत् । इतिशेषः । किंच सा हा इति खेदे कथं भवेत् इति उच्चैः उच्चस्वरेण जगाद उवाच ॥ ३६ ॥

---

२०. 'सार्थे' पा० भे० । २१. 'वीरसेनो' पा० भे० । २२. 'जगादहोच्चैः' पा० भे० ।

पुनश्च समन्व्य निजं प्रधानं भटाग्रगण्यं प्रथितं जनेषु ॥
संप्रेषयामास शकैः स हूणैस्ताम्रैः मुर्वीरैर्दरदाश्मकैश्च ॥ ३७ ॥
इतिश्रीपुरुषोत्तमकविविरचिते शिवकाव्ये चतुर्थश्चमत्कारः ॥

---

शास्ता नाम्नान्वर्थनामा[1] प्रतस्थे दिल्लीपालप्रेषितो धैर्यसिंधुः ॥
कर्षन् सेनावारिधिं दंतिकच्छं वाजिव्रातापूरितं वीरमत्स्यम्[2] ॥ १ ॥
तोफाभिर्नृप्राणहिंसोदिताभिर्हिंसार्थाभिर्भीमशब्दार्तिदाभिः ॥
युक्तो वीरैः कुंतखड्गादिहस्तैश्चापैस्तूणैरन्वितैरन्वितश्च ॥ २ ॥
वाजिस्थैस्तैः कुंजरस्थैश्च यंत्रैरुष्ट्रारूढैर्वीरवर्यप्रगुप्तैः ॥
युक्तो धन्वी बाणसंघं दधानः पृष्ठे खड्गं चर्म वर्मादधानः ॥ ३ ॥

पुनश्चेति । स पुनश्च पुनरपि संमन्त्र्य सम्यक् विचार्य्य भटेषु अग्रगण्यं श्रेष्ठं अत: जनेषु प्रथितं प्रख्यातं शकैः हूणैः ताम्रैः मुर्वीरैः दरदैः अश्मकैश्च संप्रेषयामास । शकादयो यवनजातिभेदाः ॥ ३७ ॥

इतिश्रीशिवकाव्यव्याख्यायां प्रकाशिकाख्यायां स्वकृतायां चतुर्थश्चमत्कारः ॥

पुनश्च संमन्त्र्येत्यादिना निजं प्रधानं प्रेषयामासेत्युक्तं तस्यैव प्रस्थानमाह शास्तेति। दिल्लीपालेन प्रेषितः धैर्यस्य धीरत्वस्य । कर्मणि ष्यञ् । सिंधुः समुद्रः प्रशस्तौ दंतौ येषां ते दंतिनः गजाः । प्रशंसायां अत इनि ठनाविति इनिः । ते कच्छाः कमठाः यस्मिन् तं । वाजिनां अश्वानां व्राताः समूहास्त एव आपः उदकानि तैः पूरितं । वीरा एव मत्स्याः यस्मिन् तं । सेनैव वारिधिः समुद्रः तं कर्षन् । अन्वर्थं यथार्थं नाम यस्य । नाम्ना शास्ता प्रधानवर्यः लोके शास्तिखान इति प्रसिद्धः । शासे रौणादिकस्तृच् निपातनादिडभावः । प्रतस्थे प्रस्थितवान् ॥ १ ॥

तस्य प्रयाणमाह त्रिभिः श्लोकैः तोफाभिरित्यादिभिः । नृणां मनुष्याणां प्राणास्तेषां हिंसा तस्यै उदिताभिः । हिंसैव अर्थो अवयवार्थो यासां ताभिः । भीमेन शब्देन आर्तिं पीडां ददति यास्ताभिः तोफाभिः लोके प्रसिद्धाभिः । भीमादिकात् हिंसार्थात् तुफधातोः पचाद्यच्रूपं युक्तं । कुंत खड्गादयो हस्तेषु येषां तैः चापैः धनुर्भिः तूणैः निषंगैः । तूणोपासंगतूणीरनिषंगा इषुधिर्द्वयोरित्यमरः । अन्वितैः युक्तैः अन्वितः युक्तः ॥ २ ॥

वाजिस्थैरिति । वाजिषु अश्वेषु तिष्ठंति तैः प्रसिद्धैः । सुपिस्थ इति कप्रत्ययः । कुंजरस्थैः गजारूढैः उष्ट्रारूढैश्च वीरवर्यैः प्रगुप्तैः रक्षितैः यंत्रैः युक्तः । धन्वी धनुष्मान् । धन्वी धनुष्मान् धानुष्क इत्यमरः । पृष्ठे खड्गं चर्म च आदधानः । वर्म कवचं च आदधानः ॥ ३ ॥

---

1. 'नाम्ना शास्ता' पा० भे० । 2 'वीरमत्स्याम' पा० भे० ।

**अक्षौहिण्या सेनया संपरीतस्त्रिशत्कोटीः स्वर्णमुद्राः प्रगृह्य ॥**
**भास्वंतं तं छादयंश्छादिताशः शास्ता यातो वाहनोत्थै रजोभिः ॥४॥**
**दिल्लीपालस्याग्रतो यः प्रतिज्ञां चक्रे हत्वा नैव यास्यामि भूपम् ॥**
**सोऽयं राहुर्भानुमन्तं शिवं तं मत्तो यातो म्लेच्छनाथाधिनाथः ॥ ५ ॥**
**उल्लंघ्याद्रिं विंध्यमायांतमेनं श्रुत्वा राजा चिंतयन्मंत्रिवृद्धैः ॥**
**किं वा कार्यं सागरोऽयं प्रयाति कुल्यायामे संस्थितिः स्यात्कथं हा॥६॥**
**केचित्प्रोचुः संधिरेतेन कार्यो भेदो वाऽपि श्रेयसो हेतुरत्र ॥**
**वार्ता कार्या नैव युद्धस्य तेन युद्धं शस्तं कार्यमेवेति वीराः ॥ ७ ॥**

अक्षौहिण्येति । अक्षौहिणीसंख्यया सेनया संपरीतः युक्तः । अक्षौहिणीप्रमाणं तु । एको रथो गजश्चैको नराः पंच पदातयः । त्रयश्च तुरगास्तज्ज्ञैः पत्तिरित्यभिधीयते ॥ १ ॥ पत्तिं तु त्रिगुणामेकं विदुः सेनामुखं बुधाः । त्रीणि सेनामुखान्येको गुल्म इत्यभिधीयते ॥ २ ॥ त्रयो गुल्मा गणो नाम वाहिनी तु गणास्त्रयः । स्मृतास्तिस्रस्तुवाहिन्यः पृतनेति विचक्षणैः ॥ ३ ॥ चमूस्तु पृतनास्तिस्रश्चम्वस्तिस्रस्त्वनीकिनी । अनीकिनीं दशगुणां प्राहुरक्षौहिणीं बुधाः ॥ ४ ॥ एवमेवामरेऽपि । वाहनोत्थैः रजोभिः तं प्रसिद्धं भास्वंतं सूर्यं छादयन् छादिताः आशाः दिशो येन सः । आशाश्च हरितश्च ता इत्यमरः । शास्ता तन्नामकः वीरः त्रिशत्कोटीः स्वर्ण मुद्राः लोके होन इति प्रसिद्धाः प्रगृह्य यातः प्राप्तः इति त्रयाणामन्वयः । विशेषकमिदम् ॥ ४ ॥

दिल्लीति । यः शास्ता दिल्लीपालस्याग्रे भूपं शिवं अहत्वा नैवयास्यामि हत्वैव यास्यामीत्यर्थः इतिप्रतिज्ञांचक्रे । भूपं हत्वा नैव यास्यामि किंतु अहत्वैव यास्यामीति वास्तवोर्थः । मत्तः मदेन । म्लेच्छनाथानां अधिनाथः राहुः राहुसदृशः सः अयं शास्ता भानुमंतं भानुसदृशं तं भूपं यातः ययौ ॥ ५ ॥

उल्लंघ्येति । राजा शिवभूपः विन्ध्यं विन्ध्यसंज्ञं अद्रिं उल्लंघ्य आयान्तं आगच्छन्तं । आङ् पूर्वाद्याधातोर्लटि शत्रादेशः । एनं शास्तृसंज्ञं श्रुत्वा मंत्रिवृद्धैः सह इत्यचिंतयत् । इति किं । अयं शत्रुः सागरः सागरसदृशः प्रयाति अतः किं वा कार्यं विकल्पे वा शब्दः । वा स्याद्विकल्पोपमयोरेवार्थे च समुच्चये इति विश्वः । कुल्यायाः कृत्रिमसरित्सदृशस्य मे संस्थितिः कथं स्यात् । हा इतिखेदे । कुल्यास्यात्कृत्रिमासरिदित्यमरः । कुल्यासागरशब्दौ सिंहो देवदत्त इतिवत् तत्सदृशे लक्षणया । एवं पूर्व श्लोकेपि ॥ ६ ॥

केचिदिति । केचिन्नीतिशास्त्रज्ञाः अशूराः एतेन आगतेन सह । विनापि तद्योगं तृतीया । संधिर्मैत्री वा भेदः परपक्षगानां धनदानेन वशीकरणं कार्यः कर्तव्यः । अत्र शत्रुविषये अपि शब्दात् उभयमपि श्रेयसः कल्याणस्य हेतुः कारणं इति

तस्मिंश्चिंतावारिराशौ निमग्ने देवी दुर्गा देहमस्याविवेश ॥
वाचं सोच्चैराह हे वीरवर्य चिंता कार्या नैव युद्धं विधेयम् ॥ ८ ॥
देवीवाचं पत्रिकायां विलिख्य मुख्यायास्मै दर्शयामासुरेनाम् ॥
पत्रीमेके राजवर्योऽपि दृष्ट्वा हृष्टो युद्धासक्तबुद्धिर्बभूव ॥ ९ ॥
श्रुत्वा पुण्यग्राममेत्य स्थितं तं राजा वीरैः राजदुर्गादगम्यात् ॥
सन्नद्धैः स्वैर्वाजिवाहैरशेषैः पद्दैश्चागात्तं सहस्रप्रसंख्यैः ॥ १० ॥
अश्वारोहान्स्थापयित्वा स चारात् पद्दैः शूरैर्युक्त एकः समेत्य ॥
वासोभित्तीः सप्त खड्गेन भित्त्वा वीराग्र्योऽहन् रक्षकान् षंढसंज्ञान् ॥ ११ ॥
राजा स्त्रीणां संहतिं शस्त्रजीवां दूरात्कृत्वा प्राविशत्तत्समीपम् ॥
नारीमध्ये वर्तमानः स नग्नो राजानं तं कालकल्पं ददर्श ॥ १२ ॥

प्रोचुः । तेन सह युद्धस्य वार्ता न कार्या इति मध्यमा ऊचुः । वीरास्तु तेन सह युद्धं शस्तं युद्धमेव कार्यमेवेति सावधारणं ऊचुः वदंति स्म ॥ ७ ॥

तस्मिन्निति । तस्मिन् शिवभूपे चिंतावारिराशौ चिंतासमुद्रे मग्ने सति । मंत्रिणां वचनस्य नानाविधत्वेनानिश्चयादिति भावः । दुर्गादेवी अस्य नृपस्य देहं आविवेश विशति स्म । सा देवी उच्चैः उच्चस्वरेण इति वाचं आह । इति किं । हे वीरवर्य वीरश्रेष्ठ चिंता न कार्या युद्धमेव विधेयं ॥ ८ ॥

देवीति । एके मुख्याः । एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा । साधारणे समानेऽल्पसंख्यायां च प्रयुज्यते इति विश्वः । देवीवाचं दुर्गावाक्यं शिवभूपमुखादुद्गतां पत्रिकायां विलिख्य मुख्याय देहभानं गताय अस्मै राज्ञे एनां लिखितां पत्रीं दर्शयामासुः । राजवर्योऽपि तां दृष्ट्वा हृष्टः सन् युद्धासक्तबुद्धिर्बभूव ॥ ९ ॥

श्रुत्वेति । राजा शिवः पुण्यग्रामं एत्य आगत्य । आङ् पूर्वादिण् धातोः क्त्वायां ल्यप् । स्थितं तं शत्रुं श्रुत्वा अगम्यात् दुरधिगमात् राजदुर्गात् वीरैः सन्नद्धैश्च स्वैः स्वकीयैरंतरंगैरिति यावत् अशेषैः समग्रैः वाजिनः अश्वाः वाहाः वाहनानि येषां तैः अश्वारोहैः किंच सहस्रप्रसंख्यैः पद्दैः पदातिभिः सहेति शेषः । तं शत्रुं अगात् ॥ १० ॥

अश्वेति । वीरेषु अग्र्यः श्रेष्ठः । अग्र्याद्यत् । एकः मुख्यः स राजा अश्वारोहान् आरात् शत्रुशिबिरात् दूरत एव । आराद्दूरसमीपयोरित्यमरः । स्थापयित्वा शूरैः पद्दैः युक्तः सन् शत्रुशिबिरं समेत्य सप्तसंख्याः वासोभित्तीः वस्त्रभित्तीः लोके वाड इति प्रसिद्धाः खड्गेन भित्त्वा विदार्य । तदंतर्वर्तिनः षंढसंज्ञान् रक्षकान् लोके खोजे इतिप्रसिद्धान् । अंतःपुरसमीपे षंढा एव रक्षका यवनैर्निर्धार्यन्ते इति प्रसिद्धं । अहन् हतवान् । हंतेर्लङ् ॥ ११ ॥

राजेति । राजा शिवः शस्त्रैः जीवंतीति शस्त्रजीवा तां स्त्रीणां संहतिं दूरात्

१ 'मुख्य भव' पा० भ० । २ 'पुना' पा० भ० । ३ [illegible]

उत्थायातिव्रीडितो भीतभीतो गत्वा तूर्णं स्त्रीसमाजं स तस्थौ ॥
भीतं दीनं शस्त्रहीनं स्थितं तं स्त्रीणां मध्ये नो जघानातिधीरः ॥१३॥
राजा छित्वा दक्षहस्तांगुलीर्वै तिस्रस्तस्य प्राद्रवत्तन्निकेतात् ॥
सैन्ये तस्मिन् सर्वलोकेतिभीते ध्वांतव्याप्ते व्याकुले दिग्विमूढे ॥१४॥
यक्षः किं वा राक्षसो वाऽपि किं वा सिंहो व्याघ्रः प्राणिहा को नु यातः॥
नैशेनालं ध्वांतपुंजेन रुद्धाः वीराः सर्वे तर्कयामासुरित्थम् ॥ १५ ॥
एवं वीरः शासनं संविधाय गत्वा स्वीयं सैन्यमेनेन युक्तः ॥
तस्थौ राजा राजदुर्गे सुखेन म्लेच्छाधीशो भीतभीतो बभूव ॥ १६ ॥

दूरप्रदेशं कृत्वा । स्त्रीहननस्यायुक्तत्वात् । भयेनैव दूरमपसार्येत्यर्थः । तत्समीपं शत्रुसमीपदेशं प्राविशत् प्रविष्टवान् । नारीणां मध्ये मध्यदेशे वर्तमानः नग्नः । कामाक्रान्तत्वात् । स शत्रुः । यद्वा नग्नाभिः सहितः सनग्नः नग्नस्त्रीयुतः । तं राजानं कालकल्पं ईषदसमाप्तः कालः कालकल्पः तं यमतुल्यं । ईषदसमाप्तावित्यादिना कल्पप् प्रत्ययः । कालोदंडधरः श्राद्धदेव इत्यमरः । ददर्श दृष्टवान् । राज्ञस्तपोबलेनेति भावः ॥ १२ ॥

उत्थायेति । अति अत्यन्तं व्रीडितः लज्जितः राज्ञा स्वस्य निरवधिस्त्रैणत्वावलोकनादिति भावः । भीतात् भीतः भीतभीतः अतिभीत इत्यर्थः । यद्वा भियः इतः रहितः भीतः शिवभूपः तस्माद्भीतः सः यवनः उत्थाय स्त्रीसमाजं स्त्रीसंघं अन्यत्र वर्तमानं तूर्णं शीघ्रं गत्वा तस्थौ । स्त्रीवेषं धृत्वा स्त्रीसमाजे लीन इति भावः । अतिधीरः राजा भीतं अतः दीनं अतः स्त्रीणां मध्ये स्थितं तं यवनं नो जघान न हतवान् । एतादृशस्य हनने दोषश्रवणादिति भावः ॥ १३ ॥

अस्य शत्रोः प्रत्यहं स्वपराक्रमस्मृत्यर्थं तदधिपस्य सार्वभौमस्यापि स्वपराक्रमज्ञापनार्थं राज्ञा कृतं कृत्यमाह राजेति । ध्वांतेन तमसा व्याप्ते अतः दिक्षु विषये विमूढे अज्ञे अतः व्याकुले तत्कालोचितकर्तव्यतानभिज्ञे तस्मिन् सैन्ये तस्यां सेनायां वर्तमाने सर्वलोके सर्ववीरसमूहे भीते सति । यद्वा सेनायां समवेतः सैन्यः तस्मिन् सर्वलोके इति योजनीयं । सेनाया वा इति ण्यः । राजा तस्य शत्रोः तिस्रः दक्षहस्तांगुलीः छित्वा तन्निकेतात् शत्रुशिबिरात् प्राद्रवत् तूर्णमपासरत् ॥ १४ ॥

यक्ष इति । निशायां भवं नैशं तेन रात्रिभवेन । निशा निशीथिनी रात्रिरित्यमरः । निशाप्रदोषाभ्यां चेत्यण् । ध्वांतपुंजेन तमःस्तोमेन अलं अत्यर्थं रुद्धाः सर्वे वीराः यक्षः देवजातिः वा प्राणिनो हंतीति प्राणिहा राक्षसः यातः किंवा सिंहः व्याघ्रो वा यातो नु इत्थं अनेन प्रकारेण तर्कयामासुः ॥ १५ ॥

एवमिति । वीरः राजा एवं पूर्वोक्तप्रकारेण शासनमंगुलीच्छेदलक्षणं संविधाय

६ 'वीरः' पा० भे० । ७ 'प्रागमत्' पा० भे० । ८ '०मेनेन' पा० भे० ।

प्रातःसर्वे वीरसंघाः समेत्य रात्रौ किं वा जातमित्थं तमूचुः ॥
म्लेच्छो हस्तं दर्शयित्वा तदीयं वृत्तं सर्वं वर्णयामास तत्र ॥ १७ ॥
अद्य श्वो वा मच्छिरोऽसौ निकृत्य गंता स्थेयं नैव तस्मान् मयात्र ॥
जीवन् जंतुर्भद्रसंघं भुनक्ति देहो नायं लभ्यते सर्वदात्र ॥ १८ ॥
श्रुत्वा वाक्यं तस्य वीरास्तमूचुर्नैवं वाच्यं वीरवर्यैः कदापि ॥
जित्वा शत्रुं भूमिसौख्यं लभंते मृत्वा वा ते स्वर्गसौख्यं विचित्रं ॥१९॥
तेषां वाक्यं म्लेच्छनाथोऽवधार्य मत्वा शत्रून् भेदितान् तेन राज्ञा ॥
निश्चक्राम प्राणसंरक्षणेच्छुः केशव्याजान्मूर्ध्न्यकीर्तिं वहन् सन् ॥२०॥

स्वीयं सैन्यं दूरात्स्थापितं गत्वा एनेन सैन्येन । अन्वादेशे एनादेशः । युक्तः सन् राजदुर्गे सुखेन आनंदेन । प्रकृत्यादिभ्य उपसंख्यानमिति तृतीया । तस्थौ स्थितवान् । म्लेच्छाधीशः भीतभीतः अतिभीत इत्यर्थः बभूव । भीतभीत इदं व्याख्यातं ॥ १६ ॥

प्रातरिति । सर्वे वीरसंघाः प्रातः प्रातःकाले समेत्य आगत्य रात्रौ किं वा जातं । वा विकल्पे । इत्थं तं यवनं ऊचुः पप्रच्छुः । म्लेच्छः हस्तं दर्शयित्वा तस्येदं तदीयं । त्यदादीनि चेति वृद्धसंज्ञायां च्छः । सर्वं वृत्तं तेभ्यः वीरेभ्यः वर्णयामास कथयामास । क्रियया यमभिप्रैतीति संप्रदानत्वं ॥ १७ ॥

राजवृत्तं निवेद्याग्रे कर्तव्यमाह अद्येति । असौ राजा अद्य अस्मिन् दिवसे । सद्य इत्यादिना निपातितः । यद्वा श्वः उत्तरदिने । अव्ययमिदं । मच्छिरः मदीयं शीर्षं निकृत्य छित्वा गंता । अनद्यतने लुट् । अद्य गमिष्यति वा श्वः गंतेति योजनीयं । तस्माद्धेतोर्मयात्र न स्थेयं न स्थातव्यं । यतः जंतुः प्राणी जीवन् सन् भद्रसंघं कल्याणपरंपरां भुनक्ति । जन्मांतरे मनुष्यदेहस्य दौर्लभ्यमाह । अत्र अस्मिन् लोके सर्वदा । सर्वकालं अयं देहः मनुष्यदेहः न लभ्यते न प्राप्यते तस्मादयं यत्नेन रक्षणीय इतिभावः ॥ १८ ॥

श्रुत्वेति वीराः तस्य यवनस्य वाक्यं श्रुत्वा तं इत्यूचुः । इति किं । वीरवर्यैः कदापि एवं न वाच्यं यतः ते वीराः शत्रुं जित्वा भुवमेव सौख्यं भूम्याः सौख्यं भूमिसौख्यं । चतुर्वर्णादित्वात्स्वार्थेष्यञ् । लभंते प्राप्नुवन्ति । वा पक्षांतरे पराजयं मत्वा प्राणान् परित्यज्य विचित्रं भूमिसौख्यादधिकं स्वर्गसौख्यं लभंते । उभयत्रापि सौख्यमेवेति न भेतव्यमितिभावः ॥ १९ ॥

तेषामिति । प्राणानां संरक्षणं प्राणसंरक्षणं तदिच्छतीति प्राणसंरक्षणेच्छुः म्लेच्छनाथः तेषां वीराणां वाक्यं अवधार्य श्रुत्वा यद्वा अवधार्य तिरस्कृत्य तेन राज्ञा शिवेन सर्वान् भेदितान् वशीकृतान् मत्वा । स्वप्रतिकूलवचनत्वादिति भावः ।

---

९. 'गेषु' पा० भे० । १०. 'हिमुर्न' पा० भे० । ११. 'सर्वान' पा० भे० ।

दिल्लीपालस्तं समायांतमाराद् दूतैराप्तैराह हे क्लीबनाथ ॥
द्रष्टव्यं ते नैव वक्रं मया तत्[12] हित्वा सैन्यं गच्छ गेहं स्वकीयम्॥२१॥
शास्तेत्थं ते स्थापितं नाम पित्रा व्यर्थं जातं शासितोऽसीह राज्ञा ॥
लोके तस्माच्छासिताख्यां लभस्व नोज्झेदर्थं नाम तेऽमुं कदापि॥२२॥
धीरो वीरो दारितारातिवर्गः स्वर्गो हस्ते यस्य शौर्यव्रतस्य ॥
अंतःशत्रून्यो विजिग्ये सचासीत् सेनाधीशः सार्वभौमस्य वीरः[13]॥२३॥
सिंहं नाम्ना तं जयादिं बभाषे दिल्लीपालो वीरवर्यः सभायाम् ॥
मत्पूर्वैर्यत्संचितं कीर्तिजालं[14] सर्वं तद्धा नाशितं शासितेन ॥ २४ ॥
वासो भूषा रत्नराशिश्चमुक्ताः स्वर्णं ग्रामा दंतिनो वाजिनोऽपि ॥
यद्यद्वीरैर्योचितं तत्तदांदां[15] कालः प्राप्तस्तस्य दानस्य वीर॥ २५ ॥

मूर्ध्नि केशानां व्याजात् मिषात् अकीर्तिं वहन् सन् निश्चक्राम निर्जगाम । दिल्लीमिति शेषः ॥ २० ॥

दिल्लीति । दिल्लीपालः सार्वभौमः आरात् स्वसमीपे आयान्तं तं यवनं आप्तैर्दूतैः इत्याह । इति किं । हे क्लीबानां नपुंसकानां नाथ अत्यशूरवर्य मया ते वक्रं नैव द्रष्टव्यं । तस्मात्सैन्यं मदीयं हित्वा स्वकीयं गेहं गृहं गच्छ याहि ॥ २१ ॥

शास्तेति । किंच ते पित्रा शास्तेति स्थापितं नाम व्यर्थं विगतः अस्मात् अर्थः तत् व्यर्थं जातं । हि यस्माद्राज्ञा शिवेन त्वं शासितः असि । त्वत्पित्रा पराक्रममदृष्ट्वैव नाम स्थापितम् अहं तु पराक्रमं दृष्ट्वा नाम करोमीत्याह । तस्माद्भवनोः शासिताख्यां लभस्व प्राप्नुहि । ते नाम अमुं अर्थं अन्वयवार्थं कदापि नोज्झेत् न त्यजेत् । इति क्रुधा शशापेति भावः । शास्ते रौणादिके कर्तरि तृचि निपातनान्नेट्-निष्ठांतस्य तु उदितोवेति वेट् ॥ २२ ॥

चमत्कारसमाप्तिपर्यंतं द्वितीयमितिहासमाह धीर इति । किंच । शौर्यमेव व्रतं यस्य तथोक्तस्य । यस्य हस्ते स्वर्गः । यः अंतःशत्रून् कामादीन् विजिग्ये जितवान् । विपराभ्यां जेरितितङ् । धीरः वीरः अतः दारितारातिवर्गः सार्वभौमस्य मान्यः सः सेनाधीशः आसीत् ॥ २३ ॥

सिंहमिति । वीरवर्यः वीरश्रेष्ठः दिल्लीपालः । जयशब्दः आदिर्यस्य तं सिंहं जयसिंहमित्यर्थः । सभायां बभाषे जगाद भाषणमेवाह । मम पूर्वे मत्पूर्वे तैः मत्पूर्वैः यत्कीर्तिजालं कीर्तिसंघः संचितं संगृहीतं तत्सर्वं शासितेन नाशितं । हा इति खेदे ॥ २४ ॥

वास इति । वासो वस्त्रं । जात्येकवचनं । वासांसीत्यर्थः । भूषाः भूषणानि रत्नराशिः

१२ ' हि ' पा० भे० । १३ 'चान्यः ' पा० भे० । १४ ' ०जातं ' पा० भे० । १५ ०तत्प्रदत्त ' पा० भे० ।

देशः सर्वो दाक्षिणो दाक्षिणेन तेनाक्रांतः शत्रुणा मे शिवेन ॥
उल्लंघ्याद्रिं विंध्यमप्यागतश्चेत् किं वा कार्यं ब्रूहि हे वीरवर्य ॥ २६ ॥
श्रुत्वा वाचं सार्वभौमस्य वीरः सिंहो नाम्ना तं जयादिर्बभाषे ॥
चिंता कार्या नैव बध्वा रिपुं ते यद्यानेष्ये तर्हि मे स्यात्सुजन्म ॥२७॥

उक्त्वा प्रणम्य च शिखारहिताधिनाथं
सैन्येन सागरसमेन ययौ स सार्धं ॥
हूणैश्च तंगणगणैः शकपारसीकैः
सेनाधिपोऽपि समगात्सहितो दलेलः ॥ २८ ॥
भानुं पदाहतरजस्ततिभिर्विलुंपन्
यंत्रैः पयोदरवजिद्ध्वनिभिः परीतः ॥
वादित्रगीतनिनदैः पटहप्रणादै-
र्भेरीरवैरपि मनः सुखयन् ययौ सः ॥ २९ ॥

हीरादिरत्नसमूहः मुक्ताः मुक्ताफलानि स्वर्णं सुवर्णं ग्रामाः प्रसिद्धाः दंतिनो गजाः वाजिनोऽश्वाः अपि वीरैर्यद्यद्याचितं तत्तत् । उभयत्र नित्यवीप्सयोरिति द्वित्वं । आदां अयच्छम् । आङ् पूर्वाद्दातेर्लुङ् । हे वीर तस्य दानस्य कालः फलकालः प्राप्तः॥२५॥

देश इति । दाक्षिणेन कुशलेन दुःसाध्येनेतिभावः। तेन मे शत्रुणा शिवेन दाक्षिणः मे देशः सर्वोपि आक्रांतः । विंध्यं अद्रिं उल्लंघ्य आगतश्चेत्किं वा कार्यं हे वीरसिंह ब्रूहि ॥२६॥

श्रुत्वेति । नाम्ना जयादिः जयशब्दादिः सिंहः जयसिंहः वीरः सार्वभौमस्य दिल्लीपालस्य वाक्यं श्रुत्वा तं सार्वभौमं बभाषे । चिंता नैव कार्या ते रिपुं बध्वा यदि आनेष्ये तर्हि मे सुजन्म शोभनं जन्म स्यात् ॥ २७ ॥

उक्त्वेति । सः शिखया शिरःस्थितया रहितानां नाथः तं सार्वभौमं इति पूर्वोक्तप्रकारेण उक्त्वा प्रणम्य च सागरसमेन सैन्येन सार्धं ययौ । दलेलः दलेलसंज्ञः सेनाधिपोपि हूणैः तंगणगणैः शकाश्च पारसीकाश्च शकपारसीकाः तैः सहितः सन् ययौ ॥ २८ ॥

भानुमिति । जयसिंहः पदैश्चरणैः आहतानां ताडितानां रजसां ततिभिः समूहैः भानुं सूर्यं विलुंपन् आच्छादयन् । शमुचादीनामिति नुम् । पयोदाः मेघास्तेषां रवं शब्दं जयतीति जित् ध्वनिः शब्दो येषां तैः यंत्रैः तोफाभिः परीतः युक्तः । वादित्राणां गीतस्य च निनदैः पटहानां वाद्यविशेषाणां प्रणादैः । उपसर्गादसमासेत्यादिना णत्वं । भेरीणां दुंदुभीनां रवैः शब्दैः । भेरी स्त्री दुंदुभिः पुमानित्यरः । मनश्चित्तं सुखयन् प्रहर्षयन् सन् ययौ जगाम ॥ २९ ॥

---

१६. 'सिंह' पा० भे० ।

रेवातटं समधिगम्य जयादिसिंहः
चित्ते व्यचिंतयदिदं शिवभूपतेस्तु ॥
देहं प्रविश्य गिरिजा वदतीदमद्य
राजन् कुरुष्व न च तज्जननी जनस्य ॥ ३० ॥
वश्यः कथं स भविता मम तद्विधेया
देवी मयाऽपि वशगेति विचिंत्य चित्ते ॥
आमंत्रयद्द्विजगणान् सकलागमज्ञान्
शुद्धान् जितेंद्रियगणानयुतानि पंच ॥ ३१ ॥
कुंडानि मंडपचयांश्च विधाय तत्र
विप्रव्रजैः समयजत्त्रिजगद्विधात्रीं ॥
शष्कुल्यपूपघृतपूरसिताघृतैस्तान्
लड्डूकमंडकपयोभिरतर्पयत्सः ॥ ३२ ॥
मासत्रयेण गिरिजा जयसिंहनाम्नः
स्वप्ने समेत्य निजगाद वचः स्फुटं सा ॥
हे वीर ते मनसि यत्सकलं भवेत्तत्
तुष्टाऽस्मि ते यजनतो द्विजभक्तितश्च ॥ ३३ ॥

रेवेति । जयादिसिंहः रेवातटं नर्मदातीरं समधिगम्य प्राप्य इदं चित्ते व्यचिंयत् चिंचितवान् । चिंतनमेवाह । जनस्य जननी मयापि प्रार्थिता चेन्मद्धितमपि वक्ष्यतीति भावः । गिरिजा देवी शिवभूपतेस्तु देहं प्रविश्य हे राजन् इदं कुरुष्व तत् न इति वदति ॥ ३० ॥

वश्य इति । स मम वशंगतः वश्यः अधीनः वशंगत इति यत् कथं भविता देवी समाश्रयात्साध्य इति भावः । तत् तस्मात् कारणात् देवी मयापि वशगा विधेया कार्या इति विचिंत्य सकलागमाः सकलशास्त्राणि तानि जानंति तान् सकलागमज्ञान् । आगमः शास्त्रमाम्नाय इत्यमरः । शुद्धान् जात्या आचारेण च जितः इंद्रियचयो यैस्तान् पंच आयुतानि पंचाशत्सहस्रसंख्यान् द्विजचयान् आमंत्रयत् । अनुष्ठानार्थमितिभावः ॥ ३१ ॥

कुंडानीति । सः जयसिंहः कुंडानि मंडपगणांश्च कुंडार्कायुक्तप्रकारेण तत्र रेवातटे त्रयाणां जगतां विधात्रीं देवीं विप्रव्रजैः समयजत् । किंच तान् विप्रव्रजान् शष्कुल्यश्च अपूपाश्च घृतपूराश्च सिता च घृतं च तैः लड्डूकाश्च मंडकाश्च पयश्च तैः अतर्पयत् ॥ ३२ ॥

मासेति । गिरिजा पार्वती शिवशक्तिः मासत्रयेण जयसिंहनाम्नः स्वप्ने स्वप्नावस्था-

१७ '०तेश्च' पा० भे० । १८ '०जचयात्' पा० भे० ।

प्रातर्द्विजान् स सकलान् प्रतिपूज्य तेभ्यः
कोटित्रयं धनमदादतिहृष्टचित्तः ॥
विप्रा अपि स्वगृहमेव ततः प्रजग्मुः
सिंहः शिवाभिमुखमेव जगाम वीरः ॥ ३४ ॥
राजा समागतमिमं स निशम्य दूतै–
राहूय मंत्रिनिचयानिदमाह शत्रुः ॥
आयाति सिंह इव विंध्यगिरिं विलंघ्य
किं युक्तमत्र[११] वदताद्य विचार्य्य सर्वे ॥ ३५ ॥
सामैव युक्तमिति तत्र ततस्तमूचुः
केचिन्नचेति च परे जगदुश्च भेदम् ॥
राजाब्रवीदिह तु युद्धमतिप्रशस्तं
युद्धं विना नहि भवेद्वशगः परोऽयम् ॥ ३६ ॥
यातोस्त्यनेन सह दुर्जनसंघमुख्यो
नाम्ना दलेल इति यः प्रथितः पृथिव्याम् ॥

यां संमन्य स्फुटं स्पष्टं निजगाद । भाषणमेवाह । हे वीर ते यजनतः यजनाद्धेतोः द्विजभक्तितश्च । पंचम्यास्तसिल् । तुष्टा अस्मि । अतः ते मनसि यत्तत् सकलं भवेत् । शिवभूपः प्रबलोपि त्वदधीनो भवेदिति भावः ॥ ३३ ॥

प्रातरिति । अतिहृष्टं चित्तं यस्य सः वीरः जयसिंहः सकलान् द्विजान् प्रतिपूज्य तेभ्यः कोटीनां त्रयं कोटित्रयं । त्रिशब्दात्तयपोयच् । धनं अदात् दत्तवान् ततस्तदनंतरं विप्राः अपि स्वगृहं स्वकीयं गृहं एव प्रजग्मुः । स्वेप्सितादधिकतरधनलाभादन्यत्र धनार्जनेच्छाभावादितिभावः । सिंहः जयसिंहः । विनापिप्रत्ययं पूर्वोत्तरपदयोर्लोपो वाच्य इति पूर्वपदस्य लोपः सत्यभामेति वत् । शिवस्य नृपस्य अभिमुखमेव संमुखमेव देवीवचनेन कार्यनिश्चयादिति भावः । जगाम । यथा सिंहः शिवायाः क्रोष्ट्र्याः अभिमुखं याति तथा । देवीवरेण जयसिंहः सिंहः शिवभूपः शिवा बभूवेति गूढाशयः ॥ ३४ ॥

राजेति । सः राजा शिवभूपः दूतैः समागतं इमं निशम्य मंत्रिनिचयान् आहूय इदं वाक्यं आह । शत्रुः जयसिंहः सिंह इव विंध्यगिरिं विलंघ्य आयाति अतः अत्र अस्मिन् संकटे किं युक्तं तद्विचार्य्य सर्वे वदत ब्रूत । विध्यर्थे लोट् ॥ ३५ ॥

सामेति । साम प्रेमपरं वाक्यं भेदं परजनाकृष्टिं । साम प्रेमपरं वाक्यं दानं चार्थविसर्जनं । भेदः परजनाकृष्टिर्निग्रहः परपीडनं । अन्यत्स्पष्टं ॥ ३६ ॥

सामदानभेदैर्जयसिंहो वश्यो न भवेदित्यत्र तस्य पारतन्त्र्यमाह । यात इति । दु-

[११] '०कमत्र' पा० भे० ।

दिल्लीपतेः स तु सखा जयसिंहराजं-[20]
स्तस्याज्ञया चरति तद्भविता न वश्यः ॥ ३७ ॥
युद्धं विधेयमधुना विजयोऽजयो वा
स्याच्चेन्ममोभयमपीह हितं प्रधान ॥
जाते जये जगति राज्यमहं करिष्ये
नो चेदमर्त्यवनिताभवसौख्यभाक्स्याम् ॥ ३८ ॥
एवं वदंतमवदज्जननी जनस्य
[21]ह्यंतर्हिता शिव शिशो वचनं शृणुष्व ॥
युद्धं त्वमद्य कुरु मा जयसिंहनाम्ना
सार्धं प्रयाहि यवनाधिपराजधानीम् ॥ ३९ ॥
कालस्तवास्ति कुटिलः खलु[22] तत्र रक्षां
कारागृहे निवसतः सततं करिष्ये ॥

र्जनसंघेषु मुख्यः अतिदुर्जन इत्यर्थः दलेल इति नाम्ना प्रथितः प्रसिद्धः यः अनेन जयसिंहेन सह यातोस्ति स तु दिल्लीपतेः सखा मित्रं अस्ति। अथ मित्रं सखा सुहृदित्यमरः । जयसिंहराजः तस्य दलेलस्य आज्ञया चरति तत्तस्मात् स जयसिंहः वश्यः न भविता ॥ ३७ ॥

स्वमतमाह युद्धमिति । हे प्रधान अस्मिन् काले इति अधुना युद्धं विधेयं अत्र अस्मिन् युद्धे जयो वापजयः पराजयः स्यात् चेन्मम उभयमपि इह अस्मिन् समये हितं इष्टं । उभयस्यापि हितत्वं विवृणोति । अहं जये जाते जगति अस्मिन् लोके राज्यं करिष्ये नो चेत् पराजये सतीतिभावः अमर्त्यवनिताभ्यः देवांगनाभ्यः उत्पन्नं यत्सौख्यं सुखमेव सौख्यं । चतुर्वर्णादित्वात्स्वार्थेष्यञ् । तद्भजतीति भाक् स्यां भवेयम् ॥ ३८ ॥

इत्थं युद्धे एव कृतनिश्चयं राजानं देवी प्राह एवमिति । जनस्य सर्वलोकस्य जननी माता अंबिका तु अंतर्हिता सति आकाशवाण्येति भावः । हे शिव शिशो हे बाल । स्वस्यातिवत्सलत्वद्योतनार्थं शिशो इति संबुद्धिः । त्वं वचनं श्रुणुष्व । अद्य अस्मिन् समये युद्धं मा कुरु । करोतेर्लोट् यद्यपि माङ्योगे सर्व लकारापवादेनलुङा भाव्यं तथापि नायमाङ्निषेधार्थो मा शब्द इति न दोषः। युद्धकर्तव्यताभावमुपादिश्य कर्तव्यार्थमाह । जयसिंहनाम्ना साकं सार्धं । साकं सार्धं समं सहेत्यमरः । यवनाधिपराजधानीं दिल्लीं प्रयाहि ॥ ३९ ॥

युद्धाकरणे हेतुमाह कालइति । तव त्वत्संबंधी कालः समयः कुटिलः प्रतिकूलः

२० '०हनामा' पा० भे० । २१. 'त्वं' पा० भे० । २२ 'यदि' पा० भे० ।

श्रुत्वा वचो नरपतिः प्रणनाम देवीं
चित्ते निधाय वचनं त्रिजगज्जनन्याः ॥ ४० ॥
सिंहः पुरंदरगिरेर्निकटे ससैन्यः
स्थित्वाऽप्तदूतमिदमाह चराद्य गच्छ ॥
राज्ञोतिवल्लभतमं[23] कमपि द्विजं त्वं
मत्पार्श्वमानय तथेति ययौ तमुक्त्वा ॥ ४१ ॥
गत्वा नृपं स जयसिंहवचो बभाषे
राजाऽपि तुष्ट इदमाह चराद्य[24] तिष्ठ ॥
श्वो गम्यतामिति चरं प्रतिवाक्यमुक्त्वा
विद्वद्वरं स रघुनाथमुवाच वाचम् ॥ ४२ ॥
याहि त्वया हि जयसिंहमहन्यमुष्मिं-
स्त्वं सेनया सह सहेमविभूषणानि ॥
दत्त्वोपदां पदमिदं पुनरेहि हारान्
मौक्तान् गजांश्च तुरगान् वसनानि विद्वन् ॥ ४३ ॥

अस्ति खलु निश्चयेनः। अतः युद्धं न कर्तव्यमिति भावः। तत्र दिल्ल्यां कारागृहे निवसतः तव रक्षां रक्षणं सततं निरंतरं करिष्ये। नरपतिः शिवनृपः त्रिजगज्जनन्याः वचनं चित्ते निधाय प्रणनाम नमश्चकार। कारागृहे निवसतः इति विशेषणेन कारागृहे यवनाधिपस्त्वां कियत्कालं स्थापयिष्यतीति सूचितं ॥ ४० ॥

सिंह इति। सेनैव सैन्यं। चतुर्वर्णादित्वात्स्वार्थेष्यञ्। सैन्येन युक्तः सिंहो जयसिंहः पुरंदरगिरेः पुरंदराख्यदुर्गस्य निकटे समीपप्रदेशे अधित्यकायामितियावत्। स्थित्वा आप्तं स्वसमीपं प्राप्तं दूतं इदमाह। इदं किं। चरतीति चरः। पचाद्यच्। हे चर हे दूत अद्य अस्मिन् दिने न तु दिनांतरे इत्यर्थः गच्छ। राज्ञः शिवभूपस्य अति अत्यंतं वल्लभः अतिवल्लभः अतिशयेन अतिवल्लभः अतिवल्लभतमः तं अत्यंतरंगामित्यर्थः। अतिशायने तमबिष्ठनावित्यादिना तमप्। कमपि द्विजं ब्राह्मणं। ननु अन्यजातीयमितिभावः। मत्पार्श्वं मदीयपार्श्वदेशं आनय। नयतेर्द्विकर्मकत्वात्पार्श्वस्य कर्मत्वं। सः चरः तं जयसिंहं तथेति तथास्तु इति ययौ जगाम ॥ ४१ ॥

गत्वेति। सः दूतः नृपं शिवं गत्वा जयसिंहस्य वचः बभाषे उक्तवान्। तुष्टः तोषवान् दूतस्य संध्यर्थमागतत्वादिति भावः। राजापि इदमाह। हे चर दूत अद्य तिष्ठ श्वः गम्यतां गंतव्यं इति चरं प्रति वाक्यं उक्त्वा विद्वद्वरं रघुनाथनामानं पंडितं उवाच ॥ ४२ ॥

याहीति। हे विद्वन् त्वं अमुष्मिन् अहनि त्वया स्वकीयया सेनया सह हि निश्चयेन

---

२३ 'तरं' पा० भे०। २४ '०राग्र' पा० भे०।

सिंहोऽपि तं समुपयातमसौ निरीक्ष्य
सत्कृत्य विप्रवरमुत्तमभूषणाद्यैः ॥
वाचा तथा मधुरया सहितश्च तेन
गत्वा रहस्यवितथं वचनं जगाद ॥ ४४ ॥
नैवोचितो बलयुता सह वैरभावो
नाशं करोति स हि हीनबलस्य जंतोः ॥
हे भूमिदेव मृगराजबलिं पुरःस्थं
स्यात्किं सुखी परिहरन्निह जंबुकादिः ॥ ४५ ॥
आक्रांतमेतदखिलं यवनाधिपस्य
भूमंडलं किमु सुखी भविता नृपोऽसौ ॥
राज्यं यदीच्छति नृपः सहि तर्हि तं त्वं
गत्वानयाद्य मम सन्निधिमीशभक्तम् ॥ ४६ ॥

न तु तां विनेति भावः । जयसिंहं याहि गच्छ । हेम्ना सुवर्णेन सहितानि सहेमानि सहेमानि च तानि विभूषणानि च सहेमविभूषणानि । प्रथममग्रतः स्थापनार्थं हेम मुद्राः लोके मोहरा इति प्रतिद्धाः अलंकारांश्च । यद्वा सहेमानः सालंकाराः वयः पक्षिणः शुकसारिकादयः भूः पृथिव्याः जाड्येन नयनासंभवात् इयं संपादिता पृथ्वी तव इति वक्तव्यामितिभावः । पृथ्वी भूः उषणानि मरीचानि सहेमानि च तानि विभूषणानि च सहेमविभूषणानि । यद्वा सहेमानः सालंकाराः वयः भूषणानि च तानि मुक्तानां इमे मौक्ताः तान् हारान् मुक्ताफलहारान् । इदमर्थे अण् । विभूषण-ग्रहणेन एव मुक्ताफलहारग्रहणे पुनर्हारग्रहणं ब्राह्मणवशिष्ठन्यायेन । गजान् वस-नानि च तुरगांश्च उपदां उपायनं । उपायनमुपग्राह्यमुपहारस्तथोपदेत्यमरः । दत्त्वा-इदं पदं स्थानं दुर्गं इति यावत् पुनः एहि ॥ ४३ ॥

सिंह इति । असौ सिंहोपि जयसिंहोपि तं विप्रवरं रघुनाथं समुपयातं निरीक्ष्य अवलोक्य उत्तमैः विभूषणाद्यैः सत्कृत्य तथा मधुरया वाचा च सत्कृत्य तेन रघु-नाथेन सहितः सन् रहसि गत्वा अवितथं सत्यं वचनं जगाद ॥ ४४ ॥

नैवेति । हे भूमिदेव बलवता सैन्यवता यद्वा निग्रहानुग्रहशक्तिमता यद्वा लो-कोत्तरशरीरशक्तिमता सह वैरभावः वैरोत्पादनं नैव उचितः हि यस्मात् सः वैर-भावः हीनबलस्य जंतोः प्राणिनः नाशं करोति । अमुमर्थं दृष्टांतेन द्रढयति । पुरः तिष्ठति इति पुरस्थः तं अग्रगतं । सुपिस्थ इति कप्रत्ययः । मृगराजबलिं सिं-हभागं परिहरन् जंबुकादिः इह अस्मिन् लोके सुखमस्यास्तीति सुखी । अत इनि ठनाविति इनिः । स्यात्किं नेति भावः ॥ ४५ ॥

आक्रांतमेतदिति । एतत्सकलं अखिलं भूमंडलं दक्षिणो देशः यतः आक्रांतं

यूयं वयं च सकला जगदीशभक्ता
युष्मद्धितं यदिह[25] तत्तु ममाऽपि विप्र ॥
नैवान्यथा मम वचो भविता कदापि
त्वत्पादपद्म शपथो द्विजदेवदेव ॥ ४७ ॥
वाचं निशम्य जयसिंहभवां स विप्रो
राज्ञे तदीयवचनं सकलं शशंस ॥
राजाऽपि चित्तमवगम्य तदीयमाशु
सेनान्वितः प्रतिययौ जयसिंहदेशम् ॥ ४८ ॥
सिंहः समागतममुं चरतोऽवगम्य[26]
गत्वा पुरो नृपवरस्य करं स्वहस्ते ॥
धृत्वाऽलिलिंग निजदंतिनि सन्निवेश्य
सेनानिवेशमनयन्निजमेव भूपम् ॥ ४९ ॥
तत्सिंहराजवरसंगतिपूर्वमेव
यातो दलेलयवनस्तु पुरंदराख्यम् ॥

व्याप्तं । उदितोवेति विकल्पादिडभावः । ततस्तस्मात् असौ नृपः सुखी सुखवान् भविता किमु वितर्के । सः यदि राज्यं इच्छति तर्हि त्वं गत्वा ईशभक्तं राजानं मम संनिधिं समीपप्रदेशं आनय हि निश्चयेन ॥ ४६ ॥

यूयमिति । यूयं वयं च सकलाः जगदीशस्य सांबस्य भक्ताः । अतः युष्मद्धितं यत् तत् हे विप्र ममापि हितं मम वचः कदापि अन्यथा न भविता । एवमुक्तेऽपि सर्वं प्रतारकं वचनमिति संशयः स्यात् इति शपथं करोति हे द्विजदेव देव त्वत्पादपद्म शपथः अस्ति ॥ ४७ ॥

वाचमिति । सः विप्रः रघुनाथः जयसिंहभवां वाचं निशम्य सकलं तदीयवचनं जयसिंहवचनं राज्ञे शिवाय शशंस । राजापि तदीयं तस्य जयसिंहस्य इदं तदीयं चित्तं अवगम्य ज्ञात्वा अकपटमिति ज्ञात्वेत्यर्थः । आशु शीघ्रं सेनान्वितः सन् जयसिंहदेशं ययौ ॥ ४८ ॥

सिंह इति । सिंहः जयसिंहः समागतं अमुं राजानं चरतः चरादितिचरतः चारमुखेनेत्यर्थः समागतं अवगम्य पुरः स्वशिबिरात् अग्रे गत्वा नृपवरस्य करं स्वहस्ते धृत्वा अतिप्रेम्णेति भावः अलिलिंग आलिंगितवान् । भूपं निजदंतिनि सन्निवेश्य निजमेव सेनानिवेशं शिबिरं अनयत् ॥ ४९ ॥

तादीति । दलेलयवनः सचासौ सिंहः च तत्सिंहः जयसिंहः राजवरश्च तत्सिंहराज

२५ 'तदिह' पा० भे० । २६. 'निशम्य' पा० भे० ।

दुर्गं विजेतुमतिवीरनरैश्च यंत्रै-
र्दंतिव्रजैस्तुरगपंक्तिभिरन्वितः सन् ॥ ५० ॥
दुर्गं रुरोध पृतनापतिभिः समंताद्-
यंत्रोद्भवायसचलद्गुरुगोलकानाम् ॥
वृष्टिं चकार गिरिमूर्धगता भटास्तु
क्षुब्धा बभूवुरितरत्रगतौ न शेकुः ॥ ५१ ॥
वर्षासु मेघ इव वर्षति पर्वतेस्मिन्
नाम्ना मुरारिरिति राजनियोजितो यः ॥
कायस्थजो दशशतप्रमितैः स पत्तैः ॥
शूरैर्वृतोऽवतरति स्म कृपाणपाणिः ॥ ५२ ॥
वीरो युयोध तुमुलं सह पत्तिसंघै-
र्निस्त्रिंशखड्गशरतोमरऋष्टिभल्लैः ॥
पादाहतं रज उपेत्य रविं रुरोध
पंकत्वमाप रुधिरौघपरिप्लुतं सत् ॥ ५३ ॥

वरौ तयोः संगतिः समागमः तस्मात्पुरैवपूर्वमेव । यद्वा सा चासौ सिंहराजवरसंगतिश्चेति । अतीव वीरैः नरैः यंत्रैः दंतिव्रजैः तुरगपंक्तिभिश्च अन्वितः सहितः सन् पुरंदराख्यं दुर्गं विजेतुं यातः ॥ ५० ॥

दुर्गमिति । दलेलयवनः । पृतनापतिभिः सेनापतिभिः । पुरंदराख्यं दुर्गं समंतात् परितः रुरोध । यंत्राणि तोफाःतेभ्यःउद्भवाः उत्थिताः अयस इमे आयसाः लोहाः चलंतश्चंचलाः गुरवः महांतः गोलकास्तेषां वृष्टिं चकार । गिरिमूर्धगताः गिरिशिखरगताः भटास्तु क्षुब्धाः बभूवुः इतरत्र स्थले गंतुं न शेकुः न समर्थाः बभूवुः ॥ ५१ ॥

वर्षा इति । अस्मिन् दलेलनाम्नि वर्षासु वर्षाकाले मेघ इव। यद्वा वर्षाणां सुमेघः शोभनमेघः वर्षासंबंधी मेघ इव । स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षा अथ शरत्समा इत्यमरः । पर्वते पुरंदरे वर्षति सति वृष्टिं कुर्वाणे सति कायस्थात् जातः कायस्थजः परभू इति दक्षिणे प्रसिद्धः नाम्ना मुरारिरिति यः राजनियोजितः शिवभूपनियोजितः आसीदितिशेषः कृपाणः खड्गः पाणौ यस्य सः दशशतप्रमितैः सहस्रसंख्यैः शूरैः पत्तैः वृतः सन् अवतरति स्म ॥ ५२ ॥

वीर इति । वीरः मुरारिः निर्गतास्त्रिंशद्भ्योंगुलिभ्य इति निस्त्रिंशः त्रिंशदंगुलाधिकप्रमाणः खड्गभेदः खड्गस्तस्यैवावांतरभेदः । यद्वा निस्त्रिंशो यः खड्गः शराः बाणाः तोमराः आयुधविशेषाः । ऋषयश्चऋत्यक इति प्रकृतिभावः । ब्रह्मऋ-

अश्वाः क्रमेलनिचया अपि दंतिसंघाः
संच्छिन्नहस्तपदपुच्छमुखाः प्रपेतुः ॥
काकाश्च गृध्रवृकजंबुककोणपाद्या
मोदं परं समुपजग्मुरसृक्प्रपानाः ॥ ५४ ॥
केचित्पलायनपराः प्रययुश्च भीताः
केचित्तृणं स्ववदने निदधुर्भृशार्ताः ॥
स्वीयान् पलायनपरान्यवनो विलोक्य
तानाह हे यवनपाः किमिदं विचित्रम् ॥ ५५ ॥
सर्वे वयं यवनजातिभवा महांतः
शूरा धनुःप्रहरणा विदिता जगत्याम् ॥
युक्तं पलायनमिदं भवतां किमेतत्
द्रक्ष्यंति नैव वदनं भवतां सुदाराः ॥ ५६ ॥

षीणामिति वत् । भल्लाश्च तैः उपलक्षितैः पत्तिसंघैः पदातिसंघैः सह तुमुलं संकुलं युयोध । पादाहतं रजः उपेत्य गत्वा रविं रुरोध तद्रजः रुधिरौघपरिप्लुतं सत् पंकत्वं कर्दमत्वं आप ॥ ५३ ॥

अश्वा इति । अश्वाः क्रमेलनिचयाः उष्ट्रसंघा गजसमूहाश्च हस्ताश्च पदानि च मुखानिच पुच्छानि च हस्तपदपुच्छमुखं संच्छिन्नं हस्तपदपुच्छमुखं येषां ते तथाभूताः संतः प्रपेतुः पतंति स्म । काकाः गृध्राश्च वृकाश्च जंबुकाश्च कोणपाः राक्षसाश्च आद्या येषां ते गृध्रवृकजंबुककोणपाद्याः। राक्षसः कोणपः क्रव्यात् इत्यमरः। असृजः रक्तस्य प्रकृष्टं पानं प्राशनं येषां ते असृक्प्रपानाः रक्तपाः परं उत्कृष्टं मोदं हर्षं समुपजग्मुः प्रापुः । यद्वा असृक्प्रपा नः इतिन्हस्वपाठः नः अस्माकं असृक्प्रपा रक्तपानीयशाला इयमिति परं मोदं समुपजग्मुः ॥ ५४ ॥

केचिदिति । भीताः अत एव पलायनमेव परं आश्रयो येषां ते तथोक्ताः केचित् प्रययुः अपसस्रुः । भृशं अत्यंतं आर्ताः पीडिताः । अतिवेलभृशात्यर्थातिमात्रोद्गाढनिर्भरमित्यमरः । केचित्स्ववदने स्वमुखे तृणं दधुः । यवनः दलेलः तान् स्वीयान् स्वकीयान् पलायनपरान् विलोक्य हे यवनपाः इदं विचित्रं आश्चर्यं इत्याह ॥ ५५ ॥

आश्चर्यमेवोपपादयति । सर्व इति । सर्वे वयं यवनानां जातयस्ताभ्यः भवाः समुत्पन्नाः अत एव शूराः अत एव महांतः श्रेष्ठाः धनुःप्रहरणाः धानुष्काः जगत्यां पृथिव्यां विदिताः प्रसिद्धाः। जगती विष्टपे मह्यां वास्तुच्छंदविशेषयोरिति विश्वः । स्म इतिशेषः । इदं पलायनं भवतां युक्तं किं नेतिभावः। किं च सुदाराः शोभनाः स्त्रियः। दाराः पुंसि च भूम्न्येवेत्यमरः । भवतामेतद्वदनं न द्रक्ष्यंति नावलोकयिष्यन्ति ॥५६॥

वृत्तिर्विलेखनममुष्य मुरारिनाम्नः
कायस्थकस्यँ स विहाय निजां मृगेंद्रः ॥
दंतिव्रजानिव पुरः समुपैति यूयं
वीरा अपीह विमुखा अपयाथ वो धिक् ॥ ५७ ॥
एवं वदत्यभयदे यवनाधिपेऽस्मिन्
खड्गं प्रगृह्य च पुरः प्रविधाय चर्म ॥
वीरो मुरारिरखिलैः पदगैः स साकं
योद्धुं ययौ यवनपस्य पुरःप्रदेशम् ॥ ५८ ॥
हत्वा पदातिनिचयान्स्वपुरःप्रयातं
दृष्ट्वा दलेलयवनश्चकितो बभूव ॥
स्वान्संहतान्भटगणांन्पुरतो विधाय
सार्धं युयोध रिपुणा पुरतः स्थितेन ॥ ५९ ॥
तद्युद्धमुल्बणमभूत्सशिखाशिखानां
मध्याह्नगे सवितरि प्रचलत्कृपाणं ॥
वीरा असृक्प्रसृतिभिः सहिता वसंते
ते किंशुका सकुसुमा इव रेजिरेत्र ॥ ६० ॥

वृत्तिरिति । अमुष्य कायस्थकस्य । संज्ञायांकन् । मुरारिनाम्नः विलेखनं वृत्तिः उपजीवनं । वृत्तिर्वर्तनजीवने इति विश्वः । अस्तीति शेषः । सः मुरारिः निजां वृत्तिं विहाय मृगेंद्रः सिंहः दंतिव्रजानिव पुरः समुपैति प्राप्नोति यूयं विमुखाः संतः अपयाथ अतः वः धिक् अस्तु । उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु द्वितीयाम्रेडितांतेषु ततोन्यत्रापि दृश्यते इति ॥ ५७ ॥

एवमिति । अभयदे तस्मिन् दलेले एवं पूर्वोक्तप्रकारेण वदति सति सः वीरः मुरारिः खड्गं प्रगृह्य चर्म पुरश्च प्रविधाय अखिलैः पदगैः साकं सार्धं । साकं सार्धं समं सहेत्यमरः । यवनाधिपस्य पुरः प्रदेशं योद्धुं ययौ जगाम ॥ ५८ ॥

हत्वेति । दलेलयवनः पदातिनिचयान् पद्गसंघान् हत्वा स्वपुरः प्रयातं आगतं मुरारिं दृष्ट्वा चकितः आश्चर्यवान् बभूव । स्वान् स्वीयान् संहतान् संघीभूतान् भटगणान् पुरतः अग्रतः विधाय कृत्वा पुरतः अग्रभागे स्थितेन रिपुणा सार्धं युयोध । चक्षिङोङित्करणाज्ज्ञापकात् अनुदात्तेत्वलक्षणमात्मनेपदमनित्यमितिपरस्मैपदं ॥ ५९ ॥

तदिति । सशिखाश्च अशिखाश्च सशिखाशिखाः तेषां तत् उल्बणं घोरं प्रचलतः कृपाणाः यस्मिन् तत् प्रचलत्कृपाणं युद्धं । प्रचलत्कृपाणमिति क्रियाविशेषणं

२७ '०स्थजस्य' पा० भे० । २८ 'चयान्' पा० भे० ।

संच्छिन्नपाणिपदका भुवि शेरते स्म
केचिद्विदष्टदशनच्छदमीयुरग्रे ॥
आलिंग्य भूमिमपरे रुरुदुः परे तु
क्रुद्धा विशालकरवालकराः प्रजन्हुः ॥ ६१ ॥
एवं सहस्रमितवीरवरा मुरारेः
क्षीणा दलेलयवनस्य तथा प्रहीणाः ॥
सज्ये शरं धनुषि वीरवरो निधाय
तस्थौ मुरारिरपि खड्गकरोऽवतस्थे ॥ ६२ ॥
तं खड्गपाणिमवदद्यवनो मुरारिं
खड्गं विहाय शरणं व्रज जीवदं माम् ॥
देवः शरण्य इह एष इतीरयित्वा
तस्याग्रतः समसरत्करवालपाणिः ॥ ६३ ॥

वा । सवितरि सूर्ये मध्याह्नगे । अह्नो मध्यो मध्याह्नः । तं गच्छतीति मध्याह्नगस्तस्मिन् सति । अह्नोऽह्न एतेभ्य इति अह्नादेशः । रात्राह्नाहाः पुंसीति पुंस्त्वं । बभूव । असृजां रक्तानां प्रवाहैः सहिताः ते वीराः अत्र युद्धभूमौ वसंते सकुसुमाः सपुष्पाः किंशुका इव पलाशा इव रेजिरे शुशुभिरे । अत इत्यनुवर्तमानेपि फणां च सप्तानामिति विधानसामर्थ्यात् एत्वाभ्यासलोपौ ॥ ६० ॥

संच्छिन्नेति । पाणयश्च पदानि च पाणिपदं संच्छिन्नं पाणिपदं येषां ते संच्छिन्नपाणिपदकाः । शेषाद्विभाषेति समासांतः कप् । यद्वा पाणिपदस्य संबंधि कं सुखं संच्छिन्नं पाणिपदकं येषां ते तथोक्ताः । यद्वा पाणयश्च पदानिच कं शिरश्च पाणिपदकं येषां ते केचिद्वीराः भुवि रणभूमौ शेरते स्म पेतुरित्यर्थः । केचित् विदष्टः दशनच्छदः ओष्ठो यथा तथा अग्रे ईयुः जग्मुः । अपरे भूमिमालिंग्य रुरुदुः परे तु क्रुद्धाः अत एव विशालाः करवालाः करेषु येषां ते विशालकरवालकराः । प्रहरणार्थेभ्यः परे निष्ठासप्तम्याविति करशब्दस्य परनिपातः। यद्वा विशालाः करवालाः येषु ते विशालकरवालाः तथा भूताः करा येषां ते विशालकरवालकराः संतः प्रजन्हुः प्रहारं कृतवन्तः ॥ ६१ ॥

एवमिति । मुरारेः एवं सहस्रमिताः सहस्रसंख्याः वीरवराः वीरश्रेष्ठाः क्षीणाः क्षयं प्राप्ताः । क्षियोदीर्घादिति निष्ठानस्य नकारः। तथा तेन प्रकारेण दलेलयवनस्य वीरवराः प्रहीणाः नष्टाः । ओदितश्चेति तस्य नः। वीरवरः दलेलः ज्यया सहितं सज्यं तस्मिन् सज्ये । मौर्वी ज्या सिंजिनी गुण इत्यमरः। धनुषि शरं निधाय कृत्वा तस्थौ । अवशिष्टमेकं मुरारिं हंतुमिति भावः ॥ ६२ ॥

तमिति । यवनः खड्गपाणिं तं मुरारिं खड्गं विहाय जीवं जीवनं ददातीति जी-

बाणेन तस्य हृदयं यवनो बिभेद
तीक्ष्णेन सोऽपि शिवशंकर पाहि मेति[२९] ॥
उक्त्वाशु कश्यपजमंडलमेष[३०] भित्त्वा
यातो दिवं दिविजकीर्तितकीर्तिमालः ॥ ६४ ॥
गत्वा ततः स यवनो गिरिदुर्गमस्य
द्वारि स्थितैः सह युयोध धनुर्धराग्र्यः ॥
तानाह मोघमरणं न हि युक्तमत्र
यातो मुरारिरविता भवतां पतिः सः ॥ ६५ ॥
ते प्राहुरेहि शिवभूपगृहे मुरारि-
तुल्यास्ततः समधिका इह सन्ति नूनम् ॥

वदः तं प्राणरक्षकमित्यर्थः । यद्वा जीवं द्यति खंडयतीति जीवदः तं प्राणापहारकमित्यर्थः । मां शरणं व्रज इत्यवदत् । करवालपाणिः सः मुरारिः एषः हृदयवर्ती देवः शंकरः शरण्यः शरणे साधुः शरण्यः । तत्र साधुरितियत्प्रत्ययः । इति ईरयित्वा उक्त्वा तस्य अग्रतः समीपप्रदेशे समसरत् । इदानीं मरणमेव वरमिति निश्चित्य पुर एव ससारेत्यर्थः ॥ ६३ ॥

बाणेनेति । यवनः दलेलः तस्य मुरारेः हृदयं तीक्ष्णेन बाणेन बिभेद विददार । दिविजाताः दिविजाः तैः देवैः कश्यपाज्जातः कश्यपजः । अन्येष्वपि दृश्यत इति डः । कीर्तिता कीर्तिमाला यस्य तथोक्तः । सप्तम्यां जनेर्डः । प्रावृट्शरत्कालदिवां जे इति सप्तम्या अलुक् । सोपि मुरारिरपि हे शंकर हे शिव मा मां पाहि रक्ष अस्माद्दुःखादिति भावः । यद्वा बाणव्यथामपनीयैतच्छरीरं मा रक्ष स्वर्गमेव नयेत्युक्त्वा कश्यपजः सूर्यः तस्य मंडलमेव भित्त्वा दिवं स्वर्गं यातः ॥ द्वाविमौ पुरुषौ लोके सूर्यमंडलभेदिनौ । परिव्राड्योगयुक्तश्च रणे चाभिमुखे हत इति स्मरणात् ॥ ६४ ॥

गत्वेति । धरंति ते धराः धनुषः धराः धनुर्धरास्तेषां अग्र्यः श्रेष्ठः सः यवनः गिरिदुर्गं पुरंदरं गत्वा अस्य पुरंदरस्य द्वारि द्वार स्थितैः सह युयोध । यद्वा गिरीणां मध्ये दुर्गमस्य दुःप्रवेशस्य पुरंदरस्य द्वारं इति विभक्तिव्यत्ययेन द्वितीया । गत्वा द्वारि स्थितैः सहेति वा योजना । सः तान् मोघमरणं निष्फलमरणं न युक्तं मुराविना किंचित्साध्यमिति भावः । हि यस्माद्भवतां पतिः स्वामी अविता रक्षकः सः मुरारिः यातः मृत इत्याह ॥ ६५ ॥

ते प्राहुरिति । एहि युद्धार्थं आगच्छ शिवभूपगृहे इह अस्मिन् दुर्गे मुरारि-

२९ "मामवेति" पा० भे० । ३० "०मेव" पा० भे० ।

तद्वृत्तजातमखिलं स निशम्य[31] दूतै
राजा जगाद जयसिंहमिदं वचः सः ॥ ६६ ॥
सर्वेऽपि दुर्गनिचया मयि संति सोऽहं
यस्मात्त्वदीय इह युद्धमतो न युक्तम् ॥
आनीय तं यवनपं सह तेन सख्यं
स्याच्चेद्वरं यदि नहीदमहं व्रजामि ॥ ६७ ॥
इत्थं निशम्य वचनं स तथा विधाय
भ्रात्रा निजेन यवनेन च सार्धमेतम् ॥
दिल्लीपतेरगमयद्गृहमेष राजा
संचिंतयन् हृदि वचः प्रययौ शिवायाः ॥ ६८ ॥
राजानमागतममुं स निशम्य तूर्णं
सत्कृत्य भूषणवरैर्वसनैर्वचोभिः ॥
राजोपभोगसहितं भवनं विशालं
पुत्रेण सार्धमधिवासयति स्म भूपम् ॥ ६९ ॥

तुल्याः ततः समधिका अपि अनेकाः सन्ति त्वया एकः मुरारिर्दृष्टः तादृशाः ततोऽधिका वा बहवः सन्ति अतो दुर्गं इदं त्वयासाध्यमिति भावः । स राजा शिवः तद्वृत्तजातं वृत्तसमूहं । जातं जात्योघजन्मसु इति विश्वः । दूतैः चारैः विनिशम्य श्रुत्वा जयसिंहं इदं वचः वक्ष्यमाणं वचनं जगाद ॥ ६६ ॥

सर्वे इति । सर्वेऽपि दुर्गनिचयाः यस्मिन् मयि सोहं त्वदीयः त्वदधीनः अतः इह अस्मिन् काले युद्धं न युक्तं । दुर्गाधिपतेः मम त्वदधीनत्वात् दुर्गाण्यपि त्वदधीनानीति युद्धं व्यर्थं इति भावः । तं यवनपं दलेलं आनीय तेन सार्धं सख्यं चेत् वरं मनाक् । देवाद्वृते वरः श्रेष्ठ त्रिषु क्लीबं मनाक् प्रिये इत्यमरः । यदि इदं सख्यं न भवेत्तर्हि अहं अधुनैव व्रजामि गच्छामि । पुरंदरं गिरिं गत्वा तं यवनं हनिष्यामि इति भावः ॥ ६७ ॥

इत्थमिति । सः जयसिंहः इत्थं पूर्वोक्तप्रकारं वचनं निशम्य तथा विधाय परस्परस्य सत्कारपूर्वकं सख्यं कृत्वेत्यर्थः । निजेन अनुजेन सार्धं यवनेन दलेलाख्येन च सार्धं एनं राजानं दिल्लीपतेः गृहं अगमयत् प्रेषितवान् । गतिबुद्ध्यादीना अण्यंतावस्थायां कर्तुर्ण्यंतावस्थायां कर्मत्वं । राजापि शिवोऽपि शिवायाः देव्याः वचः पूर्वोक्तं हृदि विचिंतयन् सन् प्रययौ जगाम ॥ ६८ ॥

राजानं इति । सः दिल्लीश्वरः अमुं राजानं आगतं निशम्य भूषणवरैः वसनैः

३१ "विनिशम्य" पा० भे० ।

कश्चित्तदीययवनो यवनाधिपेंद्रं
प्रत्यब्रवीद्रहसि नायमहो मनुष्यः ॥
यक्षोऽथवा किमिह राक्षस एष जातो
नोपेक्ष्य एष भवता क्षणमप्यधीश ॥ ७० ॥
श्रुत्वा तदीयवचनं तुरगाधिवाहान्
वीरान् पदातिनिचयानयुतप्रसंख्यान् ॥
संप्रेष्य राजभवनं सकलं रुरोध
वातोऽपि यन्नविशति स्म विना ह्यनुज्ञाम् ॥ ७१ ॥
रुद्धं निरीक्ष्य नृपतिः स्वसुतेन सार्ध-
मात्मानमेष चतुरो धृतिमान् बुधोऽपि ॥
चिंतापयोनिधिनिमग्नमना बभूव
देवीपदांबुजसमर्चनतत्परोऽभूत् ॥ ७२ ॥

वस्त्रैः वचोभिश्च तूर्णं शीघ्रं । सत्वरं चपलं तूर्णमित्यमरः । सत्कृत्य भूपं विशालं विस्तीर्णं राज्ञां उपभोगाः तैः सहितं भवनं गृहं पुत्रेण शंभुना सार्धं अधिवासयतिस्म स्थापयामास । उपान्वध्याङ्वस इति गृहस्य कर्मत्वं ॥ ६९ ॥

कश्चिदिति । कश्चित् तस्यायं तदीयः स चासौ यवनश्च तदीययवनः यवनाधिपेंद्रं रहसि एकांते इति प्रत्यब्रवीत् । इति किं । हे अधीश । अहो इत्याश्चर्ये । अयं शिवः मनुष्यः न किंतु इह अस्मिन् लोके जातः एषः यक्षः अथवा राक्षसः न मनुष्यः इत्यर्थः । अतः एषः शिवः भवता क्षणमपि नोपेक्ष्यः उपेक्षायामहितं स्यादिति भावः ॥ ७० ॥

श्रुत्वेति । सः दिल्लीश्वरः तदीयवचनं श्रुत्वा अयुतप्रसंख्या येषां तान् वीरान् तुरगाधिवाहान् पदातिनिचयांश्च संप्रेष्य सकलं राजभवनं रुरोध । वातोऽपि वायुरपि अनुज्ञां विना यत् न विशति स्म । मनुष्यस्य का कथेति भावः ॥ ७१ ॥

रुद्धमिति । चतुरः धृतिमान् धैर्यवान् । धृतिर्योगांतरे धैर्ये धारणाध्वरतुष्टिष्विति विश्वः । बुधोऽपि ज्ञानवानपि एषः राजा स्वसुतेन शंभुना सार्धं आत्मानं रुद्धं निरीक्ष्य चिंतैव पयोनिधिः समुद्रः तस्मिन् निमग्नं मनो यस्य तथा भूतो बभूव । अतः देव्यायाः शिवायाः पदांबुजं पदकमलं तस्य सम्यक् अर्चनं पूजनं तत्र तत्परः आसक्तः अभूत् । यद्वा दीव्यतीति देवी द्योतमाना ईः लक्ष्मीः । लक्ष्मीरीकार उच्यते इति एकाक्षरकोशः । वैष्णवी शक्तिरिति यावत् । तस्याः पदांबुजसमर्चनतत्परः । यद्वा देवी भवानी पदं यस्य स देवीपदो गणेशः अंबुजः चंद्रः तयोः समर्चनं पूजनं तत्र तत्परः संकष्टचतुर्थीव्रताचरणं चकारेत्यर्थः यद्वा देव्याः पदे देवीपदे स्थानभूतौ हरिहरौ तयोः अंबुजैः समर्चने तत्परः । यद्वा सम्यक् अर्चयंति

यातेषु षट्सु दिवसेषु निशांतकाले
स्वप्ने समेत्य जननी जगतो जगाद ॥
चिंतां त्वमत्र कुरु मातिभयादितस्त्वां
नेष्ये त्वदीयवसतिं नृपते प्रयत्नात् ॥ ७३ ॥
इत्थं निशम्य वचनं नृपतिः प्रतुष्टो
देवीप्रयोजितमनाः सुदृढान् करंडान्
वंशोद्भवानुषसि सत्वरमानयित्वा
जंबीरदाडिमरसालफलान्यधात्सः ॥ ७४ ॥
आपूर्य रक्षकसमक्षमसौ ततस्तान्
अप्रेषयद्यवनपाधिपमंत्रिगेहम् ॥
ते रक्षकाः प्रतिदिनं तु करंडकांस्तान्
उद्घाट्य तानि ददृशुर्न कदाचिदेते ॥ ७५ ॥
कृत्वा चिरं प्रतिदिनं व्रतमेतदादौ
राजैकदा स्वशयने नरमेकमाप्तम् ॥

ते समर्चनाः ब्राह्मणाः । कर्तरि ल्युट् । देवीपदांबुजस्य समर्चनाः देवीपदांबुजसमर्चनाः तेषु तत्परः आसक्तः ब्राह्मणद्वारा लक्षचंड्यादि चकारेत्यर्थः ॥ ७२ ॥

यातेष्विति । जगतः जननी अंबिका षट्सु दिवसेषु यातेषु निशांतकाले प्रातःकालसमये गोदोहनकाले इति यावत् । अनेन स्वप्नस्य सद्यः फलं भविष्यतिती सूचितं । स्वप्ने स्वप्नावस्थायां समेत्य हे नृपते त्वं अत्र प्रतिबंधविषये चिंतां मा कुरु व्याख्यातं पूर्वमिदं । अति भयात् इतः अस्मात् कारागृहात् त्वदीयवसतिं प्रयत्नात् त्वां नेष्ये । दुहादित्वाद्द्विकर्मकत्वं क्षिप्रवचने लृट् ॥ ७३ ॥

इत्थमिति । देव्या प्रयोजितं मनो यस्य तथोक्तः नृपतिः राजा इत्थं पूर्वोक्तप्रकारेण वचनं निशम्य श्रुत्वा प्रतुष्टः सन् उषसि प्रातःकाले सुदृढान् वंशोद्भवान् त्वक्सारोद्भवान् करंडान् सत्वरं आनयित्वा आनाय्य तत्र तेषु जंबीराणि च दाडिमानि च सालफलानि च तानि अधात् निहितवान् ॥ ७४ ॥

आपूर्येति । असौ तान् करंडान् रक्षकाणां समक्षं । प्रतिपरसमनुभ्योक्ष्ण इति टच् । आपूर्य यवनाधिपमंत्रिगेहं अप्रेषयत् । ते रक्षकास्तु तान् करंडकान् प्रतिदिनं उद्घाट्य तानि फलानि ददृशुः दृष्टवंतः । कदाचित् एते रक्षकाः न ददृशुः ॥ ७५ ॥

कृत्वेति । राजा आदौ प्रथमं एतत् करंडप्रेषणरूपं व्रतं चिरं चिरकालं दिने दिने इति प्रतिदिनं । यथार्थे अव्ययीभावः । कृत्वा एकस्मिन् काले एकदा । सर्वैकान्य

१२ "०मप" पा० भे० ।

स्वैर्भूषणैश्च वसनैरपि शाययित्वा[33]
यातः करंडपिहितः सहितः सुतेन[34] ॥ ७६ ॥
गत्वातिदूरतरमेष निशावसाने
वाराणसीं प्रतिययौ नृपतिः पदातिः
मार्गे व्रजन् यवनजातिभवः फकीरै[35]:
संदृश्यते स्म यवनाधिपवीरसंघैः ॥ ७७ ॥
दिल्लीश्वरोऽपि नृपतिं प्रगतं निशम्य
स्वापं विहाय निशि जागरणैकभक्तिः ॥
धानुष्कवीरनिचयान् परितो विधाय
पर्यंकगः शिवशिवेति जजाप नित्यम् ॥ ७८ ॥
लक्षद्वयं तदनुगास्तुरगिप्रवीराः
याता दिशासु सकलासु विमार्गणार्थम् ॥
अध्वन्यमुं नरपतिं ददृशुश्चरा ये
ते मेनिरे क्षपणकं च विरक्तमन्ये ॥ ७९ ॥

किं यत्तदः काले दा इति दा प्रत्ययः । स्वैः स्वकीयैः भूषणैः उपलक्षितं एकं आप्तं दूतं स्वशयने स्वशय्यायां शाययित्वा प्रास्वाप्य । रक्षकप्रतारणार्थमिति भावः । करंडपिहितः करंडांतःस्थितः सुतेन शंभुना करंडपिहितेन सहितः यातः गतः ॥ ७६ ॥

गत्वेति । एषः नृपतिः राजा निशावसाने प्रातः अतिदूरं गत्वा पदातिरेव वाराणसीं काशीं प्रति ययौ । यवनाधिपवीरसंघैः शोधार्थं गतैः मार्गे व्रजन् गच्छन् सः यवनजातिसमुद्भवः फकीरः लोके प्रसिद्धः संदृश्यते स्म ददृशे ॥ ७७ ॥

दिल्लीति । नृपतिं शिवं कारागारादपि प्रगतं निशम्य स्वापं विहाय निशि जागरणे एव भक्तिर्यस्य तथोक्तः सः दिल्लीश्वरोऽपि धनुः प्रहरणं येषां ते धानुष्काः धानुष्काश्च ते वीरनिचयाश्च तान् । प्रहरणार्थे ठकि उसतंत्वात्कः । परितः समंतात् । समंततस्तु परितः सर्वतो विष्वगित्यपीत्यमरः । विधाय कृत्वा पर्यंकगः शय्यास्थः सन् शिवशिवेति नित्यं जजाप । यवनस्य भगवन्नामोच्चरणं अयुक्तमपि स चकारेति विरोधः शिवेति शत्रुनामोच्चारणमिति परिहारः कारागारान्निर्गत्य अत्रैवांतर्हितः सन् कदाचित् रात्रावागत्य मम शिरश्छेत्स्यतीति भयाज्जजागारेति भावः ॥ ७८ ॥

लक्षद्वयमिति । तदनुगाः दिल्लीपालानुगाः लक्षद्वयं द्विलक्षसंख्याः तुरगिणः अश्वारोहाः तेषां प्रवीराः सकलासु दिशासु दिक्षु । भागुरिमते आबंतोप्ययं शब्दः ।

३३ "भूषयित्वा" पा० भे० । ३४ "चनेन" पा० भे० । ३५ "भवो विरक्तः" पा० भे० ।

वाराणसीं स समुपेत्य शिवाख्यवीरः
स्थित्वा दिनानि कतिचित्सरितां वरां ताम् ॥
संपूज्य वस्त्रमणिभूषणकंकणाद्यैः
स्तुत्वा ययौ स निजदेशमहीनसत्त्वः ॥ ८० ॥

श्रीविष्णुप्रपदोद्भवे भवजटाजूटोच्चसौधोत्तमा-
द्गिंत्तुंगतरंगसंगसुभगे भागीरथि श्रीमति ॥
आलंबादविलंबतांब तव यं चक्रेऽहमंहश्चयम्
तं त्वं नाशय जाह्नवि प्रशमय श्रद्धां सुतादिष्वपि ॥ ८१ ॥

भिमार्गणार्थं याताः गताः ये नराः अमुं राजानं अध्वनि ददृशुः ते एनं क्षपणकं मेनिरे अन्ये विरक्तं सन्यासिनं मेनिरे तपोबलादितिभावः ॥ ७९ ॥

वाराणसीमिति । सः शिवाख्यः वीरः वरं च तत् अनश्च वरानः श्रेष्ठं उदकं तस्य अदूरे भवा वाराणसी तां । अदूरभवश्चेत्यणि ङीप् । समुपेत्य गत्वा कतिचित् दिनानि स्थित्वा तां सरद्वरां भागीरथीं वस्त्रमणिकंकणाद्यैः संपूज्य स्तुत्वा च निजं देशं दक्षिणदेशं ययौ । किं भूतः । सः अहीनसत्वः न हीनं अहीनं अहीनं सत्वं बलं यस्य । यद्वा नहीनः अहीनः प्रबलः तस्मिन् सत्वं बलं यस्य । यद्वा अहीनां इनः श्रेष्ठः शेषस्तस्येव बलं यस्य । यद्वा अहिश्च इनश्च अहीनौ शेषसूर्यौ तयोरिव सत्वं बलं यस्य । अन्येप्येवं अर्थाः ऊह्याः ॥ ८० ॥

भागीरथीं स्तुत्वा निजं देशं ययावित्युक्तं तं स्तवमाह । श्रीगिति । श्रिया युक्तः विष्णुः श्रीविष्णुः । शाकपार्थिवादित्वात्समासः । तस्य प्रपदं पादाग्रं । पादाग्रं प्रपदं-प्रोक्तमित्यमरः । तस्मात् उद्भवा उत्पन्ना तत् संबुद्धौ हे श्रीविष्णुप्रपदोद्भवे । अनेन सर्वा नद्यः पर्वतसंभवाः अस्यास्तु सकलदेवगुरोः विष्णोः उद्भूतत्वात्सर्वाभ्यो नदीभ्यः श्रेष्ठत्वमुक्तं । अन्यच्च श्रेष्ठत्वे कारणमाह । भवेति । भवः शिवः । व्योमकेशो भवो भीमः स्थाणू रुद्र उमापतिरित्यमरः । तस्य जटाजूटः कपर्दः । कपर्दोऽस्य जटाजूट इत्यमरः । स एव उच्चं सौधं सुधया लिप्तं गृहं तस्मिन् उत्तमाः श्रेष्ठाः । यद्वा सौधेषु उत्तमं सौधोत्तमं जटाजूटस्य सौधसाम्यं धावल्यात् विशालत्वाच्च तस्मिन् आसमंताद्गिरतः संचरंतस्तुंगाः उच्चाः ये तरंगाः वीचयः तेषां भंगाः रचनाः तैः सुभगे शोभने । श्रीमति । मतुबंतात् ङीप् । हे भागीरथि भगीरथादागत । तत् आगत इत्यण् ङीप्च । अतिपुण्यसूर्यवंशोद्भवभगीरथद्वारागमनमपि श्रेष्ठत्वे कारणं । अहं तवालंबात् आश्रयात् अविलंबतः शीघ्रं हे अंब मातः । अंबार्थनद्यो ह्रस्व इति ह्रस्वत्वं । अनेन अपराधक्षमत्वं त्वय्यस्तीति सूचितं । लोके हि मातरः पुत्रापराधं सहंते । यं अहश्चयं पापसंघं चक्रे कृतवानस्मि । उत्तमैकवचनं ।

३६ "०भंग" पा० भे० ।

गंगेऽगानि विमुंचति त्वयि नरो यः सोऽगहीनद्विष-
द्रूपं वांगविहीनपुत्रतनुतां प्राप्नोति वांछासमम् ॥
मातस्तेऽवतरात्पुरा भुवि नराः पापं न चक्रुर्धिया
निर्भीका अधुना चरंति सततं पापापहे पातकम् ॥ ८२ ॥
कीर्तिर्भाति भगीरथस्य नृपतेर्लोकत्रये विस्तृता
किंवायं ध्वज एव नाकमखिलं व्याप्यागतो भूतलम् ॥
मालांभोजमयी विराट्सुरपतेः कंठस्थिता लंबते
ब्रह्मांडं तु विभिद्य विस्तृततनुर्यातः सहस्राननः ॥ ८३ ॥

अस्मिन् पापे कृते एतत्परिहारक्षमा भागीरथी वर्तते का भीतिरिति बुध्या कृत-मित्यर्थः । हे जाह्नवि जह्नुकन्ये तं त्वं नाशय सुतादिषु श्रद्धां भक्तिं च नाशय तेषां त्वद्वियोगहेतुत्वादिति भावः ॥ ८१ ॥

गंगे इति । हे गंगे यः नरः त्वयि अंगानि शरीरावयवान् विमुंचति सः अंग-हीनः कामः तस्य द्विषन् शत्रुः शिवः तस्य रूपं वा अंगहीनः कामः सः पुत्रो यस्य अंगहीनपुत्रः विष्णुः तस्य तनुतां शरीरत्वं वांछया समं यथा स्यात्तया प्राप्नोति शरीरे विरागं प्राप्ते न स्वस्मिन् शरीरं प्रक्षिप्तं तस्य पुनः शरीरस्य सारूप्यदानमयुक्तं शिवकेशवौ सर्वेश्वरौ अतस्तयोरेवसारूप्यं देयं तौ तु सशरीरौ तयोः शत्रुपुत्रयो-रनंगत्वात् अनंगशत्रुरनंगपुत्र इति नाम्नाप्रसिद्धयोः तयोरेव साम्यं नामैकदेशे अनंगत्वं दृष्ट्वा ददासीति भावः । हे मातः नराः ते अवतरात् पुरा भूमावागमनात् पूर्वं धिया बुद्ध्या बुद्धिपूर्वं इत्यर्थः पापं न चक्रुः आयासं विना पापपरिहारकस्थला-भावादिति भावः । पापे कृते तत्परिहारः कृच्छ्रचांद्रायणादिना कर्तव्यः स तु शरीरायाससाध्यः प्रत्याम्नायेन कर्तव्यः चेद्द्रव्यसंपदपेक्षा अतः पापमेव बुध्या न चक्रुः । अबुध्या जातं चेत्प्रायश्चित्तेन परिहारं चक्रुः । अधुना अस्मिन् काले निर्भीकाः संतः हे क्लेशापहे यमदंडक्लेशापहे । अपेच क्लेशतमसोरिति डप्रत्ययः । पातकं सततं चरंति अनायासेन स्नानमात्रेणैव सर्व पातकपरिहारसंभवादिति भावः ॥ ८२ ॥

कीर्तिरिति । इयं भागीरथी भगीरथस्य तत्संज्ञस्य नृपतेः कीर्तिर्यशः भाति शो-भते किं इतिउत्प्रेक्षा ॥ मन्ये शंके ध्रुवं प्रायो नूनमित्येवमादिभिः । उत्प्रेक्षा व्यज्यते शब्दैरिव शब्दोऽपि तादृशः ॥ अत्रारुचिं मत्वा प्रकारांतरेण उत्प्रेक्षते । यद्वा तस्यैव एषः ध्वजः शुभ्रपटवान् अखिलं नाकं व्याप्य भूतलं आगतः । यद्वा विराट्सुर-पतेः कंठस्थिता अंभोजमयी शुभ्रकमलमयी माला लंबते । विराट्पुरुषस्य महत्त्वं अंभोजान्यपि महत्तराणि मालाऽपि महत्तरेति यादृशो यक्षस्तादृशो बलिरितिन्यायेन

३७ "क्लेशापहे" पा० मे० ।

हे जन्होस्तनये नयेन विनयेनाचारतो येऽन्विताः
स्वे स्वे कर्मणि निष्ठिताश्च सततं कुर्वंति यज्ञादिकान् ॥
ते स्वर्गं प्रति यांति ये तु बहुशः पापं सदा कुर्वते
स्नानेनैव सकृज्जले तव नराः संयांत्यमर्त्यालयम् ॥ ८४ ॥
कीनाशस्य गृहे पुरा समभवच्चारस्य कोलाहलो
व्याप्ता भूर्दुरितिव्रजैर्वयमिहात्यल्पास्तवानुव्रताः ॥
त्वं चायाः स यदा तदैव सकलः कोलाहलोऽस्तं गतो
नारक्योऽपि भुवः क्वचित्क्वचिदलं रिक्ता अभूवन् क्षणात् ॥ ८५ ॥
हे देवि देववरवंदितपादपद्मे
पद्मोद्भवांजलिजलादुपपन्नदेहे ॥

बोध्यं । किंच एकांसस्थो मालाभागः उत्तरीयेणाच्छन्नः इतरांसस्थो दृश्यते इति च ज्ञेयं । यद्वा विस्तृता तनुर्देहो यस्येति विस्तृततनुः सहस्रानन: शेषः ब्रह्मांडं उपरि निर्भिद्य अधः यातः नु । शेषस्य शुभ्रत्वात् सहस्राननत्वात् एतस्याः अपि तथात्वात् साम्यं । किंच नदी उद्गमस्थले लघुतरा अग्रे गुरुरिति शेषस्य पुच्छे लघुत्वं अग्रे गुरुत्वं इति पूर्वोत्प्रेक्षापेक्षया इयं अतिसुंदरोत्प्रेक्षा ॥ ८३ ॥

हे जन्होरिति । हे जन्होः तनये कन्ये नयेन नीत्या विनयेन नम्रतया आचारेणेति आचारतः । सार्वविभक्तिकस्तसिः । अन्विताः युक्ताः आचारवंतः । युताः इतिपाठः साधीयान् । स्वे स्वकर्मणि सततं निष्ठिताः अत्यंतं स्थिताः ये नराः । ब्राह्मणाः यज्ञादिकान् धर्मान् कुर्वंति ते स्वर्गं प्रति यांति । तव तु एतद्विलक्षण एव महिमेत्याह । ये तु सदा सर्वकालं बहुशः बहुवारं । बह्वल्पार्थाच्छस्कारकादिन्यादिनाशस् । पापं कुर्वते तव जले सकृदेकवारमेव न तु बहुवारमित्यर्थः । स्नानेनैव न तु यज्ञादिना । अमर्त्यस्य विष्णोः आलयं वैकुंठं यांति अतस्तव लोकोत्तरं सामर्थ्यमिति भावः ॥ ८४ ॥

कीनाशस्येति । पुरा पूर्वं त्वदवतरणात्प्रागित्यर्थः । कीनाशस्य यमस्य गृहे चरंति ते चराः चराणां समूहश्चारं तस्य चारस्य दूतसमूहस्य । चरेत्र इति ठप्रत्यये समूहार्थेऽण् । दुरितमस्ति येषां ते दुरितिनः । अंहो दुरितदुष्कृतमित्यमरः । अत इनिः । तेषां व्रजैः समूहैः भूः पृथ्वी । भूर्भूमिरचलाऽनंतेत्यमरः । व्याप्ता इह यमगृहे तव अनुव्रताः सेवकाः वयं अत्यल्पाः इति कोलाहलः कलकलः अभूत् । पापकृतां बाहुल्यात्त्वत्सेवकानामस्माकमल्पत्वात् स्वामिकार्यं न घटते इति दंडान् परित्यज्य तस्थुरित्यर्थः । किंच त्वं यदा अयाः यदा भूलोकं प्राप्तासि । यातेर्लङःसिप् । तदैव प्राप्तिकाल एव सः पूर्वोक्तः कोलाहलः अस्तंगतः । नरकाणां इमाः नारक्यः नरकसंबंधिन्यः भुवः क्वचित् क्वचित् अलं अत्यंतं रिक्ताः अभूवन् । नरकस्थवंशजैस्त्वयि स्नानतर्पणादि कृत्वा स्वपूर्वजाः उद्धृताः इति नरकभूमयो रिक्ताः जाताः इत्यर्थः ॥ ८५ ॥

देहं मदीयमिममंबुनि[३८] ते विलीनं
कुर्वाशु येन जनितो रहितो भवेयं ॥ ८६ ॥

त्वत्प्राप्तेरिह हेतवः क्षितितले ह्याद्यो मखः सागरो
भास्वद्वंशभवा भगीरथमुखा भूपालसंघा[३९]स्तथा ॥
श्रीमद्वामनपादपंकजमतो रुद्रस्य मूर्धेति ते
संतु प्राणिषु पापकारिषु दया मुख्यं निमित्तं तव ॥ ८७ ॥

यतंते मुक्त्यर्थं बहुजनिशतैर्ज्ञानिनिचया
भवत्येषां कश्चिज्जनिमरणहीनो नरवरः ॥
त्वदंके यः शेते खलु जननि देहस्य विरतौ
स तः पापव्रातेऽपि च भवति सद्यो हरिरयम् ॥ ८८ ॥

ते वाजिसादिनिचया बहुधा विमृश्य
दिल्लीपतिं प्रतिसमेत्य नृपो नहीति ॥
ऊचुस्तदा यवनपोपि[४०] भयाभिभूतो
रात्रं दिवं हृदि विचिन्तयति स्म भूपम् ॥ ८९ ॥

हे देवीति । हे देवि देववरैः वंदितं पादपद्म यस्यास्तत्संबुद्धौ । पद्मोद्भवो ब्रह्मा तस्य अंजलिजलात् उपपन्नदेहे प्राप्तोद्गमे इदं मदीयं देहं ते अंबुनि विलीनं लयं गतं कुरु । येन देहस्य जनेरिति जनितः जननात् रहितः मुक्तः भवेयं स्याम् ॥ ८६ ॥

त्वत्प्राप्तेरिति । इह अस्मिन् क्षितितले त्वत्प्राप्तेः त्वदागमनस्य सगरस्यायं सागरः मखः यज्ञः आद्यः प्रथमः हेतुः । सगरेणाश्वरक्षार्थं योजिताः षष्टिसहस्रपुत्राः कपिलदृष्टिपातेन भस्मीभूताः तदुद्धारार्थं भागीरथ्याः आनयनं प्रथमो हेतुरित्यर्थः । भास्वद्वंशे सूर्यवंशे भवाः भगीरथमुखाः भूपालसंघाः द्वितीयो हेतुः । तथा श्रीमद्वामनपादपंकजं तृतीयो हेतुः । वामनपादपंकजेन ब्रह्मांडे भेदिते तद्रंध्रद्वारा अवतरणात् । अथो अनंतरं रुद्रस्य मूर्धा आधारभूतत्वात् । इति ते पूर्वोक्ताः हेतवः संतु । मन्मते तु पापं कुर्वंति ते पापकारिणः तेषु दया मुख्यं निमित्तं । लोके प्रसिद्धानीतराणि गौणानीति भावः ॥ ८७ ॥

यतंते इति । ज्ञानिनां ज्ञानवतां निचयाः बहुजनिशतैः अनेकजन्मशतैः मुक्त्यर्थं यतंते तेषां यत्नवतां ज्ञानिनां मध्ये कश्चिन्नरवरः नरश्रेष्ठः जनिमरणहीनः भवति तदुक्तं गीतासु । मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये । यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः इति । हे जननि देहस्य विरतौ समाप्तौ मरणकाले इति यावत् यः त्वदंके त्वदुत्संगे शेते सः सद्यः देहत्यागक्षणे एव हरिः विष्णुः भवति ॥ ८८ ॥

प्रासंगिकं समाप्य प्रकृतमाह । ते इति । ते दिल्लीपतिप्रेषिताः वाजिसादिनिचयाः

३८ "०यमवुमवुनि" पा० भे० । ३९ "०वर्गाः" पा० भे० । ४० "०पोनि०" पा० भे०

भूपाधिपः स्वगिरिदुर्गमुपेत्य युक्तः
कैश्चित्पदातिभिरथो जननीं प्रणम्य ॥
तुष्टः सुरद्रुम इव व्यतरद्धनादि
वस्त्राणि भूषणगणान् द्विजदेवताभ्यः ॥ ९० ॥
वीरो निजं जनपदं नृपतिः स रक्षं-
स्तस्थौ चिरं गिरिवरे सहितः प्रवीरैः ॥
कालः कलावपि तृतीययुगेन तुल्य-
स्तत्राभवन्निवसतां सततं जनानां [1] ॥ ९१ ॥
राजदुर्गेऽथ सप्तारे वसन् रेवातटावधि
प्रजा अपालयद्राजा पिता पुत्रानिवौरसान् ॥ ९२ ॥
आनंदनामवर्षे रसनवशरभूमिते शके याते
अभिषिच्य राजदुर्गे सिंहासनगं नृपं द्विजश्चक्रे ॥ ९३ ॥

बहुधा बहुप्रकारेण विमृश्य राजानं संबोध्य दिल्लीपतिं प्रतिसमेत्य नृपः शिवः न नास्ति हाति निश्चये इति ऊचुः । तदा यवनपः अतिभयाभिभूतः सन् रात्रंदिवं अहोरात्रं । अचतुरेत्यादिना निपातः । भूपं शिवं हृदि विचिंतयति स्म । लक्षद्वयमितैर्वाजिसादिभिरनुगतोऽपि यतो न दृष्टोऽसावतः अस्यामेव राजधान्यां क्वचिद्गूढः स्थितः सन् रात्रावागत्य मां हनिष्यतीति चिंतातुरोभूदित्यर्थः ॥ ८९ ॥

भूप इति । अतो अनंतरं कैश्चित् पदातिभिर्युक्तः भूपाधिपः सः शिवः गिरिदुर्गं उपेत्य जननीं मातरं प्रणम्य तुष्टः सन् । यवनप्रतिबंधान्मुक्तत्वादिति भावः । सुरद्रुम इव कल्पद्रुम इव इच्छितमित्यर्थः । धनादि आदिशब्देन धान्यादीनां संग्रहः । वस्त्राणि भूषणगणान् द्विजा एव देवताः ताभ्यः । यद्वा द्विजाश्च देवताश्च द्विजदेवताः ताभ्यः देवताः अत्र देवालयस्थाः प्रतिमा ग्राह्याः । व्यतरत् दत्तवान् ॥ ९० ॥

वीर इति । वीरः अत एव प्रवीरैः सहितः सः नृपतिः निजं स्वकीयं जनपदं दक्षिणदेशं रक्षन् सन् गिरिवरे राजदुर्गे चिरं तस्थौ । कलावपि कलियुगेऽपि तत्र दक्षिणदेशे निवसतां जनानां कालः तृतीययुगतुल्यः द्वापरेण समः अभवत् । सर्वेऽपि आनंदयुता आसन् इति भावः ॥ ९१ ॥

राजेति । राजा राजदुर्गे अथ सप्तारे वसन् सन् प्रजाः पिता औरसान् पुत्रानिव नर्मदायाः तटं अवधिः यथा स्यात्तथा अपालयत् पालितवान् ॥ ९२ ॥

आनंद इति । द्विजः गागाभट्टः रसाः षट् नव प्रसिद्धाः शराः पंच भूरेका एभिर्मिते शके १५९६ याते प्राप्ते । वर्तमाने क्तः । आनंदनामवर्षे राजदुर्गे नृपं अभिषिच्य राज्याभिषेकं कृत्वा सिंहासनगं सिंहासनस्थं चक्रे कृतवान् । अत्रेदं

[1] "प्रजानां" पा० भे० ।

द्वौ पुत्रावस्य जज्ञाते ज्येष्ठः शंभुर्नृपोत्तमः
कनीयानभवद्योऽसौ राजाराम इतीरितः ॥ ९४ ॥
वारणाया उत्तरस्या दिशो राज्यमदात्प्रभुः
शंभवे दक्षिणस्यास्तु राजारामाय दत्तवान् ॥ ९५ ॥
यौवराज्यं ददौ राजा विद्वद्वाजसनेयिने
द्विजाय देवीभक्ताय दयादिगुणशालिने ॥ ९६ ॥
अष्टावपि प्रधानान्स[42] चक्रे कार्यधुरंधरान्
आज्ञापरान्वीरवरान्दयालून्विजितेंद्रियान् ॥ ९७ ॥
शिवभूपस्य दायादो नागपूराधिपोऽभवत्
वंगान् विदर्भान् प्राच्यांश्च पालयन्नवसत्सुखम् ॥ ९८ ॥

बोध्यं । गागाभट्टः शिवं उक्तवान् उदयपुरस्थितक्षत्रियाणामेकः क्षत्रियो दक्षिणं देशं आगतवान् तत्कुलोत्पन्नस्त्वमिति क्षत्रियोऽसि क्षत्रियधर्मांस्त्यक्त्वा शूद्रधर्मानाचरसि अतः प्रायश्चित्तं दत्त्वा त्वां पुनः क्षत्रियं करिष्यामीत्युक्त्वा प्रायश्चित्तं दत्त्वा अभिषिच्य सिंहासनमध्यवेशयत् छत्रचामरादि च दत्तवान् । मया तु शिवकुलोत्पन्नानामाधुनिकानां राज्ञां शूद्रधर्मान् विलोक्य शूद्रः सन् त्रिपदीं जजापेति पूर्वमुक्तमित्यविरोधः ॥ ९३ ॥

द्वाविति । अस्य शिवभूपस्य द्वौ पुत्रौ जज्ञाते बभुवतुः तावाह । नृपोत्तमः राजश्रेष्ठः अतिशयेन प्रशस्यः इति ज्येष्ठः पुत्रः शंभुः आसीत् इति शेषः । प्रशस्यशब्दादिष्ठनि ज्यादेशः । यः अतिशयेन अल्पः इति कनीयान् कनिष्ठः पुत्रः । अल्पशब्दादीयसुनि कनादेशः । अभवत् सः असौ राजाराम इति ईरितः उक्तः ॥ ९४ ॥

वारणाया इति । प्रभुः निग्रहानुग्रहसमर्थः सः शिवः वारणायाः वारणाख्यायाः नद्याः उत्तरस्याः दिशः राज्यं शंभवे ज्येष्ठाय अदात् तस्य ज्येष्ठत्वात् राज्यस्यापि महत्त्वादिति भावः । वारणायाः दक्षिणस्याः दिशस्तु राज्यं कनिष्ठाय राजारामाय दत्तवान् ॥ ९५ ॥

यौवराज्यमिति । राजा शिवः युवा चासौ राजा च युवराजः तस्य भावः यौवराज्यं युवराजत्वं । ब्राह्मणादित्वात् ष्यञ् । विद्वांश्चासौ वाजसनेयी च तस्मै विद्वद्वाजसनेयिने देवीभक्ताय दयादिगुणशालिने द्विजाय ब्राह्मणाय ददौ ॥ ९६ ॥

अष्टाविति । सः कार्यधुरंधरान् आज्ञायां परान् आसक्तान्नतु प्रतिकूलान् वीरेषु वरान् श्रेष्ठान् दयालून् दयावतः । प्रजानां अपीडकान् विजितेंद्रियान् अष्टौ अष्टसंख्यान् प्रधानान् अमात्यसचिवादीन् । प्रधानशब्दस्य संज्ञापरत्वात् पुंस्त्वं । चक्रे कृतवान् ॥ ९७ ॥

[42] "प्रधानानाम" पा० भे० ।

सिंहासनगतो राजा वर्षषट्कमपालयत्
प्रजा अथ दिवं यातो मधौ पंचदशीदिने ॥ ९९ ॥

॥ इति श्रीशिवकाव्ये पुरुषोत्तमकविकृते पञ्चमश्चमत्कारः ॥

---

दिवमिते जनके जगतीपतिर्जनितहर्षभरः सततं नृषु ॥
मदनदेवसमानवपुः प्रभुः प्रथितकीर्तिरपालयदुर्वराम् ॥ १ ॥
अवति शंभुनृपे न धनागमो न जलदो जलदा न वसुन्धरा ॥
फलति धान्यचयो न च मद्गृहे न मनसापि जगाद जनस्त्विदम् ॥ २ ॥
द्विजकुलं सकलं सकलं सदा परिररक्ष निरक्षरपोषकः ॥
वितरणं तरणिप्रभवस्यतद्-वितरणेन निजेन जिगाय सः ॥ ३ ॥

शिवेति । शिवभूपस्य दायं अत्तीति दायादः । मूलविभुज्यादित्वात्कः । नागपूरस्य अधिपः स्वामी अभवत् । शिवभूपेनैव स्थापित इत्यर्थः । सः वंगान् वंगसंज्ञान् विदर्भान् विदर्भसंज्ञान् प्राच्यांश्च देशान् । द्युप्रागपागुदक् प्रतीचो यत् इति यत्प्रत्ययः । पालयन् सन् सुखं यथा तथा अवसत् स्थितवान् ॥ ९८ ॥

सिंहासन इति । सिंहासनं गतः सिंहासनगतः सिंहासनस्थितः । राजा वर्षाणां षट्कं षट् वर्षाणि प्रजाः अपालयत् । अथ मधौ चैत्रे पंचदशीदिने पौर्णमास्यां दिवं स्वर्गं यातः गतः शकस्तु सिंहासनोपवेशनशकात् पश्चात् परः सप्तमो विज्ञेयः ॥ ९९ ॥ इति श्री शिवकाव्यव्याख्यायां काव्यप्रकाशिकायां स्वयं कृतायां पंचमश्चमत्कारः ॥

अथ शिवपुत्रस्य शंभुनृपस्य चरित्रं विवक्षुरादौ तं दशभिः श्लोकैर्वर्णयति । दिवमिति । नृषु मनुष्येषु सततं निरंतरं जनितः हर्षस्य भरो येन तथोक्तः । मदनदेवेन समानं वपुर्यस्य प्रभुः निग्रहानुग्रहसमर्थः प्रथिता कीर्तिर्यस्य जगत्याः पतिः जगतीपतिः शंभुः जनके शिवे दिवं स्वर्गं इते गते सति उर्वरां भूमिं । उर्वरा सर्वसस्याढ्येत्यमरः । अत्र सर्वापि भूमिः सर्वसस्याढ्या नान्येति ज्ञापनार्थं भूविशेषग्रहणं । अपालयत् ॥ १ ॥

अवतीति । जनः लोकः शंभुनृपे अवति सति रक्षति सति । धनस्य आगमः प्राप्तिर्न । जलदो मेघः जलं ददातीति जलदः न । वसुंधरा भूमिः न फलति अतः मद्गृहे धान्यचयः न । इदं पूर्वोक्तं सर्वं मनसापि न जगाद । सर्वं धनादि गृहे गृहे परिपूर्णमासीदित्यर्थः ॥ २ ॥

द्विजकुलमिति । सः कलाभिः सहितं सकलं गुणयुक्तं द्विजानां ब्राह्मणानां कुलं परिररक्ष रक्षितवान् निरक्षराणां अविदुषां पोषकः निरक्षरपोषकः आसीदितिशेषः । विदुषो ब्राह्मणानीप्सितं ददौ अविदुषः अन्नवस्त्रमात्रं ददावित्यर्थः । तरणेः सूर्यात्

**न विधवा विधवाऽऽस नितंबिनी न च ममार कुमारनरः क्वचित् ॥**
**नहि धनं निधनं भविता ममेत्यवति नैवमुवाच नृपे जनः ॥ ४ ॥**
**परिजनः शिवसूनुमसूनिव प्रियतमान्स्वमवेक्ष्य रिरक्षिषुं ॥**
**शिवकृतं परिपालनमात्मनः किमपि केऽपि कदापि न सस्मरुः ॥ ५ ॥**
**प्रकृतयः कृतयोऽस्य महत्तमा इति विलोक्य महामुदमाययुः ॥**
**बुधजना अथ तस्य गुणज्ञतां समधिगम्य ननन्दुरुपर्यपि ॥ ६ ॥**

प्रभवः उत्पन्नः तरणिप्रभवः कर्णः तस्य तत् प्रसिद्धं वितरणं दानं निजेन वितरेण दानेन जिगाय । कर्णापेक्षया अधिकमस्य दातृत्वमासीदित्यर्थः ॥ ३ ॥

नेति । नृपे शिवभूपे अवति सति रक्षति सति विधवा गतभर्तृका नितंबिनी स्त्री विशिष्टाः धवाः यस्याः सा विधवा व्यभिचारिणी नास न बभूव । यद्वा नितंबिनी स्त्री विधवा गतभर्तृका नास न बभूव । किंच नितंबिनी सभर्तृका स्त्री विधवा व्यभिचारिणी नास न बभूव । असगतिदीप्त्यादानेष्विति भौवादिकस्येदं रूपं अ-लुग्विकरणत्वादस्तेर्भूभावोन । क्वचित्स्थले कुमारनरः बालपुरुषः न ममार न म्रियते स्म । म्रियतेर्लुङ्लिङोश्चेति तङ् नात्र । तथा जनः धनं नास्ति हि निश्च-येन मम निधनं मृतिर्भविता अन्नाभावादित्यर्थः एवं नोवाच । सर्वस्यापि गृहे धनं पूर्णमासीदित्यर्थः । नृपे अवतीति सर्वत्र संबंधः ॥ ४ ॥

परिजन इति । परिजनः आश्रितजनः शिवसूनुं शंभुं आत्मनः स्वान् । न लोके-ति निषेधात् षष्ठी न । आत्मन इदं आवर्त्यते तच्च प्रथमं द्वितीयांतं अग्रे षष्ठ्यंतं । आत्मनः स्वस्य प्रियतमान् असूनिव रक्षितुं इच्छति रिरक्षिषति रिरक्षिषतीति रिरक्षिषुः तं । रक्षतेः सन्नंतादुप्रत्ययः । समवलोक्य शिवेन कृतं शिवकृतं आत्मनः स्वस्य परिपालनं किमपि किंचिदपि कदापि कस्मिन्नपि काले न सस्मार । इति वचनव्यत्ययेन व्या-ख्येयं । आस्तां परिजनस्य कथा । केऽपि न सस्मरुः शिवकृतं परिपालनमित्यादि सर्वं पुनः योज्यं ॥ ५ ॥

प्रकृतय इति । प्रकृतयः प्रधानसंज्ञा राजकार्यकराः । प्रधानं प्रकृतिः स्त्रियामि-त्यमरः । अस्य शंभोः कृतयः क्रियाः अतिशयेन महत्यः इति महत्तमाः लोकोत्तराः । तसिलादिष्वाकृत्वसुच इति पुंवद्भावः । इति विलोक्य महामुदं महांतं हर्षं । मुत्प्रीतिः प्रमदो हर्ष इत्यमरः । आन्महत इत्यादिना महत आत्वं । आययुः प्रापुः । अथ अनन्तरं बुधजनाः पंडितजनाः तस्य शंभुनृपस्य गुणज्ञतां समधिगम्य ननंदुः । उपरि ऊर्ध्वं वर्तमाना इति शेषः । बुधजनाः देवजना अपि तस्य गुणज्ञतां समधिगम्य ननंदुः यथाशास्त्रं राज्यं करिष्यतीति तृप्ता इत्यर्थः ॥ ६ ॥

परिणयं नयविद्विदधे निजं व्रतनिबन्धनपूर्वमपूर्ववत् ॥
युवतिरप्यसकृत्पतिदेवता तमनुकूलमपूजयदीश्वरम् ॥ ७ ॥
सलिलजातदलायतलोचनो नववयाः पृथुदीर्घभुजोऽसलः ॥
कमलकोमलपादतलो नृपः[1] कनकगौरतनुर्विततालकः[2][3] ॥ ८ ॥
पतिपरोत्तमदारमनस्यपि स्मरसुखं जनयन्निजदर्शनात् ॥
विजयते जितशत्रुपरंपरो हरिहरार्चनलब्धमनोरथः ॥ ९ ॥
रण[4]समागतवीरवरानसौ जयति शूरनराधिपपालकः ॥
किमधुनेह विधेयमितिप्रभु-र्हृदि विचिन्तयति स्म नृपाधिपः ॥१०॥

परिणयमिति । नयं नीतिं वेत्तीति नयवित् सः शंभुः निजं स्वकीयं मौंजीबंधनपूर्वं यस्य तं परिणयं विवाहं मौंजीपूर्वकं विवाहमित्यर्थः । पूर्वैः पूर्वजैः तुल्यं पूर्ववत् न पूर्ववत् अपूर्ववत् अतिसंपद्भरयुक्तत्वात् पूर्वजापेक्षया आधिक्येनेति भावः। विदधे चक्रे । पतिदेवता पतिव्रता युवतिरपि स्त्री अपि अनुकूलं ईश्वरं ईश्वरतुल्येति भावः तं शंभुं असकृत् निरंतरं अपूजयत् ॥ ७ ॥

अथ युग्मेन तद्रूपं वर्णयति। सलिलेति। सलिलं जलं तत्र जातं सलिलजातं कमलं तस्य दलं पत्रं तद्वत् आयते विस्तृते लोचने यस्येति तथोक्तः । नवं तरुणं वयो यस्येति नववयाः। पृथू स्थूलौ दीर्घौ भुजौ यस्येति तथोक्तः । अंसलः बलवान् । वत्सांसाभ्यां कामबले इति लच्प्रत्ययः । कमले इव कोमले पादतले यस्य तथोक्तः । कनकमिव गौरा तनुर्यस्य । विमलाः स्वच्छाः अलकाः यस्य तथोक्तः । नृपः विजयते इत्युत्तरेणान्वयः ॥ ८ ॥

पतिपरेति । पतिरेवपरः श्रेष्ठः येषां ते पतिपरा अत एव उत्तमा ये दाराः स्त्रियः। दाराः पुंसि च भूम्न्येवेत्यमरः । तेषामपि मनसि निजस्य स्वस्य दर्शनात्स्मरस्य कामस्य सुखं जनयन् उत्पादयन् अतिसुंदर इत्यर्थः । जिता शत्रुपरंपरा येन सः। हरिहरयोः विष्णुशिवयोः अर्चनेन लब्धा मनोरथाः येन सः नृपः विजयते सर्वोत्कर्षेण वर्तते । वर्तमानसामीप्ये वर्तमानद्वेति लट् ॥ ९ ॥

रणेति । नराणां मांडलिकानां भूपानां अधिपः सार्वभौमः दिल्लीपतिः इति हृदि विचिंतयति स्म । इति किं । शूराः ये नराधिपाः सेनापतयः तेषां पालकः । अनेन इत्यर्थः । असौ शंभुनृपः रणे समागताः ये वीरवरास्तान् जयति अभिभवति । जिर्नि अभिभवे इत्यस्यरूपं न तु जि जये इत्यस्य तस्य अकर्मकत्वात् । अधुना इदानीं इह अस्मिन् शत्रौ विषये किं विधेयं कर्तव्यं ॥ १० ॥

---

१ 'समरवृकन' पा० भे० । २ 'पादसमोदर' पा० भे० । ३ 'विमलालकः' पा० भे० । ४ 'युधि' पा० भे० ।

शक्रप्रस्थाधिनाथः शिवनृपतिसुतं शक्रतुल्यं विदित्वा
वीरानाहूय सर्वान् व्रजत शिवसुतं सङ्गरे सर्वथा तम् ॥
जित्वा धृत्वाऽथ बद्ध्वा नयत मम समीपप्रदेशं प्रयत्नाद्-
इत्यूचे वाक्यमेतेऽप्यवनतशिरसः प्रस्थिता अंतकाशाम्* ॥ ११ ॥
ये ये वीराः खड्गहस्ताः प्रवृत्ता योद्धुं तांस्तानिन्द्रलोकं निनाय ॥
ये ये वीराः पृष्ठतः संप्रजग्मुः प्रस्थं तांस्तानिन्द्रपूर्वं स निन्ये ॥१२॥
इन्द्रप्रस्थनिवासास्ते जग्मुरिन्द्रनिवेशनम् ॥
श्रुत्वा तुतोष यवनः शुशोच च ततः परम् ॥ १३ ॥
औरंगजबो निजपुरस्थितसर्वलोकं
भक्तं हरस्य विनिवेदयति स्म दूतैः ॥

शक्रेति । शक्रप्रस्थस्य इंद्रप्रस्थस्य अधिनाथः सार्वभौमः शिवनृपतिसुतं शक्रतुल्यं इंद्रतुल्यं विदित्वा ज्ञात्वा सर्वान् वीरान् आहूय शिवसुतं शंभुं व्रजत गच्छत संगरे संग्रामे सर्वथा सर्वप्रकारेण तं शंभुं जित्वा अभिभूय धृत्वा अथ बध्वा मम समीपप्रदेशं प्रयत्नात् आनयत इति वाक्यं ऊचे । एते वीरा अपि अवनतशिरसः संतः कृतप्रणामा इत्यर्थः । अंतकस्य यमस्य आशां दिशं दक्षिणां दिशं प्रस्थिताः । शंभुनृपाधिष्ठितामित्यर्थः । अपुनरावर्तनाय्यमदिक्प्रस्थानमेव चक्रुरिति वास्तवोर्थः ॥ ११ ॥

ये ये इति । सः ये ये वीराः खड्गानि हस्तेषु येषां ते खड्गहस्ताः संतः योद्धुं प्रवृत्ताः तांस्तान् इंद्रलोकं स्वर्गं निनाय अगमयत् । ये ये वीराः पृष्ठतः पृष्ठदेशं संप्रजग्मुः रणभूमेर्भयादपसृता इत्यर्थः तान् तान् इंद्रः इंद्रशब्दः पूर्वः यस्य तत् प्रस्थं इंद्रप्रस्थमित्यर्थः । निन्ये नीतवान् । अतिभीतत्वान्मध्ये नैव तस्थुरित्यर्थः ॥ १२ ॥

इंद्रेति । इंद्रप्रस्थनिवासाः ते वीराः इंद्रनिवेशनं जग्मुः इति वाक्यं श्रुत्वा तुतोष ततः परं तदनंतरं शुशोच च । इंद्रस्य इंद्रशब्दस्य निवेशनं स्थितिर्यस्मिन् तत् इंद्रनिवेशनं इंद्रप्रस्थं जग्मुः ययुः । ये गत्यर्थास्तेप्राप्त्यर्था इति धात्वर्थविचारपूर्वकं वाक्यार्थं कृत्वा स्वकीया वीराः सर्वे कुशलिन इंद्रप्रस्थमागता इति बुद्ध्या तुतोष । ततः परं वार्ताहारिभिः निविशंते यस्मिंने निवेशनं इंद्रस्य निवेशनं इंद्रनिवेशनं इंद्रपुरं । कृत्यल्युटो बहुलमितिल्युट् । जग्मुः । समरे प्राणांस्त्यक्त्वा स्वर्गं ययुरिति पदार्थपूर्वकं वाक्यार्थं विधाय बोधितः सन् शोकं चकारेतिभावः । यद्वा इंद्रनिवेशनं जग्मुरिति वाक्यं श्रुत्वा स्वर्गं जग्मुरिति शीघ्रोपस्थितिकं अर्थमादाय मदीयवीराः संग्रामे पराक्रमं कृत्वा स्वकीयकीर्तिं विस्तार्य्य प्राणांस्त्यक्त्वा स्वर्गं गताः न भयादपसृताः । जयपराजयावीश्वराधीनाविति तुतोष । एतादृशाः वीराः मदर्थे स्त्रीपुत्रादिकानपहाय रणे मृता इति दुःखेन शुशोचेति भावः ॥ १३ ॥

औरंगेति । औरंगजबसंज्ञः सार्वभौमः निजपुरस्थितं हरस्य सांबस्य भक्तं

* " पितृपाशाम् " इति मूले वर्तते

शंभोः शिवादपरमेव गृहाण नाम
यद्यस्ति ते हरनुतौ परमोऽभिलाषः ॥ १४ ॥
तन्नामभल्लमुखदीर्णतरं मदीयम्
स्वांतं प्रपीडयति मां यदि कश्चन स्यात् ॥
दुष्टस्य तस्य मतिभेदकरो द्विजो वा
शूद्रोऽपि चेत्स मम वल्लभतामुपेयात् ॥ १५ ॥
ग्रामान्गजान्रथवरांस्तुरगान्धनं यो
दास्यामि मद्रिपुममुं वशमानयेत ॥
सत्यं ब्रवीमि किमतः परमस्य देयम्
राज्यं सदेहमखिलं विनिवेदितं मे ॥ १६ ॥
चिन्ताज्वरेण शिथिलीकृतसर्वगात्रो
निद्राविहीननयनो भयवार्धिमग्नः ॥

सर्वलोकं दूतैः करणैः इदं विनिवेदयति स्म आज्ञापयामास । इदं किं । हे हरभक्तेति शेषः । ते तव हरस्य सांबस्य नुतौ परमः अभिलाषः अस्ति चेत्तर्हि शंभोः शंभुरित्यानुपूर्वीकात् च परं शिव इत्यानुपूर्वीकात् हरनाम्नः अन्यत् नाम सांबेत्यादि गृहाण ॥ १४ ॥

शंभुशिवाभिधाऽग्रहणे हेतुमाह तन्नामेति । तेच ते नामनी च तन्नामनी ते एव भल्लौ बाणविशेषौ तयोः मुखं तेन दीर्णतरं तयोक्त मदीयं स्वांतं हृदयं । स्वांतं हृन्मानसं मन इत्यमरः । मां प्रपीडयति व्यथयति अतस्तन्नाम न ग्राह्यमितिभावः । यदि कश्चन कश्चित् द्विजः ब्राह्मणः क्षत्रियः वैश्यः वा शूद्रोऽपि दुष्टस्य तस्य शंभोः करोतीतिकरः । पंचाद्यच् । मतिभेदस्य करः स्यात् तर्हि सः पूर्वोक्तः मम वल्लभतां प्रियत्वं उपेयात् प्राप्नुयात् ॥ १५ ॥

लुब्धस्य दानं विना वशीकरणाभावाद्दानं प्रतिजानीते । ग्रामानिति । यः वशं आधीनं अमुं मद्रिपुं आनयेत मत्समीपे इतिशेषः । यद्वा यः अमुं मद्रिपुं वशं आनयेत आधीनं कुर्यात् तस्मै इतिशेषः । ग्रामान् गजान् रथवरान् तुरगान् धनं च दास्यामि । पुनरप्याह अस्य मत्कार्यकर्तुर्मे राज्यं देहेन सहितं सदेहं यथा स्यात्तथा । यद्वा सदेहमिति राज्यविशेषणं विनिवेदितं अर्पितं । सकलराज्यसहितोऽहं तदधीनोस्मीत्यर्थः । नेदं भाषणं प्रतारकमित्याह । सत्यं ब्रवीमि न मिथ्येत्यर्थः । अतः परं तस्य किं देयमस्ति न किंचिदित्यर्थः ॥ १६ ॥

चिंतेति । चिंतायाः ज्वरः तेन । यद्वा चिंतैवज्वरः तेन कर्त्रा शिथिलीकृतानि सर्वगात्राणि यस्य तथोक्तः अतएव निद्रया विहीने नयने यस्य तथोक्तः यतः भयमेव वार्धिः समुद्रः तस्मिन् निमग्नः स यवनः खादन् अन्नं जक्षत व्रजन् गच्छन्

खादन्व्रजन्स च पिबन्निवसन् विशंश्च
शंभुं मनस्यविरतं यवनो जजाप ॥ १७ ॥
तोयं बिना सरसिजं रहिता प्रियेण
योषा गदेन च तनुर्मिहिरो दिनान्ते ॥
गेही कुटुम्बसहितो रहितो धनेन
दिल्लीश्वरोऽपि स बभूव यथा तथासौ ॥ १८ ॥
चिन्ता चितेते यमले भगिन्यौ मन्ये द्वयोर्यत्खलु वर्णसाम्यम् ॥
सालङ्कृतेः श्रेष्ठतमा बभूव चिन्ता न चान्या मृतदाहहेतुः ॥ १९ ॥
नृपः प्रजापालनकृद्यशस्वी विदीर्णवीरो भविता कथं मे ॥
वश्यः सदेत्थं प्रविचारयन्सन् कलिः कृशोऽभूद्यवनाधिपश्च ॥ २० ॥
देवीभक्तो गौडदेशीयविप्रः कञ्जी नाम्ना मन्त्रविद्भूतराजः ॥
श्रुत्वा वाक्यं सार्वभौमस्य लोकाद्दिल्लीं प्रायाच्छिष्यसंघैरुपेतः ॥ २१ ॥

उदकमद्यादि पिबन् निवसन् विशन् गृहादि शंभुं हरं मनसि अविरतं जजाप। यवनः शंभुं हरं जजापेतिविरोधः। शंभुं राजानमितिपरिहारः॥ १७॥

तोयमिति। सरसि जातं सरसिजं कमलं। सप्तम्यांजनेर्डः। तत्पुरुषे कृति बहुलमित्यलुक्। तोयं उदकं विना। प्रियेण भर्त्रा विरहिता योषा। तनुः शरीरं गदेन रोगेण। मिहिरः सूर्यः। मिहिरारुणपूषणा इत्यमरः। दिनांते सायंकाले। कुटुंबसहितः धनेन रहितः गेही गृहवान् यथा भवति तथा असौ दिल्लीश्वरोपि बभूव दीनवद्दशो इत्यर्थः॥ १८॥

कविराह। चिंतेति। चिंता उद्वेगः चिता प्रसिद्धा एते द्वे यमले सहजे भगिन्यौ इत्यहं मन्ये। यत् तद्द्वयोः चिंताचितयोः वर्णयोः अक्षरयोः अन्यत्रवर्णयोः देहगतकांत्योः साम्यं समत्वं अस्तीतिशेषः। द्वयोर्मध्ये ज्येष्ठत्वं कस्या इत्यत आह। चिंता अलं अत्यर्थं कृतेः करणात् सजीवदाहरूपायाः क्रियाया इत्यर्थः। अतिशयेन श्रेष्ठा इति श्रेष्ठतमा बभूव। यद्वा अलंकृतेः अलंकारात् मूर्धगताद्बिंदुरूपात् हेतोः श्रेष्ठतमा। अन्या चिता श्रेष्ठतमा न यतः मृतस्य प्रेतस्य दाहे हेतुः॥ १९॥

नृपइति। कलिः यवनाधिपश्च प्रजानां पालनं करोतीति प्रजापालनकृत् अतः यशस्वी कीर्तिमान्। अस्मायामेधास्रजो विनिरिति विनिः। विदीर्णाः वीराः येन सः तथोक्तः सः नृपः शिवः मे वशः आधीनः कथं भविता इत्थं सदा सर्वकालं प्रविचारयन् कलिः यवनाधिपश्च कृशः अभूत्॥ २०॥

देवीभक्त इति। देव्याः भक्तः देवीभक्तः। कलौ चंडीविनायकाविति स्मरणात्क्षिप्रं

५ 'भुवं' पा॰ भे॰। ६ '॰तंहिजयोजजाप' पा॰ भे॰ ७ 'रामाभिधोऽपि' पा॰ भे॰ ८ 'राजा' पा॰ भे॰। ९ '॰कात्प्रायाद्दिल्लीशि॰' '॰काद्दिल्लीमागाच्छिष्य॰' इति वा पा॰ भे॰।

स सार्वभौमं प्रति वाक्यमाह युद्धं विना तं स्ववशं विधास्ये ॥
चिन्ता विधेयाल्पतरापि नात्र पीयूषसत्त्वे मृतिभीर्भवेत्किम् ॥ २२ ॥
किमस्त्यगाधं त्वयि विप्रवर्य याहि त्वमद्यैव स शंभुभूपः ॥
वश्यो विधेयो मम शत्रुरित्थं दिल्लीपतिस्तं वचनं बभाषे ॥ २३ ॥
व्रजन्स कुंभं जलपूर्णमादौ ददर्श विप्रः कलियोजितोऽसौ ॥
मेने जितं राजवरं जगाम समारदुर्गं प्रति हृष्टचित्तः ॥ २४ ॥
द्विजवरः समुपेत्य निवेशनं नरपतेरुपनीतमहोपदः ॥
सुखमुवास मनःप्रियसत्कथाः स कथयन्सदसि प्रियवादिनः ॥ २५ ॥

कार्यकरत्वं सूचितं । मन्त्रान् वेत्तीति मन्त्रवित् धूर्तानां राजेति धूर्तराजः । राजाहः सखिभ्यष्टच् । नाम्ना कब्जी कब्जीसंज्ञः गौडदेशे भवः गौडदेशीयः । वृद्धाच्छः । सचासौ विप्रश्च गौडदेशीयविप्रः सर्वस्याः भूमेः ईश्वरः सार्वभौमः तस्य सार्वभौमस्य यवनाधिपस्य ईप्सितं दाने शक्तस्येति भावः । वाक्यं ग्रामादिदानरूपं लोकात् श्रुत्वा शिष्यसंघैः उपेतः सन् दिल्लीं प्रायात् आगतवान् ॥ २१ ॥

स इति । सः कब्जी सार्वभौमं प्रति इति वाक्यं आह वदति । ब्रुवो लटि तिपि णलि आहादेशः । इति किं । युद्धं विना तं शंभुं स्ववशं स्वाधीनं विधास्ये करिष्ये । अत्र रिपुविषये अल्पतरापि अत्यल्पापि । तसिलादिष्वाकृत्वसुच इतिपुंवद्भावः । चिंता न विधेया न कार्या यतः पीयूषस्य अमृतस्य सत्वे मृतिभीः मरणभीतिः भवेत् किं । नेत्यर्थः ॥ २२ ॥

किमिति । विप्रश्रेष्ठ त्वयि सति किं अगाधं दुस्तरं किं न किंचिदित्यर्थः । अतः त्वं अद्यैव याहि गच्छ न तु विलंबेनेति भावः । मम शत्रुः सः शंभुभूपः वशः आधीनः विधेयः इति दिल्लीपतिः तं वचनं बभाषे उक्तवान् ॥ २३ ॥

व्रजन्निति । कलिना योजितः प्रेरितः असौ कब्जी व्रजन् सन् आदौ प्रथममेव निर्गमक्षणे इति यावत् । जलेन पूर्णं कुंभं ददर्श । असौ कब्जी राजवरं जितं मेने । शुभशकुनस्य दर्शनादिति भावः । तदुक्तं मुहूर्तमार्तंडे । वस्त्रालंकरणानि पूर्णकलशस्तूर्यध्वनिः पुत्रवान् इति । हृष्टं चित्तं यस्य स हृष्टचित्तः सन् समारदुर्गं प्रति जगाम ॥ २४ ॥

द्विजवर इति । नरपतेः शंभुभूपस्य निवेशनं गृहं उपेत्य गत्वा उपनीता प्रत्यर्पिता महती उपदा उपायनं येन तथोक्तः । उपायनमुपग्राह्यमुपहारस्तथोपदेत्यमरः । द्विजवरः सः कब्जी प्रियं वदतीति प्रियवादी तस्य भूपस्य । सुप्यजातौणिनिस्ताच्छील्ये इति णिनिः । सदसि सभायां मनसः प्रियाः अतएव सतीः उत्तमाः कथाः कथयन्

१० '०याकिमपि स्वयाम' पा० भे० । ११ '०थद्विजदेशदेवे' पा० भे० । १२ 'गंतव्यम०' पा० भे० । १३ '०भुराजः' पा० भे० ।

स दिवसैर्दशभिर्द्विगुणैरमुं वशगतं विदधे कलिकार्यकृत् ॥
मणिमहौषधिमन्त्रधरो नरः स्ववशमातनुते फणिनं यथा ॥ २६ ॥
वदनतो वचनं निजगाद यद्द्विजपतिः शिरसा तदुवाह सः ॥
निज पुरातनमन्त्रिगणे चिराद्विगतबुद्धिरभूद्गतसौहृदः ॥ २७ ॥
परिजना अपि ते बहुधा नृपं विविधनीतिपुरःसरमब्रुवन् ॥
नरपतेर्ज्वरितस्य सितेवतत् कटुतरं प्रबभूव हितं वचः ॥ २८ ॥
स सकलान्महितान्स्वहितान्भटान् कुलपरंपरयाऽथ समागतान् ॥
अगमयद्गतवेतनकान्गृहान् निजनिजान्प्रियकृद्रिपुमन्त्रिणः ॥ २९ ॥

सन् सुखं उवास वसति स्म । द्रुतविलंबितं वृत्तं । द्रुतविलंबितमाह नभौभराविति लक्षणात् ॥ २५ ॥

स इति । कलिकार्यकृत् सः द्वौ गुणौ आवृत्ती येषां ते द्विगुणास्तैर्द्विगुणैः । गुणस्त्वावृत्तिशब्दादि चेंद्रियामुख्यतंतुष्विति विश्वः । दशभिः विंशतिदिनैरित्यर्थः । अमुं शंभुं वशं आधीनं तया विदधे । तया कथं यथा धरतीतिधरः । पचाद्यच् । प्रणयश्च महोषधयश्च मन्त्राश्च तेषां धरः धर्ता फणिनं सर्पं स्वस्य वशः स्ववशः तं आतनुते कुरुते ॥ २६ ॥

वदनत इति । द्विजवरः कब्जी वदनेनेति वदनतः। सार्वविभक्तिकस्तसिल् । यद्वचनं निजगाद सः शंभुः तद्वचनं शिरसा उवाह वहति स्म । वचि स्वपीत्यादिना अभ्यासस्य संप्रसारणं । विगता बुद्धिर्यस्य स विगतबुद्धिः भ्रांतबुद्धिः सः निजः स्वकीयः यः पुरा भवः पुरातनः प्राचीनः। सायं चिरमित्यादिना ट्युप्रत्यये तुडागमः तुटःप्रागनादेशः अनद्यतने लङिति निर्देशात् । मंत्रिगणस्तस्मिन् विषये गतं सौहृदं प्रेमा यस्य सः गतसौहृदः अभूत् ॥ २७ ॥

परिजना इति । ते तदीयाः परिजना अपि नृपं विविधा या नीतिः सा पुरःसरा यथा स्यात्तथा बहुधा बहुप्रकारेण अब्रुवन् अवोचन् । तद्धितं वचः नरपतेः शंभुनृपस्य ज्वरितस्य ज्वरवतः सितेव शर्करेव कटुतरं बभूव ॥ २८ ॥

स इति । रिपोः दिल्लीपतेः मंत्रिणः कब्जीनाम्नः प्रियं करोतीति प्रियकृत् सः शंभुः स्वस्य हितान् अतः महितान् पूजितान् यतः कुलपरंपरया समागतान् प्राप्तान् नतु नवीनानीति भावः । गतं दत्तं वेतनं येषां तान् भटान् वीरान् निजनिजान् गृहान् गृहाणि । गृहाःपुंसिचभूम्नेवेत्यमरः । अगमयत् गतिबुद्धीत्यादिना द्विकर्मकत्वं ॥ २९ ॥

---

१४ 'सहसा' पा० भे० १५ '०द्द्विजमं०' पा० भे० ।

**प्रतिनिधिप्रमुखा अपि मंत्रिणो निजगृहे हरिमेव समर्चयन् ॥**
**भवतु बुद्धिरमुष्य मनस्विनो रिपुविनाशकरीति निरन्तरम् ॥ ३० ॥**
**तटवतीतटगः सुदृढस्तरुर्जलजवैः सपदं शिथिलीकृतः ॥**
**पवनवेगमयं समवेक्षते इति स वेदयति स्म नगाधिपम् ॥ ३१ ॥**
**यवनपः सहितश्चतुरङ्गया पृतनयोत्तमवीरपुरःसरः ॥**
**शिवसुताश्रितदिक्पथमन्वगाद्विविधवाद्यजघोषविनन्दितः ॥ ३२ ॥**

प्रतिनिधीति । प्रतिनिधिः युवराजः प्रमुखो येषां ते प्रतिनिधिप्रमुखाः अपि मंत्रिणः निंदितं मनो यस्येति मनस्वी तस्य मनस्विनः दुर्वृत्तस्येत्यर्थः । अस्मायामेधास्त्रजो विनिरिति निंदायां विनिः । अमुष्य शंभुनृपस्य बुद्धिः रिपोः विनाशः तं करोतीति रिपुविनाशकरी भवतु इति हेतोः निजे गृहे हरिमेव निरंतरं समर्चयन् अपूजयन् ॥ ३० ॥

एवं शंभुभूपं वशं विधाय सार्वभौमविज्ञापनप्रकारमाह । तटवतीति । सः कञ्ची नृपाणां राज्ञां अधिपं स्वामिनं सार्वभौमं तटवती तटिनी नदीति यावत्तस्याः तटं तीरं तद्गच्छतीति तथोक्तः कृष्णातीरे वर्तमान इत्यर्थः । सुतरां दृढः बद्धमूल इत्यर्थः । जलस्य जवैः वेगैः पदैः मूलैः सहितं यथा स्यात्तथा सपदं समूलं शिथिलीकृतः अयं तरुर्वृक्षः पवनस्य वायोः वेगं समवेक्षते इच्छति । अविवक्षायां संधिर्न तदुक्तं कौमुद्यां दीक्षितैः । वाक्ये तु साविवक्षामपेक्षते इति । अत एव हे रोहिणि त्वमसि शीलवतीषु धन्या एनं निवारय पतिं सखि दुर्विनीतं इत्यादि प्रयोगाः संगच्छंते । इति अमुं प्रकारं वेदयति स्म ज्ञापयामास । लिटापदो लट् । अत्र अप्रस्तुतस्य तटिनीतीरगतस्य तरोः समूलशिथिलीकरणबोधेन प्रस्तुतस्य शंभुनृपस्य वशीकरणबोधनादप्रस्तुतप्रशंसालंकारः । तदुक्तं कुवलयानंदे चंद्रालोककारिकास्थं वचनं । अप्रस्तुतप्रशंसा स्यात्सा यत्र प्रस्तुताश्रया । एकः कृती शकुंतेषु योन्यच्छक्रान्न याचते ॥ ३१ ॥

अथ सार्वभौमस्य यानं त्रिभिराह । यवनपेति । चत्वारि अंगानि रथवाजिगजपदातिरूपाणि यस्यास्तया पृतनया सेनया सहितः । उत्तमाः ये वीराः ते पुरःसरा यस्य तथोक्तः । विविधाः अनेकप्रकाराः ये वाद्यजघोषाः वाद्योद्भवाः शब्दाः तैः विशेषेण नंदितः तोषितः । यवनान् पातीति यवनपः यवनाधिपः सार्वभौमः । आतोनुपसर्गे कः । शिवसुतेन शंभुना आश्रिता या दिक् दक्षिणदिक् तस्याः पंथा इति शिवसुताश्रितदिक्पथः तं । पुंवत्कर्मधारयइत्यादिना पुंवद्भावः । ऋक्पूरित्यादिना समासांतः । अन्वगात् अगमत् ॥ ३२ ॥

---

१६ 'समवेक्षते' पा० भे० ।

**ससलिलान्कलशान्पुर आगतान् पतिमतीर्युवतीर्जयसूचकान् ॥**
**अकलयच्छकुनान्विविधानसौ विविधदेशपगीतमहोदयः ॥ ३३ ॥**
**पथि नृपैरुपनीतमहार्हणो विविधदेशततीरयमत्यगात् ॥**
**सुरनदीप्रमुखा अपि निम्नगा यवनराट् स च भीमरथीमगात् ॥३४॥**
**यवनपाधिपतिं समुपागतं प्रथितभीमरथीतटवर्तिनि ॥**
**स हि तुलापुरनाम्नि पुरोत्तमे नृपमबोधयदाशु तदा द्विजः ॥ ३५ ॥**
**यवनपस्य गुणाननुवर्णयन् सदसि तत्तनुजा गुणवर्णने ॥**
**प्रवदृते नृपमानसहृद्द्विजस्तदनुगामिजने श्रवणोत्सुके ॥ ३६ ॥**

ससलिलानिति । विविधाः अनेके ये देशाः तान् पांति ते विविधदेशपाः राजानः तैर्गीतः स्तुतः महान् उदयो यस्य तथोक्तः । अनेन सार्वभौमत्वं स्वदेशपालकत्वं च सूचितं । सः सार्वभौमः पुरः अग्रे न तु दूरे आगतान् प्राप्तान् नतु बुध्या आनीतान् ससलिलान् सोदकान् नतु रिक्तान् कलशान् तद्रूपान् पतिमतीः सभर्तृकाः नतु विधवाः युवतीः तरुणीः नतुवृद्धाः तद्रूपान् जयस्य सूचकान् शकुनान् अकलयत् गणितवान् । अयं प्रथमः शकुनः अयं द्वितीयः इति गणनां चकारेत्यर्थः । लिंगसंख्या विभेदेपि विशेषणविशेष्यता । विभक्तिः पुनरेकैव विशेषणविशेष्ययोरिति विशेषणविशेष्यता ॥ ३३ ॥

पथीति । नृपैः राजभिः पथि मार्गे उपनीतं प्रत्यर्पितं महत् अर्हणं यस्मै तथोक्तः अयं सार्वभौमः विविधदेशानां ततीः परंपराः सुरनदीप्रमुखाः भागीरथीप्रमुखाः निम्नगाः अपि अत्यगात् अतिक्रान्तवान् । सः यवनराट् चकारात् सेना च भीमः भयंकरः लोकविलक्षणः रथोस्यास्तीति भीमरथः सांबः । रथः क्षोणी यंता शतधृतिरगेंद्रो धनुरथो । रथांगे चंद्रार्कौ रथचरणपाणिः शर इति महिम्नादिषु वर्णितः रथो ज्ञेयः । भीमरथाज्जाता भीमरथीनाम नदी तां । पुंयोगादाख्यायामिति ङीष् । जन्यजनकभावोपि पुंयोग इति मनोरमायामुक्तं । तथा हि योगश्चेह दंपतिभाव एवेत्येके वस्तुतस्तु संकोचे मानाभावात् जन्यजनकभावोऽपि एतेन देवकी व्याख्याता । अगात् प्राप्तः ॥ ३४ ॥

यवनेति । सः कब्जी नृपं शंभुं भीमरथ्याः तटे वर्तमाने तुलापुरनाम्नि पुरोत्तमे स्थितमितिशेषः । समुपागतं प्राप्तं यवनपानां अधिपतिं स्वामिनं अबोधयत् विज्ञापितवान् । गतिबुद्धीत्यादिना द्विकर्मकत्वं ॥ ३५ ॥

यवनपस्येति । नृपस्य शंभोः मानसं हरतीति नृपमानसहृत् द्विजः कब्जी तं नृपं अनुगच्छतीति तदनुगामी तस्मिन् जने श्रवणोत्सुके सति सदसि सभायां

---

१७ 'निवेशने' पा० भे० । १८ '०णोन्मुखे' पा० भे० ।

नरपतेऽत्र कलौ न मया श्रुता न च तया सदृशी युवतीक्षिता ॥
रतिरियं मदनस्य सती किमु प्रियजनुः परितः समवेक्षते ॥ ३७ ॥
मदनवत्तवमूर्तिरहो इयं त्वमसि तत्सदृशो वयसा नृप ॥
गुणगणैरपि संपदतीव ते मम मता युवयोरिह योजना ॥ ३८ ॥
केशैर्या चमरीं दृशा मृगसतीं हारान्द्विजैर्याऽजयत् ॥
बिम्बं चोष्ठपुटेन पूर्णशशिनं वक्त्रेण वाण्या पिकम् ॥
वक्षोजप्रभया सुवर्णकलशी चांपेयमङ्गैर्यो
दृष्टान्तेन विहीनमूरुयुगलं भासा च सौदामनीम् ॥ ३९ ॥
भ्राम्यद्भ्रूधनुषि प्रयोजितचलदृग्बाणपातं नरे
यस्मिन्सा विदधाति मूर्छिततरः सद्यः स सञ्जायते ॥

यवनपस्य सार्वभौमस्य गुणान् अनुवर्णयन् सन् तस्य यवनपस्य या तनुजा तस्याः गुणानां वर्णने प्रयवृते प्रवृत्तः ॥ ३६ ॥

वर्णनप्रकारमाह । नरपते इति । हे नरपते मया अत्र अस्मिन् कलौ कलियुगे तया सार्वभौमकन्यया सदृशी तुल्या युवती तरुणी । शत्रंतायुवशब्दान्ङीप् । नेक्षिता न दृष्टा न श्रुता च । इयं मदनस्य सती रतिः परितः आसमंतात् प्रियस्य शिवेन दग्धस्य जनुः जन्म । जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भव इत्यमरः । समवेक्षते पश्यति किमु ॥ ३७ ॥

मदनेति । अहो इत्याश्चर्ये । ओदिति प्रकृतिभावः । इयं तव मूर्तिः देहः मदनेन तुल्यः मदनवत् अस्तीति शेषः । हे नृप त्वं वयसा गुणगणैरपि तया सदृशः तत्सदृशः तत्तुल्यः असि । ते संपत् अतीव अत्यंतं अतः अस्मिन् काले युवयोः योजना दांपत्यभावः मम मता इष्टा ॥ ३८ ॥

तस्याः रूपं युग्मेन वर्णयति । केशैरिति । या केशैश्चमरीं दृशा दृष्ट्या मृगसतीं हरिणीं द्विजैः दंतैः हारान् ओष्ठपुटेन बिंबं बिंबफलं वक्त्रेण पूर्णं शशिनं पूर्णं चंद्रं वाण्या पिकं कोकिलं वक्षोजयोः प्रभया सुवर्णकलशौ अंगैः चांपेयं चंपापुष्पं भासा देहकांत्या सौदामनीं विद्युतं । तडित्सौदामनी विद्युदित्यमरः । अजयत् ऊर्वोः युगं दृष्टांतेन विहीनं अस्तीति शेषः ॥ ३९ ॥

भ्राम्यदिति । सा कन्या भ्राम्यंत्यौ ये भ्रुवौ ते एव धनुषी तयोः प्रयोजितौ चलंतौ चंचलौ यौ दृग्बाणौ तयोः पातं यस्मिन् विदधाति करोति सः नरः सद्यः तत्कालं मूर्छिततरः संजायते भवति । सा अंतः अंतःपुरे नित्यं सततं निरंतरं तिष्ठति इदं अंतःपुरावस्थानं तस्याः युक्तं हि निश्चयेन नो चेत् अन्यथा उक्तवैपरीत्ये इति

१९ 'यावरतीमुखेन' पा० भे० । २० 'वाण्यानयाकोकिलम्' पा० भे० । २१ '०जद्ययतः' पा० भे० । २२ 'यत्रामुमत्रांगतः' पा० भे० ।

सान्तस्तिष्ठति नित्यमेव सततं युक्तं हि तस्या इदम्
नो चेत्सा युवती हनिष्यति नरान्दृग्बाणपातैर्बहून् ॥ ४० ॥
रूपेण कान्त्या वयसा गुणैश्च संपद्भरैः सा सदृशी मता ते ॥
किंत्वत्र[२३] किञ्चित्प्रतिबन्धकारि जात्यन्तरं तत्र न मेऽस्त्युपायः ॥४१॥
अस्त्वाशु तां ते किल दर्शयामि तद्दर्शनं दुर्लभमत्र जन्तोः ॥
तस्याः पिता राजवराधिनाथः प्रेक्ष्यस्त्वयेत्थं[२४] मम चित्तवृत्तिः ॥ ४२ ॥

दृष्ट्वा तं यवनपतिं सभानिविष्टं
वस्त्रान्तःपिहितकरः प्रणम्य तिष्ठेत् ॥
तेनोक्ते समुपविशेति चासितव्यम्
मार्गोऽयं यवनपतेः सभागतस्य[२५] ॥ ४३ ॥
श्रुत्वेत्थं द्विजवच आशुकोपभूपः
प्राहेदं मम किमिहास्ति तेन कृत्यम् ॥

यावत् । सा युवती तरुणी । शत्रंतोयं शब्दः । बहून् नरान् तरुणान् दृग्बाणपातैः हनिष्यति मारयिष्यति ॥ ४० ॥

रूपेणेति । रूपेण कांत्या वयसा संपद्भरैश्च सदृशी तुल्या सा ते मता मान्या अस्तीति शेषः । अतो विवाहाय योग्येति भावः । किंतु अत्र विवाहे अन्या जातिरिति जात्यंतरं भिन्नजातित्वं किंचित्प्रतिबंधं करोतीति प्रतिबंधकारि अस्ति तत्र मे उपायः नास्ति ॥ ४१ ॥

अस्त्विति । अस्तु विवाहाभावोस्तु । तां तरुणीं ते तुभ्यं दर्शयामि । अत्र अस्मिन् लोके तद्दर्शनं जंतोः प्राणिनः दुर्लभं अतः सा द्रष्टव्येति भावः । किंच तस्याः पिता राजवराः राजश्रेष्ठाः तेषां अधिनाथः स्वामी सार्वभौमः त्वया प्रेक्ष्यः द्रष्टव्यः इत्थं मम चित्तवृत्तिः अस्ति ॥ ४२ ॥

तद्दर्शनकाले कर्तव्यं उपदिशति । दृष्ट्वेति । वस्त्रस्य अंतः प्रांतः । अंतः प्रांतेतिके नाशे स्वरूपे च मनोहरे इति विश्वः । तेन पिहितौ आच्छादितौ करौ येन सः तथाभूतः सभायां निविष्टं स्थितं तं यवनपतिं दृष्ट्वा प्रणम्य तिष्ठेत् उपवेशानुज्ञापर्यंतमित्यर्थः । तेन प्रभुणा समुपविश आस्यतां इति उक्ते सति आसितव्यं स्थेयं । यवनपतेः सभागतस्य अयं मार्गः संप्रदायः । प्रहर्षणीवृत्तं । म्नौज्रौगस्त्रिदशयतिः प्रहर्षणीयं इतिलक्षणात् ॥ ४३ ॥

श्रुत्वेति । आशु शीघ्रं कोपोस्यास्तीति आशुकोपः भूपः इत्थं पूर्वोक्तप्रकारेण द्विजस्य कल्जीनाम्नः वचः श्रुत्वा इदं आह । इदं किं । तेन यवनेन मम इह अस्मिन्लोके किं कृत्यं कार्यं अस्ति न किमपीत्यर्थः । ननु तत्कन्यायाः दर्शनमेव

२३ 'तत्र' पा० भे० । २४ 'दृश्यः' पा० भे० । २५ 'सभांगतस्य' पा० भे० ।

तत्कन्या गुणगणसंयुतापि किं मे
शूद्रे किं पचति वरान्नमत्ति विप्रः ॥ ४४ ॥
तातं वा गुरुमगुरुं नमामि विप्रम्
नान्यं तं द्विविजमृते धरैकनायम् ॥
एवं मे व्रतमिह तस्य भङ्ग ईष-
त्स्याच्चेत्किं द्विज भविता न वेद्मि सद्यः ॥ ४५ ॥
कब्जी तं नरवरमाह हे नरेंद्र
भङ्गस्ते न हि भविता व्रतस्य किंचित् ॥
सत्यं मे वचनमिदं न कापि चिन्ता
द्रष्टव्यो यवनपतिस्त्वया सकन्यः ॥ ४६ ॥
यास्यामि द्विज वचनात्तवेति विप्रः
श्रुत्वागाद्यवनवराधिपाधिवासम् ॥

महत्कल्यमित्यत आह । तस्य कन्या गुणगणसंयुतापि मे किं न किंचिदित्यर्थः । तस्याः हीनजातित्वान्ममोपयोगो नास्तीत्यर्थः । तथा हि शूद्रे वरान्नं श्रेष्ठान्नं पचति सति । कर्तृकर्मणोः कृतीति षष्ठ्यां प्राप्तायां न लोकेति निषेधात्कर्मत्वं । विप्रः ब्राह्मणः अत्ति भक्षयति किं । नेत्यर्थः ॥ ४४ ॥

तातमिति । अहमितिशेषः । तातं पितरं वा इत्यथवा गुरुं विद्वांसं अथवा अगुरुं अविद्वांसं विप्रं नमामि । अविद्यो वा सविद्यो वा ब्राह्मणो मामकी तनुरिति भगवद्वचनादिति श्रुतिश्चात्र प्रमाणं नमोमहद्भ्य इत्यादि । धरतीति धरः कैलासः । पचाद्यच् । तस्य एकनायः शिवः तं दिविजं ऋते देवं विना । सप्तम्यांजनेर्डः । प्रावृट्शरत्कालदिवां जे इत्यलुक् । यद्यपि पाणिनिमते ऋतेशब्दयोगे द्वितीया नास्ति तथापि ऋतयोगे द्वितीयापीति व्याकरणांतमूत्रात्साधुत्वं अत एव फलति पुरुषाराधनमृते इत्यादि प्रयोगाः संगच्छंते । अन्यं न नमामि का कथा यवनस्येति भावः । यद्वा धरैकनायं ऋते शिवं विना अन्यं दिविजं देवं न नमामि का कथा इतरस्येतिभावः । एवं मे व्रतं तस्य व्रतस्य ईषत् स्वल्पोपि भंगः स्याच्चेत् हे द्विज सद्यः किं भविता तन्न वेद्मि कोपवशेन यवनं हनिष्यामि वा त्वां हनिष्यामि वा यवनो मां हनिष्यतीति किमपि न जाने इत्यर्थः ॥ ४५ ॥

कब्जीति । हे नरेंद्र ते व्रतस्य इतराप्रणमनरूपस्य भंगः किंचित् अल्पोपि न भविता इदं मे वचनं सत्यं न तु प्रतारकं । अतः कापि चिंता नास्ति । अतः त्वया यवनपतिः सकन्यः द्रष्टव्यः इति कब्जी तं नरवरं शंभुभूपं आह ब्रूते ॥ ४६ ॥

यास्यामीति । हे द्विज तव वचनात् वचनं श्रुत्वा यास्यामि त्वदीये वचने भारं दत्त्वेत्यर्थः । ल्यब्लोपेपंचमी । विप्रः कब्जी इति अनेन प्रकारेण श्रुत्वा यवनवरा-

तद्वृत्तं निखिलमुवाच तत्पुरस्ता-
द्विप्रोऽसौ श्रवणपरे जने तदीये ॥ ४७ ॥
सन्नत्यां नृपतिदुराग्रहं च तस्मै
संवर्ण्य क्षणमवसत्स्वयं स तूष्णीम् ॥
वाक्यं तद्द्विजमुखनिर्गतं निशम्य
प्रावोचद्यवनवराधिपस्तदानीम् ॥ ४८ ॥
सन्नत्यामपि विहिता मया न सेत्थम्
योगोऽयं प्रणिधिनराधिगम्य एकः ॥
आस्ते तं किल विदधामि याहि दुष्टम्
शंभुं तं मम निकटे समानयाशु ॥ ४९ ॥
इत्थं तं वचनमुदीरयन्तमूचे
विप्रोऽसौ यवनपते समानयिष्ये ॥
तं शंभुं तव पुर इत्युदीर्य विप्र-
स्तत्कन्या निवसतिमेत्य वाचमाह ॥ ५० ॥
राजास्ते गुणगणसंयुतो बलिष्ठ-
स्तेजस्वी मदन इव स्वरूपशाली ॥

धिपस्य सार्वभौमस्य अधिवासं ययौ । असौ कब्जी तदीये यवनाधिपजने श्रवणपरे सति तत्पुरस्तात् तदग्रे निखिलं संपूर्णं तस्य नृपस्य वृत्तांतं उवाच राजवशीकरणादिकं सर्ववृत्तमकथयदित्यर्थः ॥ ४७ ॥

सन्नत्यामिति । सः कब्जी सन्नत्यां सम्यक् नमस्कारे विषये नृपतेः शंभोर्यो दुराग्रहः तं तस्मै यवनेशाय संवर्ण्य कथयित्वा स्वयं तूष्णीं अवसत् । यवनपतिः तद्विजमुखनिर्गतं वाक्यं निशम्य श्रुत्वा तदानीं तस्मिन् काले वचः प्रावोचत् ॥ ४८॥

सन्नत्यामपीति । सन्नत्यामपि सम्यक् प्रणामे कृते सत्यपीत्यर्थः । मया सा सन्नतिः न विहिता इति इत्थं प्रणिधिनरैः गूढपुरुषैः अधिगम्यः ज्ञेयः । प्रणिधिर्गूढपुरुष इत्यमरः । एकः योगः आस्ते तं योगं विदधामि करोमि अतः आशु याहि गच्छ दुष्टं दुर्वृत्तं तं मम निकटे समानय ॥ ४९ ॥

इत्थमिति । असौ विप्रः इत्थं अनेन प्रकारेण वचनं उदीरयंतं तं सार्वभौमं हे यवनपते तं शंभुं तव पुरः समानयिष्ये इति ऊचे जगाद । विप्रः इति उदीर्य उक्त्वा तत्कन्यानिवसतिं एत्य आगत्य वाचं वाक्यमाह ॥ ५० ॥

राजेति । गुणानां गणः तेन संयुतः अतिशयेन बली इति बलिष्ठः शरीरसंपत्तिमान् अनेन रतिक्षमत्वं सूचितं । अतिशायने तमबिष्ठनाविति इष्ठन् प्रत्ययः । प्रशस्तं

२६ '०स्तमाह' पा० भे० । २७ '०चमूचे' पा० भे० । २८ 'राजासौ' पा० भे०

तत्तुल्यः पुरुषचये मया सुरूपो
नैवान्यः पुरुषवरः कदापि दृष्टः ॥ ५१ ॥
कञ्जीत्थं वचनमुदीर्य धूर्तवर्यः
सप्तारं प्रति स ययौ पुनश्च विप्रः ॥
सा कन्या नृपतिगुणाननुस्मरन्ती
तच्चिन्तास्मरशरदीर्णमानसासीत् ॥ ५२ ॥

औरङ्गजेबो राजसमागमार्थं चकार रम्यं वसतिस्थलं सः ॥
वस्त्रैरनर्घ्यैरुपवेष्टितं तत्प्रवेशमार्गं सुलघुं चकार ॥ ५३ ॥
राजापि कञ्जीसहितोऽल्पसेनो द्रष्टुं ययौ तं नरनाथनाथम् ॥
उपेत्य सैन्यं पटवेश्म दीर्घमुच्चैश्च तद्द्वारमदर्शि सूक्ष्मम् ॥ ५४ ॥
व्यचिन्तयद्विप्रमृते शिरो मे नतं न कस्यापि पुरो व्रतं मे ॥
इदं न नश्येदिह तद्विधेयं विचिन्त्य चेत्थं स विवेश वेश्म ॥ ५५ ॥

तेजः अस्यास्तीति तेजस्वी । अस्मायामेधास्रजो विनिरिति विनिः । स्वरूपेण शालते-ऽसौ रूपशाली । सुप्यजातौ णिनिस्ताच्छील्ये इति णिनिः । राजा मदनः इव आस्ते वर्तते । मया पुरुषचये पुरुषसंघे तत्तुल्यः सुरूपः अन्यः पुरुषवरः कदापि न दृष्टः ॥ ५१ ॥

कञ्जीति । धूर्तवर्यः विप्रः ब्राह्मणः सः कञ्जी इत्थं वचनं उदीर्य पुनश्च सप्तारं प्रति ययौ । सा कन्या यवनाधिपकन्या नृपतिगुणान् अनुस्मरंती सती । स्मरतेर्लटः-शत्रादेशे ङीपि नुमागमः । तस्य राज्ञः चिंता चिंतनं तेन उत्पन्नो यः स्मरः तस्य शरैः दीर्णं मानसं यस्याः तथा भूता आसीत् ॥ ५२ ॥

औरंगजेब इति । औरंगजेबसंज्ञः सार्वभौमः राजसमागमार्थं अनर्घ्यैः बहुमूल्यैः वस्त्रैः उपवेष्टितं समंताद्व्याप्तं अतएव रम्यं वसतेः वासस्य स्थलं चकार । तस्य वसति स्थानस्य प्रवेशमार्गं सुलघुं अति ह्रस्वं चकार । उपजातिवृत्तं । अनंतरोदीरिति-लक्ष्मभाजौ पादौ यदीया उपजातयस्ताः । इत्थं किलान्यास्वपि मिश्रितासु स्मरंति जातिष्विदमेव नामेति लक्षणात् ॥ ५३ ॥

राजेति । अल्पा सेना यस्येत्यल्पसेनः राजापि कञ्जीसहितः सन् तं नरनाथं सार्वभौमं द्रष्टुं ययौ । तेनेतिशेषः । सैन्यं उपेत्य दीर्घं उच्चं च इति अपरं तस्य द्वारं सूक्ष्मं अति लघु अदर्शि दृष्टं । दृशेः कर्मणिलुङि च्लेश्चिणि लुक् ॥ ५४ ॥

व्यचिंतयदिति । सः राजा मे शिरः विप्रं ऋते ब्राह्मणं विना कस्यापि पुरः न नतं इदं मे व्रतं न नश्येत इह अस्मिन् स्थले तथा विधेयं कर्तव्यं इति विचिन्त्य वेश्म पटवेश्म विवेश ॥ ५५ ॥

पादौ पुरस्तात्प्रविधाय पश्चात्स्वयं विनिर्गत्य पुरः स तस्य ॥
कन्या सखीभिः सहितां ददर्श सा चापि मध्यादपसार्य वासः॥५६॥
परस्परं वीक्ष्य समन्वभावि ताभ्यां सुखं यन्मदनोऽस्य साक्षी ॥
गत्वा तदग्रे यवनाधिपस्य पुरः सभायामुपविष्ट एकः ॥ ५७ ॥
अत्युद्धतं चाकृतसन्नतिं तमुवाच कस्ते परिपालकोऽत्र ॥
ममाहमेवेति तमाह राजा दिल्लीपतिः क्रुद्धतरो बभूव ॥ ५८ ॥
स्थित्वा स तूष्णीमशनस्य काले राजानमाहात्र नृपोपभुंक्ष्व ॥
विचार्य राजा क्षणमेनमूचे तत्कालयुक्तं वचनं कठोरम् ॥ ५९ ॥
कन्यां त्वदीयां यदि दास्यसीह पात्रे त्वदीयेऽपि विचारहीनः ॥
भोक्ष्ये स्वजातेरथ राज्यतश्च भ्रष्टोऽपि ते कन्यकया समेतः ॥ ६० ॥

प्रवेशप्रकारमाह । पादाविति । सः राजा पुरस्तात् पूर्वस्मिन् क्षणे । दिक्शब्देभ्यइत्यादिना।पूर्वशब्दात्कालवाचकात्सप्तम्यंतात् अस्तातिप्रत्ययेपूर्वस्यपुरादेशः । पादौ चरणौ पुरः अग्रभागे प्रविधाय स्थापयित्वा पश्चात् अनंतरं स्वयं विनिर्गत्य अवशिष्टं शरीरांशं द्वाराद्बहिः कृत्वेत्यर्थः । तस्य यवनाधिपस्य कन्यां पुर इत्यस्यावृत्तिः पुरः अग्रभागे पुरः प्रथमं सखीभिः सहितां कन्यां ददर्श । सा कन्यापि मध्यात् मध्यप्रदेशात् वासः यवनिकामपसार्य निष्काश्य तमितिशेषः । राजानं ददर्श ॥ ५६ ॥

परस्परेति । द्वाभ्यां राजयवनकन्याभ्यां परस्परं अन्योन्यं वीक्ष्य यत्सुखं समन्वभावि अनुभूतं । समनुपूर्वाद्भवतेः कर्मणि लुङि च्लेश्चिणि लुक् । अस्य सुखस्य साक्षी मदनः नान्यः इत्यर्थः । परस्परस्य सकामावलोकनं नान्येन ज्ञातमितिभावः । तस्याः कन्यकायाः अग्रे तदग्रे गत्वा यवनाधिपस्य सभायां यवनाधिपस्य पुरः अग्रभागे एकः उपविष्टः ॥ ५७ ॥

अतीति । यवनाधिप इतिशेषः । अत्युद्धतं अत एव अकृतसन्नतिं तं राजानं अत्र अस्मिन् काले ते कः परिपालकः अस्तीत्युवाच । राजा मम पालकः अहमेव इति तं आह नान्य इत्यर्थः । दिल्लीपतिः क्रुद्धतरः अतिशयेन क्रुद्धः बभूव । अतिकठोरभाषणश्रवणादि विभावः ॥ ५८ ॥

स्थित्वेति । सः यवनाधिपः तूष्णीं स्थित्वा अशनस्य भोजनस्य काले हे नृप अत्र मदीये पात्रे भुंक्ष्व इत्याह । राजा क्षणं विचार्य एनं तत्काले युक्तं कठोरं वचनं ऊचे उक्तवान् ॥ ५९ ॥

कन्यामिति । स्वजातेः अथ राज्यतश्च भ्रष्टोपि अहं इति शेषः । त्वदीयां कन्यां यदि

२१ '०स्पराम्वीक्षणतोन्व०' पा० मे० ।

लाभं परं चेतसि मन्यमानः स्थास्यामि ते वेश्मनि सर्वकालम् ॥
इत्युक्तवन्तं नृपतिं विधाय काराग्रहेऽसौ निशि सोऽपि शिश्ये॥६१॥
ततो नृपेन्द्रो निजदेहकारागृहाद्विमुक्तः समभूत्स मानी ॥
कन्या तदीया विललाप बाला हाहेति चोच्चैर्व्यथितान्तरात्मा ॥६२॥
श्रुत्वा पितोवाच विशोकहेतुर्न दृश्यते दुर्जनघातनं तु ॥
सन्तोषहेतुर्न च खेदहेतुर्विरुद्धमत्राचरितं तवेदम् ॥ ६३ ॥
कन्या ब्रवीद्गुह्यमहं प्रवच्मि भर्ता समे चेतसि संवृतोऽभूत् ॥"
मनो हि हेतुः किल कृत्यजाते भर्तारमन्यं न वृणे नरेन्द्र ॥ ६४ ॥

दास्यसि तर्हि इह अस्मिन् त्वदीयेपि अतिनीचस्यापि इतिभावः। पात्रे ते कन्यकया समेतः युक्तः सन् भोक्ष्ये। भुजोनवने इत्यात्मने पदं ॥ ६० ॥

लाभमिति। चेतसि परं उत्कृष्टं लाभं त्वत्कन्यासंगमरूपं मन्यमानः अहं ते वेश्मनि सर्वकालं स्थास्यामि। असौ यवनेशः इति पूर्वोक्तं उक्तवन्तं नृपतिं काराग्रहे विधाय निशि निशायां सः अपि यवनपः अपि शिश्ये सुप्तवान्। शेतेर्लिट् आत्मनेपदंच ॥ ६१ ॥

तत इति। ततस्तदनंतरं मानी मानवान् स नृपेंद्रः शंभुः निजः स्वकीयो यो देहः स एव कारागृहं तस्माद्विमुक्तोऽभूत् देहंतत्याजेत्यर्थः। किंच तस्य यवनस्य इयं तदीया कन्या व्यथितः अंतरात्मा मनो यस्याः सा तथा सती हा हा इति हाहाशब्दं उच्चार्येत्यर्थः। विललाप रुरोद ॥ ६२ ॥

श्रुत्वेति। पिता यवनाधिपः श्रुत्वा कन्याविलापमित्यर्थः। विशेषेण शोकः विशोकः तस्य हेतुर्न दृश्यते यतः दुर्जनघातनं संतोषहेतुः खेदहेतुर्न एवं सति अत्र दुर्जनविषये तव इदं आचरितं विलापरूपं विरुद्धं अयुक्तमित्यर्थः। इति उवाच जगाद ॥ ६३ ॥

कन्येति। कन्या इत्यब्रवीत्। इति किं हे नरेंद्र अहं गुह्यं प्रवच्मि वदामि। गुह्यं कथयति। चेतसीति। चेतसि संवृतः वृतः सः शंभुर्मे भर्ता अभूत् आसीत्। अतः विलपामीतिभावः। ननु साक्षात्पाणिग्रहणे वृत्तेपि सप्तपदीविधानात्पूर्वं वरमरणे अन्यो वरोवरणीयः इति शास्त्रानुज्ञा अयं तु मानसिको विवाहः संपन्नः अतोन्यवरणे न किंचिद्बाधकमतो न रोदितव्यमित्यत आह मन इति। खिलं संपूर्णं यत्कृत्यजातं कार्यजातिः तस्मिन् खिलकृत्यजाते। जातं जात्योघजन्मसु इति विश्वः। मनः हेतुः कारणं अतः नारदेन विवाहात्प्राक् बोधितापि सावित्री अल्पायुषं सत्यवंतं मनसा वृतमेव वव्रे इति भावः। अतः अन्यं भर्तारं न वृणे। वृङ्संभक्ताविति धातोर्लट्एत्ले श्राभ्यस्तयोरात इत्यालोपः ॥ ६४ ॥

---

१० 'प्रातः समानीय विहिंसकांस्तैर्–हत्वाद्य मेषेऽस्य नृपं जघान' पा० भे०।

सनिश्चयाया निजकन्यकायाः प्रतोषहेतुं नृपशंभुसूनुम् ॥
उत्सङ्ग आधाय तया च तेन समन्वितोऽसौ विचचार भूमौ ॥ ६५ ॥
सिंहासनगतः शंभुर्वर्षाष्टकमपालयत् ॥
जगतीं जगतीनाथो जगन्नाथपदाश्रयः ॥ ६६ ॥
खभूमिरसभूमिते ( १६१० ) वहति शालिवाहे शके ॥
तुलापुरपुरे नृपः स किलफाल्गुनामातिथौ ॥
सुरासुरपतिं हरिं मनसि धारयन्नन्वगा- ॥
द्दिवं दिविजसंस्तुतः स्तुतकथः कथावारिधिः ॥ ६७ ॥
राजारामोऽरातिवर्गप्रहर्त्ता कर्ता काम्यानेकयज्ञक्रियाणाम् ॥
शास्ता भूमेर्दीनसंघस्य भर्त्ता धर्त्ता भूते राजते राजसूनुः ॥ *
॥ इति श्रीशिवकाव्ये पुरुषोत्तमकविकृते षष्ठश्चमत्कारः ॥

सनिश्चया इति या । असौ सार्वभौमः प्रकर्षेण तोषः प्रतोषस्तस्य हेतुं नृपं शंभोः सूनुं शाहुं । सूनुः पुत्रेऽनुजे रवाविति विश्वः । निश्चयेन निग्रहेण अद्य भर्त्रकरणरूपेण सहिता सनिश्चया तस्याः निजकन्यकायाः उत्संगे अंके आधाय पुत्रत्वेन समर्प्येत्यर्थः । तया कन्यया तेन दौहित्रेण शाहुना च समन्वितः सन् भूमौ विचचार ॥ ६५ ॥

सिंहासनेति । सिंहासनगतः राज्याभिषिक्तः इत्यर्थः । सः शंभुः वर्षाणां अष्टकं अष्टवर्षाणि जगतीं पृथ्वीं । जगती विष्टपे मह्यां वास्तुछंदविशेषयोरिति विश्वः । अपालयत् । जगन्नाथस्य श्रीसांबस्य ये पदे चरणौ ते एव आश्रयो यस्य असहाय इत्यर्थः ॥ ६६ ॥

खेति । दिविजैः देवैः संस्तुतः धैर्यादिगुणयुक्त इति वर्णितः । भूमौ स्तुताः गीताः कथाः प्रबंधाः यस्य तथोक्तः । प्रबंधकल्पनाकथेत्यमरः । कथानां गोष्ठीनां वारिधिः समुद्रः अपारकीर्तिरित्यर्थः । सः नृपः शंभुः सुरासुराणां पतिं हरिं मनसि धारयन् सन् प्रारब्धवशाद्दुर्मरणे प्राप्ते तत्काले । अंतकाले च मामेव स्मरन् मुक्त्वा कलेवरं । यः प्रयाति त्यजन् देहं स याति परमां गतिमिति भगवद्वचनं स्मृत्वा तमेव स्मरन्निति भावः । खं शून्यं भूमिरेका रसाः षट् भूरेका अंकानां वामतो गतिरिति दशाधिकषोडशशतानि तन्मिते शालिवाहनशके वहति सति वर्तमाने सति फाल्गुनस्य या अमा अमावास्या तस्यां तिथौ तुलापुरसंज्ञकात्पुरात् दिवं स्वर्गं । सुरलोको द्योदिवौ द्वे इत्यमरः । अन्वगात् । पृथ्वीवृत्तं । जसौजसयलावसुग्रहयतिश्चपृथ्वीगुरुरितिलक्षणात् ॥ ६७ ॥

॥ इति श्री शिवकाव्यव्याख्यायां स्वयंकृतायां काव्यप्रकाशिकायां षष्ठश्चमत्कारः ॥

---

१ 'भर्ता स मे मेममना वृतोऽभत' पा० भे० । * अयं श्लोकः क्वचिदधिको दृश्यते.

शंभोरंभोनिधेर्जज्ञे शाहुर्बाहुजवंदितः ॥
इंदुरिंदीवराक्षोऽयं प्रणमंति शिशुं प्रजाः ॥ १ ॥
वेदशून्यरसचंद्रसंमिते शालिवाहनशके नृपोऽभवत् ॥
दुंदुभौ दिविजदुंदुभिध्वनौ भूतले च सति दुंदुभिध्वनौ ॥ २ ॥
उच्चगे खचरपंचके सुधीर्हर्षयन्सकललोकसंहतिम्
बाडवेषु निरतेषु पूजने शीतलाद्रितनुजापतेः सदा ॥
बाल एव निजकर्मसंपदा लोकयितृजनमानसं नृपः
भाषणेन च कलेन चाहरल्लीलया विविधवल्गुवाक्यया ॥ ३ ॥
बालकः प्रववृधेऽमरांघ्रिपः पितृपालनजलप्रसेकभाक् ॥

अथ शम्भुसूनोः शाहोः चरित्रं विवक्षुः तत्रादौ तज्जन्म द्वाभ्यामाह । शंभोरिति । प्रजाः जनाः । प्रजा स्यात्संततौ जने इत्यमरः । शिशुं बालं अन्यत्र नवोदितं यं प्रणमन्ति नमस्यन्ति । इंदीवरे इव अक्षिणी यस्येति इंदीवराक्षः बाहुजैः क्षत्रियैः वंदितः सः अयं शाहुः शाहुनामा नृपः इंदुः शंभोः शंभुनृपात अंभोनिधेः समुद्रात् जज्ञे उत्पन्नः । रूपकालंकारः ॥ १ ॥

वेदेति । वेदशून्यरसचंद्रसंमिते [ १६०४ ] चतुरधिकषोडशशतमिते शालिवाहनशके दुंदुभौ संवत्सरे दिविजानां देवानां दुंदुभिध्वनौ भूतले च दुंदुभिध्वनौ सति नृपः अभवत् । यदीयजन्मकाले स्वर्गे भुवि च तत्र तत्र मांडलिकराजगृहे परमहर्षात् दुंदुभिध्वनिरभवत् इत्यर्थः ॥ २ ॥

बाल एवेति । बालः एव शिशुरपि । अप्यर्थे एवकारः अव्ययानामनेकार्थत्वात् । नृपः शाहुः निजकर्मसंपदा कलेन अव्यक्तमधुरेण भाषणेन विविधानि वल्गूनि रमणीयानि वाक्यानि यस्यां तया लीलया च लोकयितारः दर्शनकर्तारो ये जनास्तेषां मानसं चित्तं । यद्वा आश्रययुक्तः पाठः। लोकांन्पितृजनांञ्जनकसंबंधिनो जनाश्च तेषां मानसं अहरत् हृतवान् ॥ ३ ॥

बालक इति । पित्रोः जनकजनन्योः यत्पालनं तदेव जलं तस्य यः प्रसेकः सेचनं तद्भजतीति तथोक्तः बालकः शाहुः स एव अमरांघ्रिपः कल्पतरुः ववृधे । दंपती

१ 'शम्भुतः समभवद्दयानिधिः शाहुनामनृपतिर्गुणालयः ॥
दुंदुभौ दिविजदुंदुभिध्वनौ भूतले च सति दुंदुभिध्वनौ ॥ १ ।'
कचिदनेन श्लोकेन प्रारभ्यते ।

२ '०पोत्तमः' पा० भे० । ३ 'दीपतो विहितदीपवत्समो रूपतो गुणगणैश्च शंभुना' पाठ भेदः । ४ कचिदधिकोऽयं श्लोकः । ५ '०पतोहरल्लोक०' पा० भे० । ६ '०भेनिरतरम्' पा० भे० । * अस्मिन्चरणेपितृशब्दस्य 'तृ' अक्षरस्यादित्वं कल्पित्वा 'पि' अक्षराय गुरुत्वं दत्तं तत्प्रामादिक

दंपती द्विगुणतां परस्परे प्रीतिमापतुरमुष्य जन्मना ॥ ४ ॥
पंचहायनमपालयत्पिता बालकं सकललोकपालकम् ॥
तत्पितर्युपरते समानयद्बालकं यवनपो निजगृहान् ॥ ५ ॥
शत्रुपुत्रमपि वीततातकं हीनकर्मनिरतोप्यपालयत् ॥
कन्यकातनयमानतं न तं सत्क्षणं क्षणमपि व्यवासयत् ॥ ६ ॥
प्रीतिरत्र ववृधे तदा तयोः कन्यकायवनयोर्नृपात्मजे ॥
सोऽपि कीर इव भाषितैर्यतस्तं च तां च नितरामतोषयत् ॥ ७ ॥
औरसादपि सुतान्नृपात्मजे प्रीतिरस्य समजायताधिका ॥
रम्यवाक्यरचनासमुद्भवत्तोषतुष्टहृदयस्य सर्वदा ॥ ८ ॥

स्त्रीपुंसौ । जायाशब्दस्य दंभावो निपात्यते । अमुष्य बालकस्य जन्मना परस्परे अन्योन्ये द्विगुणितां प्रीतिं आपतुः ॥ ४ ॥

पंचेति । पिता शंभुः सकलस्य लोकस्य भूलोकस्य पालकं बालकं शाहुं पंचानां हायनानां समाहारः पंचहायनं पंचसंवत्सरपर्यंतं । हायनोऽस्त्री शरत्समा इत्यमरः । कालाध्वनोरत्यंतसंयोगे इति द्वितीया । पात्रादित्वात् ङीप् न । अपालयत् । यवनपः तत्पितरि शंभौ उपरते सति बालकं शाहुं निजगृहान् स्वगृहं समानयत् । गृहाः पुंसि च भूम्न्येवेत्यमरः । दुहादित्वात् द्विकर्मत्वम् ॥ ५ ॥

शत्रुपुत्रेति । हीनं नीचं हिंसारूपं कर्म तस्मिन् निरतोपि सः यवनाधिपः वीतः नष्टः मृत इति यावत् । तातः पिता यस्येति वीततातकः तं । समासांतः कः । यद्वा तातस्य कं तातकं वीतं गतं तातकं पितृसुखं यस्मात्तं वीततातकं । सुखशीर्षजलेषु कमिति विश्वः । शत्रोः शंभोः पुत्रं अपि तं शाहुं अपालयत् अरक्षत् । आनतं नम्रं सन् उत्तमः क्षणः येन तं कन्यकातनयं क्षणमपि न व्यवासयत् न दूरीचकार । वसनिवासे इत्यस्माण्णिजंताल्लङ् ॥ ६ ॥

प्रीतिरिति । तदा तस्मिन् काले तयोः कन्यकायवनयोः अत्र अस्मिन् नृपात्मजे शाहौ विषये प्रीतिः प्रेमा ववृधे । यतः यस्मात् कारणात् सोऽपि शाहुरपि कीर इव शुकः इव भाषितैः तं यवनाधीशं चात् तदनुगान् तां कन्यकां चात् तत्सखीः नितरां अतोषयत् ॥ ७ ॥

औरसादिति । रम्याणि यानि वाक्यानि तेषां या रचना तस्याः समुद्भवन् यस्तोषः तेन तुष्टं हृदयं यस्य तथोक्तस्य अस्य यवनाधीशस्य प्रीतिः नृपात्मजे शाहौ उरसि जातः औरसः तस्मात् औरसात् पुत्रात् अधिका सर्वदा न तु कदाचित् समजायत अभवत् ॥ ८ ॥

---

७ 'सदा' पा० भे० । ८ 'तस्य' पा० भे० ।

यं यमेष विषयं ययौ युतः सेनयैनमपि नीतवान्समम् ॥
छत्रचामरमुखाखिलर्द्धिभिर्भूषितं विविधभूषणैरपि ॥ ९ ॥
मत्तदंतितुरगव्रजः पुरः सूतमागधरवोपि चाभवत् ॥
पृष्ठतो विविधवीरसंहतिस्तस्य शंभुसुतशाहुभूपतेः ॥ १० ॥
केचिदाहुरयमस्य चात्मजः कन्यकातनय इत्यपि क्वचित् ॥
शंभुनामनृपतेः सुतोह्ययं नान्य इत्थमपरे विवेकिनः ॥ ११ ॥
यद्यदेष नगरं ययौ प्रभुस्तत्र तत्र विशिखोऽरुणन्नृपान् ॥
देवता अपि पुरे पुरे स्थिताः स्फोटयन्नथ ययौ स पंढरीम् ॥ १२ ॥
विठ्ठलस्य परिचारकास्तदा देवतागलगतां सुमालिकाम् ॥
नारिकेलमपि तस्य ते पुरः स्थापयंत इदमूचिरे द्विजाः ॥ १३ ॥

यंयमिति । एषः यवनाधिपः सेनया युतः सन् यं यं विषयं देशं ययौ तं तमि तिशेषः । छत्रं च चामरं च छत्रचामरे ते मुखं मुख्ये यासां ताः अखिलर्द्धयः सकलसंपदस्ताभिः विविधभूषणैरपि भूषितं एनमपि शाहुमपि साकं सार्धं । साकं सार्धं समं सहेत्यमरः । नीतवान् ॥ ९ ॥

मत्तेति । मत्ताः दंतिनो गजाः तुरगाश्च तेषां व्रजः सूताः मागधाश्च तेषां रवोपि तस्य शंभुसुतशाहुभूपतेः पुरः अभवत् । पृष्ठतः पृष्ठभागे विविधवीराणां संहतिः अभवत् ॥ १० ॥

केचिदिति । केचित्पुरुषाः अयं बालः अस्य यवनाधिपस्य आत्मजः पुत्रः इत्याहुः । किंच केचित् कन्यकातनय इत्यप्याहुः । अपरे अन्ये विवेकिनः शंभुनामनृपतेः अयं सुतः हि निश्चयेन नान्य इत्थं आहुः ॥ ११ ॥

यद्यदिति । प्रभुः निग्रहानुग्रहसमर्थः एषः विशिखः यवनेशः यद्यन्नगरं ययौ तत्र तत्र नगरे नृपान् राज्ञः प्रतिकूलानित्यर्थः । अरुणत् रुरोध । अथ सः पुरे पुरे स्थिताः देवताः प्रतिमाः स्फोटयन् विदारयन् सन् पंढरीं दक्षिणदेशे प्रसिद्धां नगरीं ययौ ॥ १२ ॥

विठ्ठलस्येति । तदा यवनाधिपागमनसमये ते प्रसिद्धाः द्विजाः ब्राह्मणाः विठ्ठलस्य देवस्य परिचारकाः सेवकाः देवतायाः विठ्ठलसंज्ञायाः गलः कंठस्तत्र गतां विद्यमानां शोभना माला सुमाला सुमालेव सुमालिका तां । स्वार्थेकप्रत्ययेकृतेटापिप्रत्ययस्थात्कात्पूर्वस्येति इत्वं । यद्वा सुमानां पुष्पाणां आलिकां पंक्तिं मालामित्यर्थः । कुसुमं सुममित्यमरः । सममित्यपपाठः । नारिकेलस्य फलमपि तस्य यवनाधिपस्य पुरः अग्रे प्रसादार्थं स्थापयन्तः संतः इदं वक्ष्यमाणं ऊचिरे बभाषिरे ॥ १३ ॥

---

९. 'यवनवनजनामसयुतः' १०. 'यवयवनवजगामराजराट्' पा० भे० ।

विष्णुरत्र भगवान् घनप्रभो रक्ष्य एष भवता दयावता ॥
माल्यगं कुटिलकुंतलं स वै संविलोक्य समुवाच तान्द्विजान् ॥ १४ ॥
विठ्ठलस्य शिरसीह कुंतलाः संति किं वदत भो द्विजास्तदा ॥
कश्चन स्मृतहरिं नमन् जगौ संति विठ्ठलशिरस्यहो कचाः[११] ॥ १५ ॥

इत्युक्तवंतं विप्रं तं यवनः प्रत्यभाषत
एवं चेत्तर्हि तं देवं मां प्रदर्शय सत्वरम् ॥ १६ ॥
ओमित्युक्त्वा ततः शीघ्रं देवालयमगाद्द्विजः
साष्टांगं प्रणिपत्याह सत्यं कुरु वचो मम ॥ १७ ॥
प्रासादं समुपेत्यासौ देवदेवस्य मस्तके ॥
तुतोष कुंतलान्दृष्ट्वा लंबमानान्घनान्बहून् ॥ १८ ॥
यवनः सत्वरं प्रागाद्देवालयमतंद्रितः ॥
ददर्श देवदेवस्य मस्तके कुन्तलान्बहून् ॥ १ ॥
द्विपालषद्धान्कुटिलान्नीलान्दीर्घान्घनांस्तथा ॥
उष्णीषं शिरसस्तस्य समुद्धृत्य प्रदर्शितान् ॥ २ ॥ *
अतितुष्टः स यवनः साष्टांगं प्रणनाम तम् ॥
भूषणानि च वासांसि विठ्ठलाय ददौ मुदा ॥ १९ ॥
ब्राह्मणेभ्यो धनं भूरि वस्त्राणि च तथा ददौ ॥
दीनांधकृपणेभ्योऽपि ददौ वासोधनानिच ॥ २० ॥

विष्णुरिति । दयास्यास्तीति दयावान् तेन दयावता भवता अत्र शिलामये देहे घन इव मेघ इव प्रभा अस्यास्तीति घनप्रभः भगवान् षड्गुणैश्वर्यसंपन्नः अस्ति इति शेषः । अतः एषः शिलदेहः रक्ष्यः रक्षणीयः । शिलादेहस्य भंगे एनं त्यक्त्वा भगवान् गमिष्यतीति प्रार्थयामासुरितिभावः । सः यवनाधिपः माल्यगं माल्लगतं । माला माल्यं सौमनस्यं कंठे गुण अधीरण इत्यमरः । कुटिलः वक्रः कुंतलः केशः तं विलोक्य तान् द्विजान् इत्युवाच ॥ १४ ॥

विठ्ठलस्येति । भो द्विजाः इह अस्मिन् काले विठ्ठलस्य शिरसि कुंतलाः संति किं वदत । तदा कश्चन द्विजः स्मृतस्तत्कालं संकटपरिहारार्थं मनसि चिंतितः तं हरिं नमन् सन् मद्वाक्यं सत्यं कुर्विति प्रार्थयंश्चेत्यर्थः । विठ्ठलस्य शिरसि अहो इत्याश्चर्ये कचाः संतीति जगौ ॥ १५ ॥

इत्युक्तवंतमितिस्पष्टम् ॥ १६ ॥ ओमिति ॥ १७ ॥ प्रासादमिति ॥ १८ ॥ अतितुष्टइति ॥ १९ ॥ ब्राह्मणेभ्यइति ॥ २० ॥

---

११. '०मत्रमुम् । वाक्यमाह हरिमस्तके कचाः ' पा० मे० । * इह श्लोकद्वय कचिदधिकं दृश्यते ।

विप्रानपृच्छदेवस्य कट्यां हस्ती कुतो द्विजाः ॥
लिंगं च मस्तके कस्मादत्र चोत्तरमुच्यताम् ॥ २१ ॥
तत्रोत्तरं तदा प्रोचुः स्वस्वबुद्ध्यनुसारतः ॥
उत्प्रेक्षया स्वपद्यानि भूषयंतो द्विजोत्तमाः ॥ २२ ॥
मत्पादपंकजपरागरसातिलुब्ध-
चेता नरः सकलभूतसुहृत्तमो यः ॥
देवो भवांबुधिरयं जघनप्रमाण-
स्तस्येति वेदयति किं स नितंबपाणिः ॥ २३ ॥
यद्वा कलिंदतनयाधिकरम्यभीमा-
तीरं विलोक्य समगाद्भगवान् पुरस्तात् ॥
गोपेष्वपि प्रतिगतेषु जलप्रमाण-
माख्यापयन्निव हरिर्हि नितंबपाणिः ॥ २४ ॥

विप्रानिति । द्विजाः देवस्य विठ्ठलस्य कट्यां कटिप्रदेशे हस्ती कुतः मस्तके च लिंगं कुत इत्यपृच्छत् । अन्यस्य कस्यापि देवस्य कटिप्रदेशे हस्तौ न दृष्टौ किं च विष्णुप्रतिकृतेरेतस्याः शीर्ष्णि शिवलिंगं कुतइत्यपृच्छदित्यर्थः । तेषु तूष्णीं भूतले स्थितेषु पुनराह । अत्र मत्प्रश्ने उत्तरं उच्यतां वक्तव्यं तूष्णींभावः न युक्त इत्यर्थः ॥ २१ ॥

तत्रेति । द्विजोत्तमाः तदा स्वस्वपद्यानि उत्प्रेक्षया उत्प्रेक्षालंकारेण । उत्प्रेक्षालक्षणं कुवलयानंदे । संभावना स्यादुत्प्रेक्षा वस्तुहेतुफलात्मना । उक्तानुक्तास्पदाद्यात्र सिद्धासिद्धास्पदे परे इति । अलंकारलक्षणं तु शब्दार्थवृत्तिमनोहरसन्निवेशत्वं अलंकारत्वं । स्वस्वबुद्धेः अनुसारो अनुसरणं तेन भूषयन्तः सन्तः तत्र प्रश्ने उत्तरं प्रोचुः ॥ २२ ॥

मदिति । सः प्रसिद्धः देवः विठ्ठलः । मम यत्पादपंकजं तस्य यः परागः मकरन्दः तस्य यः रसः तस्मिन् लुब्धं सक्तं चेतश्चित्तं यस्य तथोक्तः । सकलस्य भूतस्य प्राणिमात्रस्य सुहृत्तमः यः नरः तस्य अयं भवांबुधिः । जघनं प्रमाणं यस्येति जघनप्रमाणः कटिप्रमाणः सुतर इत्यर्थः । इति नितंबपाणिः सन् वेदयति किं इत्युत्प्रेक्षा । मन्ये शंके ध्रुवं प्रायो नूनमित्येवमादिभिः । उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः इति । एवं अग्रेऽपि ज्ञेयम् ॥ २३ ॥

यद्वेति । यद्वा पक्षान्तरे भगवान् विठ्ठलः कलिन्दस्य पर्वतस्य या तनया कन्या यमुना तदपेक्षया अधिकं रम्या या भीमा तस्याः तीरं विलोक्य यमुनापेक्षया भीमायाः रम्यत्वात्तत्तीरस्याप्यतिरम्यत्वं ज्ञात्वेत्यर्थः । पुरस्तात् पूर्वं समगात् । गोपेष्वपि पश्चात्

यद्वा जरासुतजये मथुरां विहाय
यातः प्रवर्षणगिरिं सहितो बलेन ॥
दीप्तात्ततो झटिति यत्प्रससार भैमं
श्रांतस्तटं तत इदं नु नितंबपाणिः ॥ २५ ॥
यद्वा विहाय तनयान् विनयोपपन्नान्
रम्या अपि प्रियतमाः सुजना भजंतः ॥
तिष्ठंत्यनुक्रमामिमे बहवोऽयमेकः
श्रांतोऽपि तिष्ठति ततो नु नितंबपाणिः ॥ २६ ॥
यद्वा विधाय सकला अपि तोकलीलाः
संभ्रामणाख्यकुतुकं च विधातुमीशः ॥
गोपान्स्वकूर्परविलग्नकरान्विधाय
देवो विहर्तुमिव सैष नितंबपाणिः ॥ २७ ॥

प्रतिगतेषु अनुगतेषु विठ्ठलस्य परतीरे स्थितत्वात् मध्ये जलं कियदिति गोपालानां संशये जलप्रमाणं आख्यापयन्निव । हरिः नितंबपाणिः । अस्तीतिशेषः ॥ २४ ॥

यद्वेति । यद्वा हरिः बलेन संकर्षणेन सहितः सन् जरासुतस्य जरासंधस्य जये सति स्वस्य पराजये सति स्वपराजयस्तु लीला मात्रं । मथुरां विहाय प्रवर्षणगिरिं प्रवर्षणाख्यं पर्वतं यातः गतः । जरासंधेन पर्वतारूढयोस्तयोः प्राप्तिदौर्लभ्यात् पर्वते प्रदीपिते दीप्तात्ततस्तस्मात्पर्वतात् झटिति शीघ्रं भीमायाः इदं भैमं । तस्येदमित्यण् इदं । तटं प्रससार ततस्तस्मात् श्रान्तत्वात् नितंबपाणिः । अस्तीतिशेषः । लोके हि दूरदेशगमनेन श्रान्तत्वात् कट्यां करं निधाय गच्छन्तीति प्रसिद्धं । अत्र श्रीमद्भागवतस्या कथानुसंधेया ॥ २५ ॥

यद्वेति । बहवः इमे सुजनाः साधवः विनयेन नीत्या उपपन्नान् तनयान् रम्याः रमणीयाः प्रियतमा अपि विहाय अनादृत्य भजन्तः सन्तः अनुक्रमं तिष्ठन्ति । एतस्य भजने प्रहरपर्यंतं जाते अनेन कर्तव्यं मध्ये व्यवधानेन न भाव्यं इति नियमं कृत्वा देवालये तिष्ठन्ति । अयं तु विठ्ठलः एकः असहायः अतः श्रांतोपि तिष्ठति । अन्यथा स्त्रीपुत्राननादृत्य तिष्ठतां भजकानामनादरः स्यादितिभावः । ततस्तस्मान्नितंबपाणिर्नु नु वितर्के । नु पृच्छायां वितर्केचेत्यमरः ॥ २६ ॥

यद्वेति । स एषः ईशः सकला अपि तोकलीलाः बालक्रीडाः विधाय कृत्वा संभ्रामणाख्यकुतुकं बालेषु प्रसिद्धां लीलां विधातुं कर्तुं गोपान् स्वकूर्परविलग्नकरान् विधाय विहर्तुमिव क्रीडितुमिव नितंबपाणिरस्ति ॥ २७ ॥ [ सोचिलोपे चेदिति सस्यसोर्लोपः ]

---

१२. 'विहाय' पा० भे० ।

यद्वा वृकासुरभयाद्गिरिशे स्वधाम
प्राप्ते प्रतारणवशादिति तं बभाषे ॥
दत्तो वरः कटिकराग्रनिवेशरूपो
मह्यं तथेति किमु सैष नितंबपाणिः ॥ २८ ॥
यद्वा विहृत्य यमुनापुलिनेऽतिरम्ये
गोपीष्वहंकृतिमलासु तिरोहितः सन् ॥
स्कंधं यया सह ययावधिरोहणार्थ-
मस्याः सुखेन किमु सैष नितंबपाणिः ॥ २९ ॥
यद्वा चिरं जनकरूपनिजातिसेवा
भक्त्या समेत्य भगवान्परितुष्ट ईशः ॥
तं पुंडरीकमवदद्वृणु सर्वकामा-
नित्याग्रहे श्रमवशान्नु नितंबपाणिः ॥ ३० ॥
अन्यांगनाकुचतटीगतकुंकुमाक्तं
वक्षो विलोक्य सरुषि प्रियराधिकायाम् ॥

यद्वेति । सः एषः । [ सोचिलोपेचेदिति सस्यसोर्लोपः ] विष्णुः वृकासुरभयात् गिरिशे सांबे स्वधाम वैकुंठं प्राप्ते सति तथा तेन प्रकारेण त्वदीयवरप्रदानप्रकारेणेत्यर्थः । कट्यां कराग्रयोर्निवेशः कटिकराग्रनिवेशः स एव रूपं लक्षणं यस्य स कटिकराग्रनिवेशरूपः वरः मह्यं दत्तः इति प्रतारणवशात् तं बकासुरं बभाषे । कट्यां करौ स्थापयित्वा बभाषे इति हेतोः नितंबपाणिरस्ति । त्वया यथा अनुष्ठानं कृतं तथा मयाप्येतस्यानुष्ठानं कृतं मह्यं वरो दत्तः यस्य कट्यां करौ निधाय पश्यामि अहं न मृतः तथा त्वमपि प्रत्ययार्थं स्वस्यैव शिरसि पूर्वं करौ निधेहि न मरिष्यसि एतस्य पिशाचपतेर्मिथ्यावादित्वात् इति प्रतारणार्थं नितंबपाणिरित्यर्थः ॥ २८ ॥

यद्वेति । स एषः विष्णुः कृष्णावतारे अतिरम्ये यमुनापुलिने विहृत्य गोपीषु अहंकृतिः अहंकारः स एव मलो यासां तास्तथा भूतासु सतीषु । यया सह ययौ यां गृहीत्वा ययावित्यर्थः । अस्याः सुखेन स्कंधं अधिरोहणार्थं नितंबपाणिः किं । इयमपि भागवतीया कथानुसंधेया ॥ २९ ॥

यद्वेति । भगवान् ईशः चिरं चिरकालं जनकरूपस्य निजस्य स्वस्य अतिसेवा तद्रूपा या भक्तिस्तया परितुष्टः सन् । ईश्वरस्य जनकहृदये स्थितत्वे प्रमाणं गीतासु अहमात्मा गुडाकेश सर्वभूताशयस्थितः । अहमादिश्च मध्यं च भूतानामंत एव चेति । तं पुण्डरीकं सर्वकामान् वृणु इत्यवदत् । तस्य न वृणोमीत्याग्रहे श्रमवशात् नितंबपाणिः । एवं कटिपाणित्वमुत्प्रेक्ष्य मस्तके लिंगमुत्प्रेक्षते ॥ ३० ॥

तप्तो वियोगदहनेन नु चंद्रचूडं
गंगाधरं हरिरयं शिरसा बिभर्ति ॥ ३१ ॥
यद्वा स्मरोद्भटपिशाचनिपीडितात्मा
गोपांगना अपि सतीः कुलटां च भुक्त्वा ॥
पत्नीश्चकार बहुशो न तथापि मुक्तः
कामांतकं हरिरयं शिरसा बिभर्ति ॥ ३२ ॥
यद्वा स्वदर्शनसमागतमीश्वरं तं
गंतुं पुनर्निजगृहं त्वरयंतमीशम् ॥
भैमाज्जलात्स्वयमयं प्रणयेन शीघ्र-
मुत्तारयन्निव हरं शिरसा बिभर्ति ॥ ३३ ॥
यद्वाशुतोषगिरिजापतिभैमलिंग-
पूजां विधाय महतीमतिभक्तियुक्तः ॥
उत्सर्जनार्थमिव भैमजलेऽतिरम्ये
लिंगं स्वयं हरिरयं शिरसा बिभर्ति ॥ ३४ ॥

अन्येति । अयं हरिः अन्या या अंगना युवती तस्याः कुचतटीगतं यत्कुंकुमं तेन आक्तं चिन्हितं यद्वक्षः उरःस्थलं तद्विलोक्य प्रिया चासौ राधिका च प्रियराधिका तस्यां प्रियराधिकायां रुषा रोषेण सहिता सरुट् तस्यां सरुषि सत्यां वियोगः विरहः राधासंबंधीत्यर्थः स एव दहनः अग्निः तेन तप्तः सन् तापशांत्यर्थं गंगाधरं चंद्रचूडं शिरसा बिभर्ति । अधिकरणस्य करणत्वविवक्षया तृतीया । उत्प्रेक्षापरिकरयोः संसृष्टिः । अलंकारः परिकरः साभिप्राये विशेषणे । सुधांशुकलितोत्तंसस्तापं हरतु वः शिव इति लक्षणात् ॥ ३१ ॥

यद्वेति । अयं हरिः विठ्ठलः । स्मरः कामः । कामः पंचशरः स्मरः इत्यमरः । स एव उद्भटः क्रूरः पिशाचः तेन निपीडितः आत्मा मनो यस्य तथा भूतः सन् । सतीः पतिव्रताः गोपानां अंगनाः भुक्त्वा कुलटां कुब्जां च भुक्त्वा कामशांत्यभावे बहुशः शताधिकषोडशसहस्रसंख्याः पत्नीः चकार । तथापि तेनेतिशेषः । न मुक्तः न त्यक्तः । अतः कामस्य अंतकं सांबं शिरसा बिभर्ति । अत्रापि उत्प्रेक्षापरिकरयोः संसृष्टिः ॥ ३२ ॥

यद्वेति । अयं हरिः स्वदर्शनाय समागतः स्वदर्शनसमागतः तं प्रसिद्धं पुनर्निज-गृहं गन्तुं त्वरयंतं त्वरां कुर्वंतं ईशं ऐश्वर्यसंपन्नं हरं सांबं भैमात् भीमायाः इदं भैमं तस्मात् अतिभयंकरादित्यर्थः । जलात् स्वयमेव ननु अन्येन प्रणयेन प्रीत्या शीघ्रं सत्वरं उत्तारयन्निवेत्युत्प्रेक्षा । शिरसा बिभर्ति ॥ ३३ ॥

यद्वेति । अयं हरिः अतिभक्तियुक्तः सन् महतीं श्रेष्ठां । आशु शीघ्रं तोषो यस्येति

यद्वा शिवं शिवरतं च सदा द्विषंति
ये वैष्णवाः स्मृतिशतैरपि बोध्यमानाः ॥
भेदो ममास्य च नहीति विबोधनार्थं
मन्ये हरं हरिरयं शिरसा बिभर्ति ॥ ३५ ॥
यद्वा मदीयभजनादपरं न किंचिद्
विन्दंति ये भवजलं कटिदघ्नमेषाम् ॥
आवेदयन् शपथपूर्वमयं नु देवो
गंगाधरं हरिरयं शिरसा बिभर्ति ॥ ३६ ॥
यद्वा निजेक्षणसमागतभक्तसंघै-
रापूरितेऽखिलगृहे सकलत्रपुत्रे ॥
शंभौ समागतवति स्थितिभूम्यभावात्
प्रीत्या हरं हरिरयं शिरसा बिभर्ति ॥ ३७ ॥
यद्वा विवाहविहिते निखिलेऽपि वृत्ते
वध्वाः प्रवेशसमये स्वकुलप्रचारम् ॥

आशुतोषः स चासौ गिरिजापतिश्च आशुतोषगिरिजापतिः । तस्य यद्वा इमं पार्थिवं लिंगं तस्य पूजां विधाय कृत्वा । अतिरम्ये भैमजले उत्सर्जनार्थमिव स्वयं लिंगं शिरसा बिभर्ति ॥ ३४ ॥

यद्वेति । स्मृतिशतैः अपि शब्दात् श्रुतिभिः बोध्यमानाः ये केचन वैष्णवाः शिवं सांबं शिवरतं शिवभक्तं सदा द्विषन्ति । मम अस्य शिवस्य* भेदः न नास्ति इति हीति निश्चयेन तेषां विबोधनार्थं हरं शिरसा बिभर्ति इति अहं मन्ये । इत्युत्प्रेक्षा ॥ ३५ ॥

यद्वेति । अयं देवः मदीयभजनात् अपरं किंचिदपि ये न विदंति तेषां भवजलं कटिप्रमाणं कटिदघ्नं । प्रमाणे द्वयसच् दघ्नञ् मात्रच इति दघ्नञ् प्रत्ययः । इति शपथपूर्वं आवेदयन् कथयन् सन् इमं गंगाधरं शिरसा बिभर्ति नु । अत्रापि उत्प्रेक्षा परिकरयोः संसृष्टिः ॥ ३६ ॥

यद्वेति । अयं हरिः आषाढ्यां निजेक्षणाय निजावलोकनाय समागताः ये भक्त-संघास्तैः अखिलगृहे अखिलदेवालये आवृते व्याप्ते सति । कलत्रपुत्राभ्यां पार्वतीगणेशाभ्यां सहितः सकलत्रपुत्रः तस्मिन् शंभौ समागतवति सति । स्थितेः अवस्थानस्य या भूमिः तस्याः अभावात् प्रीत्या हरं शिरसा बिभर्ति ॥ ३७ ॥

यद्वेति । अयं हरिः निखिले संपूर्णे विवाहे पार्वतीपाणिग्रहणे विहितं अवश्यं कर्त-

११. 'केचन' पा० भे० । * 'विष्णोश्च' इति मूलग्रंथे वर्तते तन्न प्रामाणिकम् ।

संनर्तनाख्यमपि कर्तुमिमं शिवाद्यं
पौत्रं ध्रुवं हरिरयं शिरसा बिभर्ति ॥ ३८ ॥
ब्राह्मणोक्तं वचः श्रुत्वा संतुष्टतरमानसः
ययावग्रे स यवनो नृसिंहपुरमुत्तमम् ॥ ३९ ॥
ततोऽसौ यवनाधीशो नीराभीमरथीगतम् ॥
नृसिंहादिपुरं यातः प्रतिमास्फोटनोद्यतः ॥ ४० ॥
वृश्चिकोरगसंकाशान् कीटान् प्राणापहारकान् ॥
देवालयाद्विनिर्यातान् दृष्ट्वाग्रे प्रययौ बहून् ॥ ४१ ॥
सांबादीनां यत्र यत्र सान्निध्यं प्रतिमासु हि ॥
देवतानां स तास्तास्तु प्रणम्याग्रे ययौ खलः ॥ ४२ ॥
शंभौ दिवमिते शाहौ यवनेन समं गते
राजारामो भूमिमिमामपालयदधीश्वरः ॥ ४३ ॥
ततस्तस्य सुतो नाम्ना शिवो राजाभवत्किल
सोऽपि भूमिमिमां सर्वां पूर्ववत्समपालयत् ॥ ४४ ॥
यवनाधिपवारिदागतप्रियतात्वारिचयोक्षितश्चिरम् ॥
नरनाथतनूद्भवस्तरुर्ववृधे तत्तनयांकभूगतः ॥ ४५ ॥
सविवाहमकारयाच्छिशोस्तनुजायाः किल तस्य बंधुभिः ॥
अतुलांबररत्नभूषणं गजवाजिप्रभृति प्रदाय च ॥ ४६ ॥

ध्यं तस्मिन् वृत्ते जाते । वध्वाः पार्वत्याः प्रवेशो गृहप्रवेशस्तस्य यः समयः तस्मिन् स्वकुलस्य यः प्रचारः आचारः तं संनर्तनाख्यमपि कर्तुं इमं शिवया पार्वत्या आद्यं पौत्रं सांबं शिरसा बिभर्ति ध्रुवं । दाक्षिणात्यास्तु विवाहे वृत्ते वधूप्रवेशकाले वधूवरौ कट्योर्गृहीत्वा स्वकुलदेवतानामग्रहणपूर्वकं नृत्यंतीति प्रसिद्धं । तदत्रानुसंधेयं । विष्णोः सांबः पौत्रस्तु भागवते । विष्णोः पुत्रो ब्रह्मा तस्य पुत्रः सांब इति तृतीयस्कंधे स्पष्टम् ॥ ३८ ॥ ब्राह्मणोक्तमिति ॥ ३९ ॥ ततोसाविति ॥ ४० ॥ वृश्चिकेति स्पष्टम् ॥ ४१ ॥ सांबादीनामिति ॥ ४२ ॥ ननु शंभौ दिवं गते शाहौ च यवनाधीशेन नीते दक्षिणदिग्राज्यं केनाकारीत्यत्राह द्वाभ्याम् । शंभाविति । राजाराम इत्येकं पदं संज्ञात्वात् सुपोधातुप्रातिपदिकयोरितिसुब्लुक् न ॥ ४३ ॥ ततस्तस्येति ॥ ४४ ॥ पुनश्चप्रासंगिकं समाप्य शाहोरेव चारित्रमाह तत्रादौरूपकेण वर्णयति ।
यवनेति ॥ ४५ ॥ स इति । सः यवनाधीशः अंबराणि वस्त्राणि रत्नानि माणिक्यादीनि भूषणानि सुवर्णनिर्मितानि तेषां समाहारः अंबररत्नभूषणं अतुलं अनुपमं

१४. 'हर' पा० मे० । १५. 'बोक्ष्याप' पा० मे० । १६. 'खलः' पा० मे० । १७. 'जगामैवं' पा० मे० ।

यवनं तस्य कन्यां च रेमयन्स नृपात्मजः
अष्टादशसमास्तस्य निकटे निवसत्सुधीः ॥ ४७ ॥
एकदा यवनाधीशो मनसाऽचिंतयत्प्रभुः ॥
शंभुर्मया घातितोऽयं तत्सुतो मे सुतासुतः ॥ ४८ ॥
अष्टादशासौ वर्षाणि स्थितो मामनुरंजयन् ॥
कृतज्ञेन मया तस्मिन् दया कार्या दयावता ॥ ४९ ॥
इत्थं विचिंत्य स्वामात्यं सभामागत्य चाब्रवीत् ॥
शंभुसूनुं सपत्नीकं समानय ममाग्रतः ॥ ५० ॥
अमात्यः शाहुमाहेदं याहि भार्यायुतोऽचिरात् ॥
यवनाधिपतिः श्रीमान् सभायामधुना स्थितः ॥ ५१ ॥
इत्थं वदति दुष्प्रज्ञे यवनाधीशमंत्रिणि ॥
शाहोरमात्याः सर्वेऽपि तर्कयामासुरत्र ते ॥ ५२ ॥
असूर्यपश्यदारोऽयं राजा मातामहस्य हि ॥
आज्ञा तु तादृशी तत्र का विधेया प्रतिक्रिया ॥ ५३ ॥
शाहुर्दासीसुतां नाम्ना विरूपां रूपशालिनीम् ॥
भूषयामास भूषाभिर्वसनैरतुलैस्तदा ॥ ५४ ॥
शुशुभे सा शुभाचारा शुभभूषणभूषिता
रूपशीलगुणौदार्यैः सहजैः सद्गुणैर्वृता ॥*
तया स साकं यवनाधिपस्य सभामुपेत्य प्रणनाम तस्य ॥
पुरः स तस्थौ यवनेश्वरोऽपि तन्मंत्रिणं प्राह सुधीः सशंकः ॥ ५५ ॥
इयमेव वधूरमुष्य मंत्रिन्निति दिल्लीपतिराह तं विचारम् ॥
इयमेव सती नृपस्य चेत्थं नृपमंत्री निजगाद चानुवेलम् ॥ ५६ ॥
अस्या भुवस्तुरीयांशस्तुभ्यं दत्तो मयाऽधुना ॥
तत्पत्राणि समुद्राणि गृहाण जगतीपते ॥ ५७ ॥
मम दौहित्रतां प्राप्तः स्वीयादृष्टवशादसि ॥
राजमुद्रार्पितयं ते तां गृहीत्वा गृहं व्रज ॥ ५८ ॥

यत् अंबररत्नभूषणं अतुलांबररत्नभूषणं गजाः वाजिनः प्रभृति मुख्याः यस्येति गजवाजिप्रभृति । सामान्ये नपुंसकं । प्रदाय दत्वा । तनुजायाः शिशोः शाहोः इत्यर्थः । तस्य बन्धुभिः बन्धुवर्गैः करणैः विवाहं अकारयत । किलेति संभावनायाम ॥ ४६ ॥

यवनेत्यादिसर्गस्य चरमश्लोकपर्यंतं सुगमम ।

---

१८. 'रजयन्स' पा० भे० । १९. 'आमीय वाससी तस्यै भूषणानि महांति च' पा० भे० । * अयं श्लोकः कश्चिदधिकोदृश्यते ।

इत्युक्त्वा यवनाधीशो मुद्रां पत्राणि तत्पटे ॥
निधाय दंपती प्राह युवां राज्यं करिष्यथः ॥ ५९ ॥
स तं प्रणम्य सस्त्रीकस्तत्कन्यायाः गृहं ययौ ॥
नमस्कृत्य तदा तां तु जातं सर्वमवर्णयत् ॥ ६० ॥
सोवाच नृपते सर्वं मयैव विहितं हि तत् ॥
निजं देशमितो गच्छ वाहिनीसहितो नृप ॥ ६१ ॥
पंथानस्ते शिवाः संतु रक्षितात्त्वां हरिः स्वयम् ॥
इत्थं वदंत्यास्तस्यास्तु नेत्राभ्यामगमज्जलम्[२०] ॥ ६२ ॥
दानं विहीनं विफलं जलेन वदंति सर्वे मुनयस्ततः सा ॥
नेत्रोदकुंभद्वयवारिधारामवासृजच्छाहुनृपे सुपात्रे ॥ ६३ ॥
यामीति राजा निजगाद यत्सा तदुत्तरं नैव शशाक दातुम् ॥
वत्सं विना गौर्हरिणी निजेन बालेन हीनेव बभूव सा तु ॥ ६४ ॥
पुनःपुनर्नमस्कृत्य मातरं नृपतिस्तदा ॥
अश्रुपूरितनेत्रः सन् ययौ निजनिकेतनम् ॥ ६५ ॥
वादित्रभेरीमुखवाद्यघोषैः समन्वितो मागधबंदिशब्दैः ॥
गजैस्तुरंगैः पुरतः प्रयाते रथैश्च सार्धं प्रययौ ततः सः ॥ ६६ ॥
अतीत्य देशान्विविधान्नदीश्च गिरीन्निजं देशमियाय भूपः ॥
सर्वोऽपि लोकश्चिरदृष्टमेनं द्रष्टुं ययौ तोषसमन्वितः सन् ॥ ६७ ॥
तारा[२१]भिधा सा युवती पितुर्या भ्रातुः समायांतमवेक्ष्य दूतैः ॥
लोभाभिभूता गिरिदुर्गसंस्था शाहुर्नृपो[२२] नायामिति ह्यवोचत् ॥ ६८ ॥
योद्धुं प्रवृत्ता च ततः स शाहुः किमद्य कर्तव्यमिति प्रदध्यौ ॥
तदैव बल्लाल इति प्रसिद्धः श्रीवर्धनस्थः समगान्नृपेंद्रम्[२३] ॥ ६९ ॥
विहाय भूपं स तु चंद्रसेनं[२४] समागतः स्वद्रुगभूषणाख्यः ॥
संगम्य राजानमवोचदेतां[२५] चिंता न कार्या किमपीह राजन् ॥ ७० ॥
नारायणो महाबुद्धिर्लेखने कुशलः शुचिः ॥

पितुर्भ्रातुः पितृव्यस्य । राजारामस्येति यावत् ॥ युवती पत्नी ॥ ६८ ॥
इतः परं मुख्य प्रधान पूर्वजस्य बल्लालस्य समागमे कारणमाह योद्धुमिति ।
अथ मंत्रिसंज्ञस्य प्रधानस्यापि संगतौ कारणमाह नारायणमिति ।

---

२०. 'नेत्रेऽश्रुपरिपूरिते' पा० भे० । २१. 'सप्तर्षिसंस्था' पा० भे० । २२. 'शाहुर्नरेन्द्रस्त्वित्थं निजगाद वाचं' पा० भे० । २३. '०नग्राममनिवासकारी' पा० भे० । २४. 'ययौ विहायाशु स चन्द्रसेनं नृपं द्विजातिः किल कोंकणस्थः' ॥ पा० भे० । २५. '०चदेव चिं०' पा० भे० ।

रामसूनुः कोंकणस्थो वाडवप्रवरोस्त्ययम् ॥ ७१ ॥
अहं चायं गमिष्यावो राजकार्यं भवेत्क्षणात् ॥
इत्युक्त्वा राजशार्दूलं सभीरं तौ समीयतुः ॥ ७२ ॥
तारायाः पुरतः सर्वं वर्णयामासतुश्चिरम्
तारापि तं शंभुसुतं विज्ञाय प्रबलं जँगौ ॥
बल्लालद्विज राजानं सत्वरं तं समानय
बालेनानेन विप्रेंद्र तारितं राज्यमुत्तमम् ॥ ७३ ॥
तारावाक्यं तु तत् सर्वं भूपालं प्रति सोऽवैदत् ॥
शाहुराजापि सभारमागत्यापालयन्महीम् ॥ ७४ ॥
सर्वजिच्छरदि सर्वजिन्नृपो नंदपाणिरसभूमिते ( १६२९ ) शके
आसनं जनकसेवितं द्विजैरास्थितो विहितमूर्धसेचनः ॥ ७५ ॥
इति श्रीशिवकाव्ये पुरुषोत्तमपण्डितविरचिते सप्तमश्चमत्कारः ॥

---

शाहूराजा सर्वलोकप्रपालो बालः सन् योऽतोषयत्सार्वभौमम् ॥
भौमाः कामाः कामितास्तस्य चाग्रे तस्थुः सर्वे सर्वदा सर्वदस्य ॥ १ ॥
क्रोधाच्चक्रे नैव वक्त्रं कदापि वक्रं शक्रं यो विजिग्ये नयेन ॥
जेता शत्रोर्विप्रचेतोगतार्थं भूमौ राजा पूरयन्नाविरासीत् ॥ २ ॥
नोक्ता वाणी तेन नारीगणेऽपि मिथ्या नोक्ता क्वापि दीना तथैव ॥
सर्वे भूपाः सद्गुणाकृष्टचित्ताः पादद्वंद्वं नित्यमानर्चुरस्य ॥ ३ ॥

इति श्रीशिवकाव्यव्याख्यायां स्वयं कृतायां सप्तश्चमत्कारः ॥ ७ ॥

---

शाहुरिति । सर्वलोकं भूलोकं प्रपालयतीति सर्वलोकप्रपालः शाहुः शाहुसंज्ञः यः राजा बालः सन् बाल्यावस्थायामित्यर्थः । सर्वस्याः भूमेः ईश्वरः सार्वभौमः तं दिल्लीपतिं । तस्येश्वर इत्यण् । अतोषयत् । सर्वं ददातीति सर्वदः तस्य शाहोः चात् तदाश्रितानां अग्रे । भूमौ भवाः भौमाः कामिताः इच्छिताः कामाः मनोरथाः सर्वदा न तु कदाचित् तस्थुः । अनायासेनैव सकलां संपत्तिं लेभे इत्यर्थः ॥ १ ॥

क्रोधादिति । यः क्रोधात् कोपात् हेतोः वक्त्रं मुखं वक्रं नैव चक्रे । यः नयेन नीत्या शक्रं स्वर्गाधिपं विजिग्ये जितवान् । विपराभ्यां जेरिति तङ् । शत्रोः जेता । कर्तृकर्मणोः कृतीति षष्ठी । सः शाहुः विप्राणां चेतोगतो योऽर्थः तं पूरयन् सन् भूमौ आविरासीत् । कल्पवृक्ष इवेति भावः ॥ २ ॥

नेति । तेन राज्ञा वाणी वाक् नारीगणेऽपि स्त्रीसमूहेऽपि अपि शब्दात् परि-

---

२६. 'समीपं द्वौ' पा० मे० । २७. 'तथा' पा० मे० । २८. 'तारायाः वाक्यमाकर्ण्य शाहुमागत्य तज्जगौ' । पा० मे० । १. '०स्तस्युरस्तात्तस्थुः' पा० मे० ।

**वर्णाः सर्वे स्वस्वधर्मे नियुक्ता योगक्षेमं राजतो लब्धवंतः ॥**
**पुत्रैः पौत्रैर्धान्यवासःसुवर्णैस्तैराढ्यास्ते तस्य राज्ये ननंदुः ॥ ४ ॥**
**पूर्वं ये ये मृण्मयैर्दारवैश्च तुंबीपात्रैरन्नपानादि चक्रुः ॥**
**ते ते तस्मिन् राज्ञि सर्वेऽपि ताम्रै रौक्मैः पात्रै राजतैः पैत्तलैश्च ॥५॥**
**दारिद्र्याद्या कुंतले दीपपात्रे भाज्यां पुत्रे भर्तरि स्नेहहीना ॥**
**नारी सर्वा स्नेहपूरा वृता सा जाता तस्मिन् राजनि श्रीनिकेते ॥ ६ ॥**
**पूर्वं लोका माषमात्रं द्विमाषं स्वर्णं वध्वाः कंठदेशे निधाय ॥**
**चक्रुः स्वीयं ये विवाहं स्नुषाणां तेषां मुक्ता भारभूता बभूवुः ॥ ७ ॥**

हासकथास्वपि मिथ्या नोक्ता । तथैव क्वापि दीना वाणी नोक्ता । किंच सर्वे भूपाः मांडलिकाः सद्भिः गुणैराकृष्टं चित्तं येषां ते तथा भूताः सन्तः अस्य राज्ञः पादद्वंद्वं आनर्चुः ॥ ३ ॥

वर्णा इति । राज्ञ इति राजतः । पञ्चम्याः तसिल् । योगश्च क्षेमं च योगक्षेमे अनयोः समाहारः योगक्षेमं । अलब्धप्रापणं योगः लब्धरक्षणं क्षेमं । तल्लब्धवन्तः अत एव स्वस्वधर्मे नियुक्ताः सर्वे वर्णाः ब्राह्मणादयः पुत्रैः पौत्रैः धान्यवासः सुवर्णैः रत्नैः हीरकादिभिः आढ्याः सन्तः तस्य शाहोः राज्ये ननन्दुः ॥ ४ ॥

पूर्वमिति । ये ये लोकाः पूर्वं शाहुराज्यात् पूर्वं इत्यर्थः । मृदो विकारो मृण्मयानि तैः । यरोऽनुनासिकेऽनुनासिको वेत्यनुनासिके ऋवर्णान्नस्य णत्वं वाच्यमिति णत्वम् । दारुणः इमानि दारवाणि तैः । तस्येदमित्यण् । तुंबिपात्रैः अलाबूपात्रैः अन्नपानादि चक्रुः । ते ते सर्वेऽपि तस्मिन् शाहौ राज्ञि सति रौक्मैः सौवर्णैः राजतैः रौप्यैः पैतलैश्च पात्रैः अन्नपानादि चक्रुः । अतिसंपद्भराक्रान्ताः बभूवुरित्यर्थः ॥ ५ ॥

दारिद्र्यादिति । या नारी दारिद्र्यात् कुंतले केशे । जातावेकवचनं । केशेषु विषये इत्यर्थः । दीपपात्रे भाज्यां शाके पुत्रे भर्तरि च स्नेहेन तैलेन अन्यत्र स्नेहेन प्रीत्या च हीना रहिता आसीत् इति शेषः । सा सर्वा नारी श्रीनिकेते श्री निवासे तस्मिन् राजनि सति स्नेहयोः तैलप्रीत्योः यः पूरस्तेन आवृता व्याप्ता जाता । यस्याः नार्याः निर्धनत्वात् केशसंस्कारार्थं दीपार्थं शाकसंस्कारार्थं च तैलं नासीत् तथा पुत्रभर्त्रोरकिंचित्करत्वादन्नवस्त्राद्यपिदातुमसमर्थत्वात् तयोरप्रीतिरासीत् सा नारी केशसंस्कारार्थं सुगंधितैलपूरयुता तथा भर्तृपुत्रयोः धनयुतयोः अतिप्रीतियुता आसीदित्यर्थः ॥ ६ ॥

पूर्वमिति । ये लोकाः जनाः । लोकस्तु भुवने जने इति विश्वः । पूर्वं शाहुराज्यात् पूर्वं वध्वाः कंठदेशे माषप्रमाणं माषमात्रं स्वर्णं मंगलसूत्रं । प्रमाणे द्वयसज्दघ्नञ्मात्रचः इत्यादिना

---

१. 'यस्य' पा० भे० ।

विद्वद्भार्या गेहजं यद्घरट्टं नित्यं धान्यं सर्वदा संजजक्ष ॥
तस्मिन् राज्ञि श्रीयुताया गृहिण्या नैकां मुष्टिं धान्यजां तच्चखाद ॥ ८ ॥
काले काले यावनाला दुरापा येषां तेषां पायसे मंडकेषु ॥
नानाभक्ष्ये प्रीतिरासीज्जडत्वं तेष्वित्थं ते संगिरंते स्म सर्वे ॥ ९ ॥
येषां गेहे बालकानां जनन्या वीतानां वै दुग्धमासीद्दुरापम् ॥
तेषां गेहे गोमहिष्यः प्रदुग्धा अप्यत्यर्थं संक्षरंति स्म दुग्धम् ॥ १० ॥
देहस्थास्तं शत्रवो नाभ्यभूवन् का सा वार्ता कृत्रिमाणां रिपूणाम् ॥
व्याघ्राद्या ये गोमुखानां प्रसिद्धं वैरं सर्वे तत्यजुः पार्थिवेऽस्मिन् ॥ ११ ॥

मात्रच् प्रत्ययः । तदपेक्षया संपन्नास्तु द्विमाषं माषद्वयप्रमाणं स्वर्णं मंगलसूत्रं निधाय निबध्य स्वीयं स्वकीयं । गहादित्वाच्छः । विवाहं चक्रुः तेषां स्नुषाणां मुक्ताः मुक्ताफलहाराः भारभूताः बभूवुः । अतिसंपन्नत्वादिति भावः ॥ ७ ॥

विद्वदिति । वेत्तीति विद्वान् पण्डितः तस्य या भार्या स्त्री तस्याः यद्गेहं तत्र जातं विद्वद्भार्यागेहजं घरट्टं पेषणयंत्रं सर्वदा सर्वकालं नित्यं अनवकाशेन धान्यं जजक्ष पिपेष । तस्मिन् शाहौ राज्ञि सति श्रीयुतायाः संपन्नायाः तस्याः तत् घरट्टं धान्यजां एकामपि मुष्टिं न चखाद न पिपेष । विद्वद्ब्राह्मणस्त्री दारिद्र्यात्स्वोदरभरणार्थं जनस्य धान्यं मूल्येन सर्वदा पिपेष । तस्मिन् राजनि सति तु तद्भर्तू राजतो धनलाभे सति स्वधान्यमन्यस्त्रीभिरन्यगेहे अपेषयदित्यर्थः ॥ ८ ॥

काले काले इति । येषां पुरुषाणां काले काले यथाकालं यावनाला अपि दक्षिणदेशे प्रसिद्धं धान्यं दुरापाः दुर्लभाः आसन् तेषां पयसः इदं पायसं यद्वा पयसि भवं पायसं तस्मिन् पायसे मंडकेषु च नानाविधे भक्ष्ये लड्डूकेषु च अप्रीतिः आसीत् । तेषु पायसादिषु जडत्वं अस्तीति ते सर्वे संगिरंते स्म बभाषिरे ॥ ९ ॥

येषामिति । जनन्या मात्रा विगतानां रहितानां मृतमातृकाणां अपि बालकानां येषां गेहे दुग्धं दुरापं दुर्लभं आसीत् तेषां गेहे गावश्च महिषश्च गोमहिष्यः । गोसहिताः महिष्यः गोमहिष्यः इदं युक्तं अन्यथा द्वंद्वश्च प्राणितूर्यसेनांगानामिति द्वंद्वैक्यं स्यात् । प्रदुग्धा अपि प्रनिष्कासितदुग्धा अपि अत्यर्थं अत्यंतं दुग्धं सर्वदा संक्षरंति स्म ॥ १० ॥

देहस्था इति । देहे तिष्ठन्ति ते देहस्थाः शत्रवः कामादयः षट् । कामक्रोधस्तथा लोभो मदो मात्सर्यमेव च । मोहश्चेत्यरिषड्वर्ग इति शिवगीतायां । तं भूपं नाभ्यभूवन् नाक्रामन् । क्रियया निर्वृत्ताः कृत्रिमाः तेषां रिपूणां का वा वार्ता तेषां वार्तापि नासीदित्यर्थः । व्याघ्राद्याः ये प्रसिद्धाः ते सर्वेऽपि अस्मिन्पार्थिवे सति गौर्मुखं मुख्या येषां तेषां प्राणिनां वैरं तत्यजुः सहजमपि वैरं यद्भयादत्यजन् । व्याघ्रादीनां वैरमुक्तं मुहूर्तमार्तंडे । सिंहभं महिषाश्वमोतुखनकं श्वेणं च कीशावि

राज्ञाज्ञप्तौ द्वौ प्रतापो यशश्च भूमिं सर्वां निर्भयं व्यानशाते ॥
विप्रस्त्रीणां तत्सतीनां बभूव मुक्ताहारः पाणिभूषा प्रतापः ॥ १२ ॥
राज्ञा प्रतापयशसी आज्ञप्ते भूमिमंडलाक्रमणे ॥
अनयोः पुरुषो वलयं मुक्ताहारः परं गले सत्याः ॥ १३ ॥
तस्मिन्नाथे वृष्टितो राजतो वा चोराद्वन्हे रोगतो वा नराणाम् ॥
भीतिर्नासीद्भानुसूनोर्विनैषां तुर्यः कालः पूर्वकालेन तुल्यः ॥ १४ ॥
यो यो वासो गुह्यगोपं वसानो हीनोऽन्नाद्यैर्भूतवत्संचचार ॥
सोऽसौ राज्ञा दृष्टमात्रः सविद्यश्चातुर्याढ्यो रुक्मवासाः सुभूषः ॥ १५ ॥

गोव्याघ्रं बभ्रुफणीति भीरुवरयोः प्रेष्येशयोश्च त्यजेत् इति ॥ ११ ॥

राज्ञेति । राज्ञा शाहुना आज्ञप्तौ प्रतापो यशश्चेति द्वौ सर्वां भूमिं निर्भयं यथा स्यात्तथा व्यानशाते । ननुपतिव्रतानां स्त्रीणां स्पर्शे दोषस्तथा सति कथं सर्वभूमेराक्रमणं कृतमित्यत आह । प्रतापः सतीनां विप्रस्त्रीणां पाणिभूषा करवलयं सुवर्णमयं कंकणं तत् यशः मुक्ताहारः मौक्तिकमाला बभूव । प्रतापस्य सूर्योष्णसाम्यात् पीतो वर्णः यशस्तु शुभ्रवर्णं प्रतापस्य पुंस्त्वात् परांगनास्पर्शोऽयुक्तस्तस्मात् सतीकरौ सुवर्णमयकंकणरूपेण व्यानशे कंकणं क्लीबं अतो न दोषः यशस्तु नपुंसकं अतः निर्भयमेव मुक्ताहाररूपेण हृदये अवसत् मुक्तानामपि स्त्रीत्वं ॥ १२ ॥

अमुमेवार्थं गीतीवृत्तेन निबबंध । राज्ञेति । गीतिलक्षणं श्रुतबोधे । आर्यापूर्वार्धसमं द्वितीयमपि भवतियत्र हंसगतेः । छंदोविदस्तदानीं गीतिंताममृतवाणि भाषंते ॥ १३ ॥

तस्मिन्निति । तस्मिन् शाहौ नाथे सति वृष्टेरिति वृष्टितः अतिवृष्टेरनावृष्टेर्वा । यद्वा अवृष्टित इति छेदः । राजतः परचक्रात् वा । चोरात् वा । वन्हेः वा । रोगतः सकाशात् । भानुसूनोः यमाद्विना यद्वा भानुसूनोः भीतिं विना नराणां भीतिर्नासीत् । येषां नराणां तुर्यः चतुर्थः कलियुगरूपः कालः । चतुरश्छयतावाद्यक्षरलोपश्चेति साधुत्वं । पूर्वेण कलियुगात्पूर्वेण अनंतरेण द्वापारेण तुल्यः आसीत् ॥ १४ ॥

योय इति । अन्नपानाद्यैर्विहीनः गुह्यं गोपायति आच्छादयतीति गुह्यगोपं वासः वस्त्रं वस्तेऽसौ वसानः गुह्याच्छादकमात्रं वस्त्रं दधानः नत्वधिकं निर्धनत्वात् । यो यो नरः भूतेन तुल्यं भूतवत् पिशाचवत् संचचार व्यवजन्हे । विद्यया सहितः सविद्यः । चातुर्येण आढ्यः प्रसंगोपात्तभाषणकर्ता अनेन गुणिष्वेव आदरः न मूढेष्विति सूचितं । सः असौ राज्ञा दृष्टमात्रः सन् रुक्मं सुवर्णं तद्युतं वस्त्रं यस्येति रुक्मवासाः शोभनानि भूषणानि यस्येति सुभूषः सन् संचचार । राजकृपया अतीव संपन्नोऽभूदिति भावः ॥ १५ ॥

---

१. 'बभूव' पा० भे० ।

चत्वारो वा पंच वा भ्रातरश्चेतेषामेकः पूर्वमासीत्सभार्यः ॥
तस्मिन्नाथे सर्वे एवात्तदाराः केचिद्द्वाभ्यां स्त्रीचतुष्केणयुक्ताः ॥ १६ ॥
वाडवाः समयजन्निरंतरं भूरिदक्षिणमखैः सुरोत्तमम् ॥
मंगलानि च गृहे गृहेऽभवन् राज्ञि तत्र भुवनैकपालके ॥ १७ ॥
सर्वविप्रसमतां प्रदर्शयन्सर्वशाखिसचिवानकल्पयत् ॥
ब्राह्मणा अपि निजात्परादमी राजतश्च धनमापुरुत्तमम् ॥ १८ ॥
एकदा पिंगलोपाख्यं बधिराख्यं नृपोत्तमः ॥
प्रधानमब्रवीत्तूर्णं याह्युत्तरदिशं सखे ॥ १९ ॥
अन्येऽपि सचिवा यांति दिशो जेतुं ससैनिकाः ॥
त्वं श्रेष्ठोऽसि प्रधानानामतःश्रेष्ठां दिशं व्रज ॥ २० ॥
बधिरस्तमुवाचेदं राजन् वृद्धोऽस्मि सांप्रतम् ॥
वीरवर्याकुलोदीचीजये शक्तोऽस्मि नाधुना ॥ २१ ॥
राजा तद्वाक्यमाकर्ण्य बल्लालं तत्पदे तदा ॥
निवेश्य सह सैन्येन प्रेषयामास चोत्तराम् ॥ २२ ॥

चत्वार इति । पूर्वं शिवभूपात्पूर्वं चत्वारो वा पंच भ्रातरश्चेतेषां मध्ये एकः नतु ज्येष्ठ एव प्रारब्धवशात् कोऽपीति भावः । भार्यया सहितः सभार्यः आसीत् । द्रव्याभावादन्ये अविवाहिता एव आसन्नित्यर्थः । तस्मिन् शाहौ नाथे सति सर्वे भ्रातरः आत्ताः परिणीताः दारा यैस्ते आत्तदाराः आसन् । दारशब्दस्य नित्यं बहुवचनांतत्वात् एकस्या अपि भार्यायाः बोधः स्यादतः विशेषेण विवृणोति । केचित् द्वाभ्यां भार्याभ्यां केचित् स्त्रीचतुष्केण युक्ताः आसन् । नतु स्त्रीत्रयेण स्त्रीत्रयकरणे दोषश्रवणादितिभावः ॥ १६ ॥

वाडवा इति । भुवनस्य भूलोकस्य एकपालके सार्वभौमे तत्र तस्मिन् शाहौ राज्ञि सति वाडवाः ब्राह्मणाः भूरिदक्षिणमखैः सुरोत्तमं इन्द्रं समयजन् । किंच गृहे मंगलानि विवाहादीनि अभवन् ॥ १७ ॥

सर्वेति । सः शाहुः सर्वेच ते विप्राश्च सर्वविप्राः तेषु समतां साम्यं प्रदर्शयन् सन् शाखाः शाकलाद्याः सन्ति येषां ते शाखिनः । व्रीह्यादित्वादिनिः । सर्वे च ते शाखिनश्च सर्वशाखिनः सर्वशाखिनश्च ते सचिवाश्च सर्वशाखिसचिवाः तान् अकल्पयत् । अमी ब्राह्मणा अपि निजात् स्वशाखीयात् परादपि अन्यशाखवतः राजतश्च उत्तमं उत्कृष्टं धनं आपुः ॥ १८ ॥

अथ स्वकार्यार्थमानीताय बल्लालाय प्रतिज्ञातस्य प्रधानत्वाधिकारस्य दाने कारणमाह अष्टभिः एकदेत्यादिभिः ॥ १९ ॥

१. 'ब्राह्मणाः' वा० भे० । ५. '०रादमो' वा० भे० ।

आज्ञामवाप्य भूपस्य जगामोत्तरदिक्पथम् ॥
रजःपूतांश्च राजन्यान् यवनांश्च जिगाय सः ॥ २३ ॥
करतोयानदीवारि पाययित्वा तुरंगमान् ॥
अग्रे गंतुमयुक्तत्वाद्ब्राह्मणः स न्यवर्तत ॥ २४ ॥
मौक्तान् राशीन् रूप्यराशीन्नृपाणाम् ह्त्वा सर्वान् सद्यशांसीव सद्यः॥
गौक्मान् राशीन् रत्नराशींश्च तस्मै भूपायादात्तत्प्रतापानिवैपः ॥ २५ ॥
राजा तस्य प्रतापेन संनत्या वचनेन च ॥
मुख्यं प्रधानं चक्रे तं तुष्टोऽतीव कृतज्ञराट् ॥ २६ ॥
नारायणं रामसुतं कोंकणस्थं द्विजावरम् ॥
मंत्रिणं विदधे तद्वत्सत्यवाचं जितेंद्रियम् ॥ २७ ॥
बह्वृचं विप्रवर्यं च सचिवं समकल्पयत् ॥
अमात्यमपि ऋग्वेदवादिनं च तथाऽकरोत् ॥ २८ ॥
एवमाद्यष्टसचिवैः प्रजाकार्यमकारयत् ॥
लेखनाधिपतिं चक्रे परभुं नयशालिनम् ॥ २९ ॥
मत्प्रजाहिंसका एते व्याघ्राद्या इत्यसौ नृपः
प्रजाकार्यममात्येषु संस्थाप्य मृगयामगात् ॥
प्रधानसान्मर्हं कृत्वा मृगयामचरन्नृपः
मृगया राजधर्मोऽयमिति शास्त्रमनुस्मरन् ॥ ३० ॥
व्याघ्राद्या ये क्रूरसत्वास्तान्हत्वा नृपसत्तमः ॥
शुनातिचपलेनासौ धन्वी हरिणमन्वगात् ॥ ३१ ॥
मृगोतिभीतः सहसा वृक्षवृंदसमावृतम् ॥
व्याघ्रात्रासमगां‌ढ्रूपोप्यन्वगान्मृगलिप्सया ॥ ३२ ॥
विलोक्य नृपतिं व्याघ्र उत्तस्थौ व्यात्तवक्त्रकः ॥
अग्रपादाववष्टभ्य लांगूलं भ्रामयन्नि[11]जम् ॥ ३३ ॥
तदा व्यचिंतयद्राजा किमस्य विनिवर्तकम् ॥
प्रारब्धमेवशरणमिति मेने नचापरम्[12] ॥
तदा नृ[13]पः खड्गकरस्तस्थौ सिंह इवैकक: ॥
सारमेयोऽपि बलवान्तं भूपं निकषा वसत् ॥ ३४ ॥

अथ त्रिभिः श्लोकैः इतरेभ्यः मंत्र्यादिप्रधानाधिकारदानप्रकारमाह ॥ २७ ॥

---

६. '०व्यराज्ञोऽसौ' पा० भे० । ७. 'गुणालयं' पा० भे० । ८. अधिकोऽयं श्लोकः क्वचित् । ९. 'वृक्षसंघस०' पा० भे० । १०. '०गाद्राजाप्य०' पा० भे० । ११. 'स्थितः' पा० भे० । १२. अधिकोऽय श्लोकः क्वचित् । १३ 'राजा' पा० भे० ।

व्याघ्राद्राय वक्त्रं नृपतिं मृगेंद्रो यदा ह्यधावत्स तदा श्वराजः ॥
उत्पत्य भृत्वा वृषणौ स्वदद्भिर्व्यपातयत्तं भुवि दिङ्नुतः ॥ ३५ ॥
ततः सेनाधिपाः सर्वे समाजग्मुरनेकशः ॥
भूपो गृहं समागत्य भुक्त्वा तूर्णमगात्सभाम् ॥ ३६ ॥
युवराजप्रधानेषु सकलेष्वागतेषु सः ॥
सर्वानपृच्छत्किं देयमस्मै व्याघ्रविघातिने ॥ ३७ ॥
स्वस्वमत्यनुसारेण वदत्सु स नृपोत्तमः ॥
आनीय रम्यां शिबिकामध्यवेशयदीश्वरः ॥ ३८ ॥
यत्संगतो धर्ममुखाः किलार्थाः सिध्यंति मुक्तिः करगा कृती चेत् ॥
यस्तां तनुं मृत्युमुखादरक्षत् तस्मै शुनेऽदाच्छिबिकां न चित्रम् ॥३९॥
कृष्णवर्णां स समागन्नित्यं स्नातुं ययौ नृपः ॥
एकदा ब्राह्मणः कश्चित्स्नानोक्तानपठन्मनून् ॥ ४० ॥
राजा स्नात्वाब्रवीद्ब्रह्मन् का ते वांछा वदाधुना ॥
उवाच भीतभीतोऽसौ राजानं प्रति दीनवाक् ॥ ४१ ॥
वस्त्रहीनोऽस्म्यहं राजन् वस्त्रमेकं प्रदीयताम् ॥
प्रहस्य राजप्रवरो ग्राममेकमदात्प्रभुः ॥ ४२ ॥
देहीति वचनं येन नृपस्याग्रे निवेदितम् ॥
तद्वंशीयो नरोऽद्यापि नैवान्यं याचते नृपम् ॥ ४३ ॥
एवं ग्रामसहस्राणि ब्राह्मणेभ्यो ददौ नृपः ॥
युवराजप्रभृतिभिर्दापितास्ते ततः परे ॥ ४४ ॥
प्रधानयुवराजैश्च राजदत्तस्वराज्यतः ॥
दत्ता ग्रामास्ततो भिन्ना विप्रसाद्राज्यमस्य तत् ॥ ४५ ॥
का यूयं विजितामराध्वशिखरप्रासादमूर्धास्थिता
वक्त्रेंदुं निजमिंदुमंडलमहादर्शे चिरं पश्यथ ॥
हे दृष्यः सुरयानगाः शृणुत नो वृत्तं सुराधीश्वर-
श्रीजिता भुवि शाहराजे इति यस्तद्विपपत्न्यो वयम् ॥ ४६ ॥

अथ मृगयाप्रकारमाह प्रधानर्यादित्यादिदशभिः ॥ ३० ॥ अथास्य पाहूरौदार्य-
माह राजेत्यादिभिः ॥ ४१ ॥

अथास्यौदार्यं भग्यंतरेण द्वाभ्यामाह । कायूयमिति । अमराणां अध्वा मार्गः वि-
जितः रुद्धः अमराध्वा यैस्तानि विजितामराध्वानि विजितामराध्वानि शिखराणि

१३. 'राजा' पा० भे० । १४. 'ऽदात्प्रभुः' पा० भे० । १५. '०धर्मनिराग्रा०' पा० भे० । १६. '०दुनाममृणानिरत०' पा० भे० ।

तस्मिन् धनं ददति भूमिसुराः सुराश्च
पुष्टा वणिङ्निचयशिल्पिजनाश्च तुष्टाः ॥
हृष्टा च कोकपटली जलजंतवो ये ॥
रुष्टाः कुलालनिचयाः सकला विनष्टाः ॥ ४७ ॥

दानशूराग्रणीराजा कदाचिद्ग्राम्ययोषितम् ॥
ययाच मार्गे क्षुधितो यावनालीमितीर्यते ॥ ४८ ॥
मृगाननुगतः श्रांतस्तृषार्तः क्षुधितो नृपः ॥
दधिभास्करिकायुक्तां कांचिद्योषां ददर्श सः ॥ ४९ ॥
सद्यो नयंतीं भर्त्रर्थमुवाच स नृपोत्तमः ॥
क्षुधितायाद्य मे देहि भास्करीं दधिसंयुताम् ॥ ५० ॥
तथेति सा पुरस्तस्य स्थापयित्वाऽव्रसत्सती ॥
भुक्त्वा पीत्वा स पानीयमिति तुष्टोऽब्रवीत्तदा ॥ ५१ ॥
राजाहमस्मि ससारं याहि पत्या समन्विता ॥
इत्युक्त्वा तां ययौ राजा सापि याता कृषिं निजाम् ॥ ५२ ॥

येषां ते विजितामराध्वशिखराः विजितामराध्वशिखराश्च ते प्रासादाश्च विजितामराध्वशिखरप्रासादास्तेषां मूर्धानः ऊर्ध्वप्रदेशास्तेषु स्थिताः यूयं निजं वक्त्रेंदुं इंदुमंडलमहादर्शे चिरं पश्यथ काः इति देवांगनानां प्रश्नः । राजाश्रितविप्रस्त्रियः उत्तरमाहुरुत्तरार्धेन । सुरयानैः गच्छंति ताः सुरयानगाः हे देव्यः नः वृत्तं शृणुत । सुराधीश्वरः इंद्रः तस्य या श्रीः संपत् तस्याः जेता भुवि शाहुनामा राजा यः तद्विप्राणां पत्न्यः वयं अस्माकमेतादृशी संपत्तस्य संपद्वर्णनं कः करिष्यतीति भावः । संबाधातिशयोक्त्यलंकारः ॥ ४६ ॥

तस्मिन्निति । तस्मिन् शाहौ धनं ददति सति भूमिसुराः ब्राह्मणाः सुराः देवाश्च पुष्टाः प्रत्यहं सदन्नाशनेन हविर्जक्षणेन चेति भावः । वणिङ्निचयाश्च शिल्पिजनाश्च वणिङ्निचयशिल्पिजनाः तुष्टाः प्रत्यहं धनलाभादितिभावः । कोकानां चक्रवाकानां पटली समूहः हृष्टा । अत्युदारस्यास्य धनक्षये दिवसप्रतिबंधकस्य मेरोः वितरणेन राज्यभावे अस्माकं स्त्रीवियोगो नस्यादिति संतोषादिति भावः । ये जलजंतवः ते रुष्टाः । दानप्रसंगेन जलक्षये अस्माकमनवस्थानं स्यादिति मत्वेति भावः । सकलाः कुलालानां निचयाः विनष्टाः । ताम्रादिधातुमयपात्रव्यवहारे मृत्पात्रानुपयोगादिति भावः ॥ ४७ ॥

इतिहासांतरमाह नवभिः ॥ दानेत्यादिभिः ॥ ४८ ॥

---

१७. '०श्रांतः कदाचित्क्षुधि०' पा० भे० । १८. दृष्ट्वा' पा० भे० । १९. 'तक्र स०' पा० भे० । २०. '०विप्रति' पा०भे० ।

भर्त्रे सर्वं समाचख्यौ जातं यत्पथि तत्तदा ॥
कृषीवलस्तया सार्धं ययौ सभारमाशु सः ॥ ५३ ॥
प्रणम्य राजवर्यं तं स्थितस्तूष्णीं नृपाग्रतः ॥
राजा तस्मै ग्राममेकं ददौ यावद्दिवाकरः ॥ ५४ ॥
कृषीवलोतिसंतुष्टो ययौ निजनिकेतनम् ॥
एवं राजा दातृवर्यस्तत्समः कः कलाविह ॥ ५५ ॥
अष्टौ सुरा यस्य वसंति देहे प्रदीप्तवह्नेर्मुखेऽतिभक्त्या ॥
हव्यं हुतं येन ददौ स तस्मै ग्रामं किलैकं किमिदं विचित्रम् ॥ ५६ ॥
जयसिंहो वाजिमखं कृत्वा संपूज्य ऋत्विजः ॥
तेषां गृहे धनं भूरि शकटैः समवाहयत् ॥ ५७ ॥
राजाश्रितद्विजेंद्रार्थे लक्षसंख्यं धनं नृपः ॥
दत्त्वा संप्रेषयामास दूतमेकं विशारदम् ॥ ५८ ॥
सभामागत्य दूतोऽसौ राजानमवदत्सुधीः ॥
जयसिंहस्य दूतोऽहं तद्वचः शृणु भूपते ॥ ५९ ॥
चंद्रप्रभं श्यामकर्णमश्वं निर्माय यत्नतः ॥
वाजिमेधः कृतस्तस्य दक्षिणेयं तवार्थिनाम् ॥ ६० ॥
भवद्राज्ये कियान् धर्मस्तद्वृत्तं कथय प्रभो ॥
एवं दूतवचः श्रुत्वा राजा प्रोवाच तं तदा ॥ ६१ ॥
अस्योत्तरं श्वः करिष्ये दिनमेकं स्थिरो भव ॥
श्रुत्वेत्थं निर्गते दूते राजा प्रोवाच मंत्रिणः ॥ ६२ ॥
अनन्वितं ब्रुवाणेषु सर्वेषु निजमंत्रिषु ॥
प्रहस्य राजा प्रोवाच जयसिंहस्य तं चरम् ॥ ६३ ॥
विप्राधीनं राज्यमेतद्विधाय देवं शर्वं सर्वदा चिंतयामि ॥
तीर्थस्तं वत्समग्नं वसित्वा *संजल्पाहं सुस्थिरो भूतलेऽस्मि ॥ ६४ ॥

अष्टाविति । यस्य राज्ञः देहे अष्टौ इंद्रादयः सुराः वसंति । अष्टाभिश्च सुरेन्द्राणां मात्राभिर्निर्मितो नृप इति वचनादिति भावः । तस्य राज्ञः प्रदीप्तो यो वह्निः माठरः तस्य मुखे येन अतिभक्त्या हव्यं हुतं तस्मै होत्रे सः राजा एकं ग्रामं ददौ । किल इदं विचित्रं आश्चर्यं किं नेत्यर्थः ॥ ५६ ॥

इतिहासान्तरं चाह यावच्चमत्कारसमाप्ति जयसिंह इत्यादिभिः ॥ ५७ ॥

---

२१. '०ददातारा जवर्यस्त०' पा० भे० । २२. '०तद्‌तमु०' पा० भे० । * 'भुक्त्वा चाहं' पा० भे० ।

श्रुत्वा वाक्यं दूतवर्यः समेत्य सिंहस्याग्रे वर्णयामास सर्वम् ॥
अस्मिन् काले मत्समो नास्ति दाता शांतः सर्वस्तस्य सद्योऽभिमानः ॥६५॥
इति श्री शिवकाव्ये पुरुषोत्तमकविविरचिते अष्टमश्चमत्कारः ॥ ८ ॥

---

बल्लालेन त्रिधिज्ञेन प्रधानपतिनाऽखिलम् ॥
वृक्षैश्छन्नं प्रजाच्छन्नमकारि जगतीतलम् ॥ १ ॥
स्वे स्वे धर्मे रताः सर्वे निर्भया हृष्टमानसाः ॥
गृहे गृहे मंगलानि चक्रुस्त्रेतायुगे यथा ॥ २ ॥
कांकणस्था द्विजाः सर्वे यष्टिहस्ताः सपादुकाः ॥
गुह्याच्छादकवासांसि दधानास्तं समाययुः ॥ ३ ॥
नारिकेलानि पूगानि पृथुकान् तत्पुरो द्विजाः ॥
निधाय जगदुः सर्वे शृणु बल्लाल मत्सखे ॥ ४ ॥
एतादृशी ते संपत्तिर्देह्यस्मभ्यं धनं बहु ॥
एवं वदत्सु विप्रेषु ददौ तेभ्यो धनं बहु ॥ ५ ॥
द्वौ पुत्रावस्य जज्ञाते बाजिराजोऽग्रिमोऽभवत् ॥
चिमाजीति कनिष्ठोऽभूत्सूर्यचंद्राविवापरौ ॥ ६ ॥
पुण्याभिधं स्थलं सम्यक् सर्वकालसुखावहम् ॥
इति मत्वात्र वसतिं स्वीयां चक्रे प्रधानराट् ॥ ७ ॥
एवं प्रजाः पालयति प्रधानप्रवरे स वै ॥
कालः समागतो येन सद्यः प्राणैर्वियुज्यते ॥ ८ ॥
पुरंदरोपनामानमंबाजीति सुविश्रुतम् ॥
विप्रं संस्थाप्य पुण्याख्ये नगरे स्वर्ययावसौ ॥ ९ ॥
शाहुस्तद्वृत्तमाकर्ण्य मुहूर्तं दुःखितोऽभवत् ॥
बाजिराजं तस्य सुतमानाय्यादात्प्रधानताम् ॥ १० ॥
पितुरप्याधिकं लोकमपालयदलं स च ॥
ब्राह्मणा अति संतुष्टा विद्याः पेठुरहर्निशम् ॥ ११ ॥
कलाजीविजनश्चापि कला अभ्यस्तवान् सदा ॥
राज्ञः प्रीतिः प्रधानेऽस्मिन्बल्लालादधिकाऽभवत् ॥ १२ ॥
राजैकदा सदोमध्ये शृण्वत्सु सकलेषु सः ॥

श्रीशिवकाव्यव्याख्यायां स्वयंकृतायां अष्टमश्चमत्कारः ॥ ८ ॥

---

२. '...नाशः स०' पा० भे० । १. '...भ्यसनुमादायादा०' '०तत्तनयमा०' इति वा पा० भे० । २. 'सभामध्ये' पा० भे० ।

उवाच हे प्रधानेश गच्छोत्तरदिशं सखे ॥ १३ ॥
वीरान् सर्वान् विजित्याशु धनं पुष्कलमानय ॥
एते वीरास्त्वया सार्धं यास्यंति प्रथिता भुवि ॥ १४ ॥
इत्युक्त्वानर्घ्यभूषाद्यैर्वसनैश्च ह्यतोषयत् ॥
गजांश्च विंशतिं प्रादाद्रथांस्तद्द्विगुणांस्तथा ॥ १५ ॥
वाजिसादिभटांस्तेन सार्धं गजाऽयुतं ददौ ॥
पदातीनयुतं तद्वद्वीरान् युद्धविशारदान् ॥ १६ ॥
पंचाशद्भिर्यंत्रवरैरन्वितो दुंदुभिध्वनिम् ॥
कारयन् धनदस्याशां ययौ शाहोः प्रधानराट् ॥ १७ ॥
सरोग्रामकृतावासो दाभाड इति विश्रुतः ॥
अंतरंगो नृपस्यासीद्व्यंबको वाहिनीपतिः ॥ १८ ॥
अष्टायुतैर्वाजिवाहैर्वीरैर्युद्धविशारदैः ॥
युक्तोऽसौ गौतमीतीरे स्थितवान् राजकार्यकृत् ॥ १९ ॥
वाजिराजं समायांतं श्रुत्वा दूतमुवाच सः ॥
हे दूत त्वरया गत्वा वाजिराजं निवेदय ॥ २० ॥
भवतानेन मार्गेण नागंतव्यं कदाचन ॥
इत्याभाष्य निजं दूतं प्रेषयामास सत्वरम् ॥ २१ ॥
दूतः प्रधानमागत्य सेनापतिवचोऽब्रवीत् ॥
क्षणं विचार्य दूतं तं प्राह बुद्धिमतां वरः ॥ २२ ॥
अन्यमार्गेण यास्याम इति तं शंस हे चर ॥
दूते गते वाजिराजो मनसाचिंतयच्चिरम् ॥ २३ ॥
पूर्वस्यां यावनो देशः पश्चान्मृडो ह्ययं स्थितः ॥
राज्ञोऽतिवल्लभश्चायं सेनाप्यस्य महत्तरा ॥ २४ ॥
अहमत्यल्पसेनोऽस्मि सहायो नास्ति कोऽपि मे ॥
जयः कथं मम भवेत्प्राग्बधाद्यदि मे जयः ॥ २५ ॥
अप्रीतिर्मयि राज्ञः स्यात्तेनायं वा नियोजितः ॥
इति संचिंतयंस्तत्र मासमेकं व्यवस्थितः ॥ २६ ॥
त्रिवारं शाहुराजाय पत्रं प्रेषितवानसौ ॥
राज्ञा तदुत्तरं नैव लिखितं किमपि स्फुटम् ॥ २७ ॥
प्रधानाधिपतिः स्वीयं मंत्रिणं प्राह हे सखे ॥
कार्ये गुरुतरेऽकारि विचारस्त्वं सुधीः शृणु ॥ २८ ॥

---

३. '०शप्रति' पा० भे० । ४. '०नैस्तमतो०' पा० भे० । ५. 'पूर्वतो' पा० भे० ।

प्रजापालं शुचिं दांतं धीरं वीरं जितेंद्रियम् ॥
जयश्रीर्वृणुते भूपं नञाढ्यं न कदाचन ॥ २९ ॥
जयश्रीर्दुर्लभेतस्य श्वो गंतव्यमितो मया ॥
इत्थं निश्चित्य मेधावी प्रातर्भुक्त्वा ययौ पुरः ॥ ३० ॥
सेनापतेस्तु शिबिरे केचिदश्रांति शेरते ॥
वदंति केचित्सानंदं विहरंति च केचन ॥ ३१ ॥
सर्वेष्वनवधानेषु वीराः कुंतायुधास्तु ते ॥
कृपाणपाणयः केचिद्धान्विनो यंत्रिणो ययुः ॥ ३२ ॥
एककालं समागत्य सूर्ये मध्याह्नगे सति ॥
शलभा इव ते सैन्यं प्रपेतुर्जयकांक्षिणः ॥ ३३ ॥
बाजिराजः स सेनान्यं हत्वा वीरानघातयत् ॥
केचित्पलायनं चक्रुः केचिद्वक्त्रे तृणं दधुः ॥ ३४ ॥
वायुर्यथा घनानीकं क्षणान्नाशयति प्रभुः ॥
तथा प्रधानवर्योऽसौ तत्सैन्यमवधीत्क्षणात् ॥ ३५ ॥
प्रधानः सेनया युक्तो गोदां स्तुत्वा प्रणम्य च ॥
स्नात्वा भुक्त्वात्र संतुष्टस्तामुत्तीर्य पुरो ययौ ॥ ३६ ॥
मातर्गौतमि गौतमादिमुनिभिः संप्रार्थिते सर्वदा
देवैर्दारसुतैर्युतैः परमया भक्त्या सुसंपूजिते ॥
वह्निः कक्षचयं हिनस्ति शिखया योगेऽघसंघं तृणं
त्वं दूरात्स्मृतिमात्रतो हरसि यत्कस्त्वत्समस्तं वद ॥ ३७ ॥

नञ् निषेधेर्थे तेन नकारेण आढ्यं युक्तं अप्रजापालं अशुचिमित्यादीत्यर्थः ॥२९॥

स्तुत्वेत्युक्तं तमेव स्तवनप्रकारमष्टभिः पद्यैराह मातरित्यादिभिः । गौतमादिमुनिभिः सर्वदा संप्रार्थिते । दारसुतैः युतैः देवैः भक्त्या सुसंपूजिते । हे मातः गौतमि वह्निः अग्निः कक्षचयं तृणचयं । कक्षौ तु तृणवीरुधावित्यमरः । योगे संयोगे सति त्वं तु दूरादित्यर्थः । शिखया ज्वालया हिनस्ति दहति । त्वं तु दूरात्स्मृतिरेव स्मृतिमात्रं तस्मात् स्मृतिमात्रतः । मात्रं कार्त्स्न्येऽवधारणे इत्यमरः । अघसंघतृणं पापसंघरूपं तृणं । दुःखैनोव्यसनेष्वघमित्यमरः । हरसि यत् गंगागंगेति यो ब्रूयाद्योजनानां शतैरपि मुच्यते सर्वपापेभ्यो विष्णुलोकं सगच्छतीतिस्मृतेरिति भावः । तत्तस्मात्कारणात् त्वत्समः त्वत्तुल्यः अन्यः कः अस्ति तं त्वमेव वद । नास्तीतिभावः ॥ ३७ ॥

---

६. '०भीणस्तथा' पा० भे० ।

सिंहज्ये हरिपादसंभवतनुर्गंगापि पापैर्नरैः
स्वस्मिन् त्यक्तमघं निहंतुमनघे त्वामेव सा धावति ॥
कः शक्तस्तव वर्णने भुवि नरो दोषोऽयमेको महान्
देवाः पुण्यकृतो नयंति हि दिवं त्वं पापकृत्पूरुषान् ॥ ३८ ॥
गौः स्वर्गस्तमिमं ददासि जननि स्वीयाघनाशक्षमे
तस्मात्त्वां प्रवदंति वंदितपदे गोदेति विद्वज्जनाः ॥
एकैवाखिलकामदासि भवती स्वर्गंगयासंगता
किं दातेति मनो विचारयति मे मातर्नमस्ते नमः ॥ ३९ ॥
तावत्सूर्यसुतः करोति गणनां पापस्य गंगे नृणां
यावद्दृष्टिपथं न गच्छसि जगत्पापौघविध्वंसिनि ॥
गोदेति स्मरणादघौघविलयस्त्वद्दर्शनं मुक्तिदं
स्नाने किं भवतीति संशयपयःपूरे मनो मज्जति ॥ ४० ॥

सिंहज्य इति । हे अनघे । हरति पातकमिति हरिः तस्य पादः चरणः तस्मात्संभवः उत्पत्तिर्यस्याः सा हरिपादसंभवा हरिपादसंभवा तनुर्यस्याः सा हरिपादसम्भवतनुरपि सकलपातकहर्तुर्हरेरुत्पन्नापीति भावः । गंगा भागीरथी पापैः पापकर्तृभिः नरैः स्वस्मिन् त्यक्तं अघं निहंतुं दूरीकर्तुं सिंहज्ये सिंहगुरौ त्वामेवधावति आयाति । अतः तव वर्णने भुवि कः नरः शक्तः न कोपीत्यर्थः । अथ व्याजस्तुत्याह । देवाः पुण्यकृतः पुण्यपुरुषान् दिवं नयन्ति त्वं पापकृत्पुरुषान् पापकर्तॄन् नरान् दिवं नयसि अयमेव महान् एकः ते दोषः अस्ति हि । अत्र निन्दया स्तुतिर्गम्यते अतः व्याजस्तुत्यलंकारः । उक्तिर्व्याजस्तुतिर्निंदास्तुतिभ्यां स्तुतिनिन्दयोः कः स्वर्धुनिविवेकस्ते पापिनो नयसे दिवमिति लक्षणात् ॥ ३८ ॥

इदानीं गोदेति संज्ञायाः निरुक्तिपूर्वं स्तौति गौरिति । हे स्वीयानां स्वकीयानां यत् अघं पापं तस्य नाशस्तस्मिन् क्षमे समर्थे । गौः स्वर्गः । गौः स्वर्गे वृषभे रश्मौ वज्रे चंद्रमसि स्मृतः । अर्जुने नेत्रदिग्बाणभूवाग्वारिषु गौर्मतेति विश्वः । तं इमं स्वर्गं यस्माद्ददासि तस्मात्त्वां विद्वज्जनाः पंडिताः गोदेति प्रवदन्ति । इयं संज्ञा पण्डितकृता नान्यकृतेतिभावः । हे वंदितपदे जननि त्वं एकैव असहायैव अखिलकामदा असि मुक्तिमपि दातुं समर्थासीत्यर्थः । भवती स्वर्गंगया भागीरथ्या संगता सती किं दाता किं दास्यतीति मनः विचारयति मनसि सिद्धांतो न जायते अतस्ते तुभ्यं केवलं नमः । पुनश्च नमः नमस्कारः अस्तु ॥ ३९ ॥

तावदिति । हे जगत्पापौघविध्वंसिनि सूर्यसुतः यमः नृणां पापस्य तावत्गणनां करोति यावत्त्वं दृष्टिपथं दृग्गोचरत्वं न गच्छसि । तव दर्शने जाते सर्वपापं क्षयं

७. '०निस्वर्गांगसंगप्रदे' पा० भे० । ८. 'जननी' पा० भे० ।

ओघाः सप्त कृतास्त्वया जलनिधीन् सप्त प्रवेष्टुं ध्रुवं
यद्वा भूर्मुखलोकसप्तकमधोलोकांस्तथा सप्त वा ॥
आविश्य स्वमुखैः करोमि निखिलान् पुण्यानयं ते वृथा
यत्नो यत्स्मरणाद्व्रजंति हि दिवं दिव्यैर्विमानैर्युताः॥ ४१ ॥
ग्रामस्था अपि देवताः कलिभयाद्याता दिवं स्वर्णदी
स्वाख्यामर्थवतीं तथा विदधती यातेति मन्ये हरिः ॥
यास्यत्येव निजालयं भगवति त्वं नैवगच्छस्यदो
हेतुस्ते त्वदयं जनेषु सदयं नान्यो मया दृश्यते ॥ ४२ ॥

यातीत्यतः अग्रे पापगणना व्यर्थेति मन्ये इतिभावः । गोदेति स्मरणात् अघाघेविलयः त्वद्दर्शनं मुक्तिदं अनन्तरं स्नाने सति किं भवतीति मे मनः संशयः एव पयसः पूरः वारिसमूहः तत्र मज्जति । सर्वापेक्षया मुक्तिः अधिका सा तु दर्शनमात्रेण भवति स्नाने सति अग्रे किमपि नावशिष्टमतः स्नानस्य वैयर्थ्यमेव प्रतिभातीति विचारयतीति भावः ॥ ४० ॥

सप्तभिर्मुखैः समुद्रप्रवेशने उत्प्रेक्षते ओघा इति ॥ त्वया सप्त क्षारोदधिमारभ्य शुद्धोदां तान् जलनिधीन् प्रवेष्टुं सप्त ओघाः कृताः ध्रुवं शंके । निजभर्त्रा सागरेण सप्त रूपाणि धृतानि अहं तु तस्य पत्नी अतः एकेन रूपेण तत्प्रवेशे तस्य तोषो न स्यादतः सप्त रूपाणि धृत्वा प्रवेशो युक्त इति सप्त ओघाः कृताः नु इत्यर्थः । यद्वा अथवा भूः भूर्लोकः सः मुखं मुख्यो येषान्ते भूर्मुखाः भूर्मुखाश्च ते लोकाश्च भूर्मुखलोकाः तेषां सप्तकं स्वमुखैः आविश्य पुण्यान् पवित्रान् पुण्यशब्दोत्र द्रव्यवाचकः अतः पुंसि । शस्तं चाथत्रिषु द्रव्ये पापं पुण्यं सुखादि च इत्यमरः । द्रव्यं तु लिंगसंख्यान्वितं द्रव्यं करोमि अतः सप्त ओघाः कृताः ध्रुवं । यद्वा अधोलोकान् अतलादीन् सप्तस्वमुखैः आविश्य निखिलान् तान् पुण्यान् करोमि इति सप्त ओघाः कृताः ध्रुवं । प्रथमपक्षे सप्तधाभवनं युक्तं । द्वितीयतृतीयपक्षयोः सप्तधाभवनमयुक्तमित्याह । अयं ते यत्नः वृथा यत् यस्मात् हेतोः नराः स्मरणात् गंगा गंगेति नामस्मरणात् दिव्यैः विमानैः दिवं व्रजंति अतः सप्तधा भूत्वा प्रविश्य तत्तल्लोकपवित्रीकरणे श्रमो न युक्तः अनायासेनैव सिद्धेरिति भावः ॥ ४१ ॥

ग्रामस्था इति । ग्रामेषु तिष्ठन्ति ताः ग्रामस्थाः देवताः अपि शब्दात् तीर्थादिस्थाः कलेर्भयात् दिवं याताः गताः स्वः स्वर्गस्य नदी स्वर्णदी भागीरथी । स्वरव्ययं स्वर्गनाकत्रिदिवत्रिदशालयाः इत्यमरः । पूर्वपदात्संज्ञायामग इति णत्वं । स्वस्य

१. '०र्नैर्नराः' पा० भे० ।

त्वत्तटयां महिषः खरोऽथ वृषभः श्वा वा कपिर्वा नरः
नीरे वा कतमोऽपि चेज्जलचरो धर्मादिकार्थाग्र्यभुक् ॥
नान्यत्राखिलराजमंडलशिरोमालोद्गलद्धूलिका-
पूरापूरितपादपद्मयुगलो राजाधिराजोऽपि च ॥ ४३ ॥
स्नातासु स्त्रीषु गङ्गे कचकुचचरणद्वंद्वहस्तादिलिप्ताः
पाटीराद्या विमानैर्विमलतरवपुर्धारयंतो व्रजन्ति ॥
तद्वत्कौशेयकीटा दिवमथ मनुजा विस्मयः कोऽत्र मातर्
माहात्म्यं ते प्रवक्तुं दशशतवदनो नैवशक्तः कुतोऽन्ये ॥ ४४ ॥

आख्यया स्वाख्यया तां स्वनाम अर्थवतीं यथार्थां त्रिदशधुनीं कुर्वती सती याता गतैव इत्यहं मन्ये । अन्यकारादिनावकाशात् भूतार्थकत्वात्प्रयोगः । तदुक्तं सनत्कुमार-संहितायां कार्तिकमाहात्म्ये । दशवर्षसहस्राणि विष्णुस्तिष्ठति भूतले । तदर्धं जान्हवी गंगा तदर्धं ग्रामदेवता इति । यद्वा याता इदं लुटः प्रथमपुरुषैकवचनं । याता यास्यतीति मन्ये । हरिः विष्णुः निजालयं वैकुंठं यास्यत्येव । हे भगवति त्वं निजा-लयं स्वर्गं न गच्छसि अदो हेतुः अमुष्य हेतुः अदः इदं सामान्ये नपुंसकं । ते हृदयं जनेषु सदयं अयमेव हेतुः मया अन्यः हेतुः न दृश्यते । सर्वेषु गतेषु पापिजनान् कस्तारयिष्यतीति सदयतया त्वमेव तिष्ठसीति सर्वापेक्षया त्वमेव दयालुरसीत्यर्थः ॥ ४२ ॥

त्वत्तटयामिति । त्वत्तीरे । तटं त्रिषु इत्यमरः । महिषः अथवा खरः वा वृषभः वा श्वा वा कपिः वा नरः वा नीरे कतमोऽपि जलचरश्चेत् धर्मादयो ये अर्थाः पुरुषार्थाः तेषां मध्ये अंग्रे भवः अग्र्यः श्रेष्ठः मोक्षः । अग्राद्यत् । तं भुनक्तीति धर्मादिकार्था-ग्र्यभुक् भवतीति शेषः । मुक्तो भवतीत्यर्थः । अन्यत्र त्वत्तीरादन्यत्र अखिलं यद्राजमंडलं तस्य याः शिरोमालाः ताभ्यः उद्गलंत्यो या धूलिकास्तासां पूरेण आपूरितं पादपद्मयुगलं यस्य तथोक्तः राजाधिराजोऽपि सार्वभौमोऽपि धर्मादिकार्थाग्र्यभुक् मुक्तिभागित्यर्थः न भवतीति शेषः । पूर्वोक्तेतराणां धर्मादित्रयं सुलभं मोक्षस्तु अलभ्यः उत्तरार्धोक्तस्य राज्ञः धर्मादि त्रयं सुलभं मोक्षो दुर्लभ इति हेतोः पूर्वोक्ता एव श्रेष्ठाः सार्वभौमादपीति भावः ॥ ४३ ॥

स्नातास्विति । गङ्गे स्त्रीषु स्नातासु सतीषु कचकुचचरणद्वंद्वहस्तादिलिप्ताः ये पाटीराद्याः चंदनादयः विमलतरवपुः दिव्यं देह धारयंतः संतः दिवं व्रजंति । राजस्त्रीषु स्नातासु इत्युक्तत्वात् पाटीरमिश्रं तैलं केशेषु लिप्तं तेन पाटीराः कुचेषु कुंकुमं तेन तदुत्पादकाः ओषधयः चरणालिप्ताः लाक्षारसस्तेन तदुत्पादकवृक्षाः हस्तालिप्ताः चंदना इति ज्ञेयम् । तद्वत् तैलतुल्यं तद्वत् कौशेयानां कीटाः विमल-तरवपुः दिव्यं देह धारयंतः संतः दिवं व्रजंति । अथ अनंतरं मनुजाः दिवं

पुरुषोत्तमसूरिनिर्मितं निखिलाघौघहरं सुखप्रदम् ॥
मनुजाः प्रपठंति ये सदा दिवमायांति विमानसंस्थिताः ॥ ४५ ॥
उपायनकरा ये ये राजानः समुपागताः ॥
तांस्तान्तदीयस्थानेषु संस्थाप्यागात्पुरःपुरः ॥ ४६ ॥
गत्वा जयपुरं वीरं जयसिंहं रुरोध तम् ॥
वाजिमेधः कलावस्मिन् येनाकारि महत्तमः ॥ ४७ ॥
पंचाशल्लक्षसंख्यं स्वं धनं देहीत्युवाच तम् ॥
विप्रोऽसि त्वमहं राजा दक्षिणेति नृपोऽब्रवीत् ॥ ४८ ॥
बाजिराजोऽब्रवीद्राजन् ब्राह्मं क्षात्रं द्वयं मयि ॥
यथेच्छा ते तथा देहि पात्रीभूतोस्मि सांप्रतम् ॥ ४९ ॥
तुलसीपत्रसंयुक्ता मुद्रापेशीर्गजेषु सः ॥
आधाय प्रेषयामास प्रधानेशोऽग्रहीत्तदा ॥ ५० ॥
तदाश्रितं बालकृष्णं पंडिताचार्यधूर्वहम् ॥
बव्रे सोऽपि ददौ तस्मै स्नेहभंगभयान्नृपः ॥ ५१ ॥
ततो वीरान्नृपान्सर्वान्विनिर्जित्य धनं ततः
गृहीत्वागात्स सतारं नृपस्याग्रे न्यवेदयत् ॥ ५२ ॥
उद्दिश्य बाजिराजं तं श्लोकमेकं जगौ नृपः ॥
युवराजे प्रधानेषु शृण्वत्सु सदसि स्थितः ॥ ५३ ॥
जायंते बहवः सुताः स्वजननीतारुण्यनाशिंधमा-
स्तेषां ये बुधमान्यतामुपगतास्तैः पुत्रवत्ता पितुः ॥
सूते शंखनकान् पयोधिरधिकं रत्नानि शंखांश्च य-
स्तं रत्नाकरमामनंति न पुनः शंखाकरं केचन ॥ ५४ ॥

व्रजंतीत्यत्र को विस्मयः किमाश्चर्यं । वृक्षाः अपि परंपरासंबंधेन उदकस्पर्शमात्रेण दिवं व्रजंति । ये तु संकल्पपूर्वकं स्नांति मनुजास्ते दिवं व्रजंतीति अत्र किमाश्चर्य मितिभावः । अतः हे मातः ते माहात्म्यं प्रवक्तुं दशशतवदनः शेषोऽपि न शक्तः अन्ये कुतः शक्ताः स्युरिति भावः ॥ ४४ ॥

स्तोत्रपाठफलमाह पुरुषोत्तम इति ॥ ४५ ॥ प्रासंगिकं समाप्य प्रकृतमनुसरति । उपायनकरा इत्यादिभिः । उपायनानि करेषु येषां ते उपायनः कराः । उपायन मुपग्राह्यमुपहारस्तथोपदेत्यमरः । पुरःपुरः अग्रे अग्रे ॥ ४६ ॥ अकारि कृतः कर्मणि लुङि चिण् ॥ ४७ ॥ श्लोकद्वयेन राज्ञः कीर्तिं वर्णयति । कीर्तिरिति । हे प्रभो इत्यध्याहारः । संति उत्तमानि प्रजापालनादीनि यानि कर्माणि तदेव

१०. '०धामोप्यम०' पा० भे०.

राजारामपौत्रनीतो निजामन्मुलुकाभिधः ॥
यवनाधीश्वरः प्राप्तः पुण्याख्यां नगरीं प्रति ॥ ५५ ॥
बाजिराजस्तन्नगरीमौरंगाबादसंज्ञिताम् ॥
गत्वा रुरोध महतीं महत्या सेनया युतः ॥ ५६ ॥
पुण्याख्यां नगरीं त्यक्त्वा यवनः स्वपुरीं ययौ ॥
रक्षाणार्थं यदा युद्धं बभूव तुमुलं तदा ॥ ५७ ॥
कृपां परित्यज्य कृपाणपाणयः परस्परं संयुयुधू रणाजिरे ॥
शरैः शितैर्दीर्णशरीरका भटा जयैषिणस्ते भुवि शेरते स्म ॥ ५८ ॥
प्रातः समारभ्य निशामुखांतं घोरं सुराधीशपुरीप्रदं तत् ॥
भल्लैश्च खड्गैः परिघैश्च कुंतैर्बभूव युद्धं तुमुलं दिनांते ॥ ५९ ॥
शांतं रजो दिक्षु विभिन्नशीर्षैर्भूरास्तृता सा शुशुभे यथांभः ॥
परागपिंगं ससरोजमेवं रक्तप्रवाहैस्तटिनी प्रवृत्ता ॥ ६० ॥
दंतावलव्राततुरंगदेहमहीधरोत्थाल्लकरौवलाढ्या ॥
वोःसंघमीना नरशीर्षकच्छा गृध्रैश्च काकैः परिसेवितासीत् ॥ ६१ ॥
दंतींद्रसंस्थो यवनाधिपोऽसौ युद्धं समालोक्य सुविस्मितोऽभूत् ॥
वीराः प्रयाता बहुशो विनाशं मत्वा रणेनालमिति ह्यवोचत् ॥ ६२ ॥
प्रधानवर्योऽपि ततो बभाषे स्वान् वीरवर्यानलमित्यभीक्ष्णम् ॥
निवृत्तयुद्धौ यवनद्विजेन्द्रावत्रापतुः प्रीतिमतीव वीरौ ॥ ६३ ॥
आश्लिष्य चान्योन्यमवोचदेनं शिखाविहिनो यवनः प्रधानम् ॥
इतःपरं सख्यमनारतं नो भवेत्तथा वापि सदास्तु वीर ॥ ६४ ॥
तथेति चाभाष्य स बाजिराजो जगाम सतारपतेः समीपम् ॥
शिखाविहीनोऽपि ययौ स्ववासं पराक्रमं विप्रकृतं प्रशंसन् ॥ ६५ ॥
राजातितुष्टो द्विजवर्यमाह प्रधानपं हे नरवीरसिंह ॥
एकोऽशिखो नैव जितस्त्वयाऽयं लोकद्वयं चापि जितं प्रतापात् ॥ ६६ ॥
तद्वाक्यमाकर्ण्य जगाद वीरो नृपं कृतज्ञं किमियं स्तुतिर्मे ॥
भवत्समाराधितशंभुपादपद्मप्रसादोऽयमलं चकास्ति ॥ ६७ ॥
जयोऽजयो वा भवतांह राज्ञां पुण्याच्च पापाद्द्वयमत्र तूष्णीम् ॥
निमित्तमात्रं मम वाक्यमेतत् सत्यं जयोऽयं भवतः प्रसादात् ॥ ६८ ॥

मूलं यस्याः सा सत्कर्मावलिमूलका । समासांतः कः । लोकानां पञ्चयं तत्र विस्तृता । अत एव अतुला अनुपमा इयं तव कीर्तिः पुष्पप्रधाना लता पुष्पलता पुष्पवल्ली

११. 'लघुशंभुनृपाली०' पा० भे०. १२. 'विहाय' पा० भे० १३. 'मारेोपलक्षुल्यत-इत्यवोचत्' पा० भे०. १४. 'तेजिदेशे' पा० भे०. १५ 'प्रपुण्यात्' पा० भे०.

कीर्तिः पुष्पलता तवेयमतुला लोकत्रये विस्तृता
सत्कर्मावलिमूलका निशि सदा नक्षत्रपुष्पव्रजम् ॥
सूते तं परिगृह्य भानुरुषसि स्नात्वा पयोधौ ध्रुवं
नित्यं विष्णुपदे समर्पयति यन्नो[16] दृश्यतेऽसौ दिवा ॥ ६९ ॥
हे नाथाखिलराजराजिविनुत ग्लौरेष सायं सदा
कीर्तिं ते विततां सितां रविकरारक्ताभ्रपात्रे क्षिपन् ॥
तेजो वह्निमधो निधाय तदधः श्यामासहायो ध्रुवं
तारासंघमिषेण संवितनुते स्वच्छान् बताशानिमान् ॥ ७० ॥
उक्त्वा तमेवं नृपवर्यधुर्यं प्रधानवर्यः प्रययौ स्वगेहम् ॥
राजापि तुष्टः कथयन् स तस्य गुणानथांतःपुरमाविवेश ॥ ७१ ॥

॥ इति श्रीशिवकाव्ये पुरुषोत्तमकविविरचिते नवमश्चमत्कारः ॥९॥

नक्षत्राण्येव पुष्पव्रजः तं निशि रात्रौ सूते प्रसवति । भानुः कश्यपस्य मुनेः पुत्रः उषसि प्रातः पयोनिधौ स्नात्वा "अद्भ्य एष उदेतीति" श्रुतेः तं पुष्पव्रजं परिगृह्य त्रोटयित्वा विष्णोः हरेः पदे चरणे । तत्त्वं तु विष्णुपदे आकाशे । वियद्विष्णुपदं वा तु पुंस्याकाशविहायसीत्यमरः । नित्यं समर्पयति ध्रुवं नु । यद्यस्माद्धेतोः दिवा दिवसे असौ पुष्पसमूहः न दृश्यते नैर्नरिति शेषः । रूपकोत्प्रेक्षयोः संसृष्टिः ॥ ६९ ॥

हे नाथेति अखिलानां राज्ञां या राजिः पंक्तिः तया विनुत स्तुत हे नाथ स्वामिन् श्यामा रात्रिः सहायो यस्येति श्यामासहायः सहायत्वं अग्निप्रज्वालनं । श्यामा-रात्रिस्त्रिवृत्श्यामेत्यमरः । एषः ग्लौश्चंद्रः । ग्लौर्मृगांकः कलानिधिरित्यमरः । ते विततां विस्तृतां कीर्तिं सितां शर्करां रवेः कराः किरणाः तेन आरक्तं यत् अभ्रं मेघः तदेव पात्रं कटाहः तत्र क्षिपन् त्यजन् सन् तस्य पात्रस्य अधः अधो भागे तेजः प्रतापः स एव वह्निः तं निधाय ताराणां नक्षत्राणां संघः स एव मिषं छलं तेन स्वच्छान् बताशान् शर्कराविकारान् लोके प्रसिद्धान् संवितनुते विस्तारयति । ध्रुवं शंके रूपकोत्प्रेक्षयोः संसृष्टिः ॥ ७० ॥

उक्त्वेति । प्रधानवर्यः वाजिराजः नृपवर्याणां राजश्रेष्ठानां धुरं वहतीति धुर्यः श्रेष्ठः तं शाहुं । धुरोयड्ढकाविति यत्प्रत्ययः । एवं पूर्वोक्तप्रकारेण उक्त्वा स्वगेहं पुण्यनगरमित्यर्थः प्रययौ । तुष्टः स राजाऽपि तस्य प्रधानस्य गुणान् इष्टेभ्यः कथयन् सन् अंतःपुरं आविवेश । अतिहर्षेण स्वस्त्रीभ्योऽपि वर्णनायेतिभावः ॥ ७१ ॥ इति श्रीशिवकाव्यव्याख्यायां स्वयं कृतायां नवमश्चमत्कारः ॥ ९ ॥

---

१६. '॰त्यमर्चितु तेहंणार्थामिव नुयन्नो॰ ' पा॰ भे॰.

आज्ञामवाप्य राज्ञः सोऽयं दाता प्रधानवर्यस्ताम् ॥
नगरीं पुण्यां पुण्यः पुण्यजनैश्चापि संयुतां प्रययौ ॥ १ ॥
स्थित्वा तस्यां कंचित्कालं कालोपमो रिपुव्राते ॥
अमरपुरीतुल्येयं कर्तव्येत्थं व्यचिन्तयन्मनसि ॥ २ ॥
प्राच्योदीच्या दक्षिणदिक्संभूतास्तथा प्रतीच्याश्च ॥
आगत्य कीर्तिदूत्या आहूतास्तेऽवसन्नरास्तत्र ॥ ३ ॥
वणिजः शिल्पव्राते गीते वाद्ये तथैव नृत्येऽपि ॥
अधितष्ठुर्ये कुशला लब्धधनास्ते गरीयसीं नगरीम् ॥ ४ ॥
हृद्या अप्यनवद्या विद्या येषां द्विजोत्तमाः सर्वे ॥
आगत्य तेऽपि तत्र स्थितवन्तो लब्धवेतना नित्यम् ॥ ५ ॥

आज्ञेति । दाता अत एव पुण्यः सः अयं प्रधानवर्यः बाजिराजः राज्ञः शाहोः आज्ञां अवाप्य गृहीत्वा पुण्यजनैः पुण्यपुरुषैः तपस्विभिर्विरतियावत् । अपिशब्दादितरैः । संयुतां पुण्यां पुण्याख्यां नगरीं प्रययौ ॥ १ ॥

स्थित्वेति । रिपुव्राते कालोपमः यमसदृशः । कालो दंडधरः श्राद्धदेवेत्यमर : । स बाजिराजः तस्यां नगर्यां कंचित्कालं स्थित्वा अनंतरं इदं पुण्याख्या नगरी अमरपुरी अमरावती तया तुल्या अमरपुरीतुल्या कर्तव्या इत्थं अनेनप्रकारेण मनसि व्यचिंतयत् चिंतितवान् ॥ २ ॥

प्राच्योदीच्या इति । प्राच्यां पूर्वस्यां भवाः प्राच्याः उदीच्यां उत्तरस्यां भवा उदीच्याः प्राच्याश्च उदीच्याश्च प्राच्योदीच्याः । भवार्थे यत् प्रत्यये यस्येति चेति ईकारलोपः । दक्षिणा चासौ दिक्च दक्षिणदिक् । पुंवत् कर्मधारयेत्यादिना पुंवद्भावः । दक्षिणदिशि संभूताः दक्षिणदिक्संभूताः । प्रतीच्यां पश्चिमायां भवाः प्रतीच्याः । कीर्तिः दूतीव कीर्तिदूती तया कीर्तिदूत्या आहूताः आकारिताः ते नराः आगत्य उपेत्य तत्र तस्यां नगर्यां अवसन् ॥ ३ ॥

वणिज इति । वणिजः प्रसिद्धाः । शिल्पव्राते शिल्पसंघे गीते वाद्ये तथैव नृत्येऽपि ये कुशलाः ते नराः लब्धं धनं यैस्ते लब्धधनाः संतः अतिशयेन गुर्वीति गरीयसी तां महतीं अति विस्तृतामित्यर्थः । गुर्वीशब्दादीयसुनि प्रियस्थिरेत्यादिना गरादेशः । नांतत्वात् ङीप् । नगरीं पुण्याख्यां अधितष्ठुः स्थितवंतः । अधिशीङ्स्थासां कर्मेति कर्मत्वं ॥ ४ ॥

हृद्या इति । एषा न अवद्याः अनवद्याः दोषरहिताः अत एव हृद्याः हृदयप्रियाः विद्याः चतुर्दश । पुराणन्यायमीमांसाधर्मशास्त्रांगमिश्रिताः । वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश इति याज्ञवल्क्यः । आसन्निति शेषः । ते सर्वेऽपि द्विजोत्तमाः ब्राह्मणाः आगत्य लब्धं वेतनं उपजीविका यैस्ते लब्धवेतनाः संतः

भूमौ यद्यद्रत्नं निष्पन्नं सर्वतः सदा तस्य ॥
उपभोगो युक्ततरस्तस्यामेवाभवत्प्रणीतस्य ॥ ६ ॥
एवं तस्मिन्निवसति विद्यावन्तस्तथैव येऽविद्याः ॥
नानादेशनिवासा आगत्येदं समूचिरे द्विजपम् ॥ ७ ॥
योऽदाद्धनं विप्रकुलाय दाता वर्षासु मासे नभसि प्रभूतम् ॥
हतस्त्वयासौ द्विजकल्पवृक्षः सरःपुरेशः शतमन्युमान्यः ॥ ८ ॥[1]
तुल्यस्त्वमेतेन ततोऽधिकोऽसि धनेन भक्त्या द्विजदेवतासु ॥
प्रदेहि वित्तं शरणं कमन्यं व्रजेम वीरोत्तमवन्दितांघ्रे ॥ ९ ॥
श्रुत्वा तदुक्तं वचनं प्रधानस्तान्विप्रवर्यान्निजगाद मानी ॥
हे विप्रवर्याः स ददौ कियद्वो धनं सदा तद्ददतां चिराय ॥ १० ॥

तत्र तस्यां नगर्यां स्थितवंतः तस्थुः । अनेनास्य गुणज्ञत्वं दर्शितं ॥ ५ ॥

भूमाविति । भूमौ यद्यत् रत्नं वसनादिषु सर्वपदार्थेषु श्रेष्ठं । रत्नं श्रेष्ठे मणावपीति विश्वः । निष्पन्नं सर्वेभ्यः इति सर्वतः सर्वदेशेभ्यः प्रणीतस्य आनीतस्य तस्य रत्नस्य तस्यामेव नगर्यामेव सदा सर्वकालं अतिशयेन युक्त इति युक्ततरः उपभोगः अभवत् ॥६॥

अथ श्रावणे दक्षिणादानप्रकारं विवक्षुरादौ तन्निमित्तमाह एवमित्यादिभिः । एवमिति । तस्मिन् वाजिराजे एवं अनेनप्रकारेण निवसति सति नानाविधाः देशाः निवासो वसतिस्थानं येषां ते तथोक्ताः विद्यावंतः तथैव अविद्याः सर्वे आगत्य द्विजपं वाजिराजं इदं वक्ष्यमाणं समूचिरे जगदुः ॥ ७ ॥

य इति । शतं मन्यवो यज्ञाः यस्येति शतमन्युः इन्द्रः । मन्युर्दैन्ये क्रतौ क्रुधीतिविश्वः । तस्यापि मान्यः अतिसंपन्न इत्यर्थः । द्विजानां कल्पवृक्षः दाता यः सरःपुरेशः त्र्यंबकाख्यः वर्षासु पर्जन्यकाले । वर्षा अथ शरत्समा इत्यमरः । नभसि मासे श्रावणे मासे प्रभूतं धनं उत्तमं धनं । प्रभूतं प्रचुरं प्राज्यमित्यमरः । विप्रकुलाय अदात् सः असौ त्वया हतः ॥ ८ ॥

तुल्येति । हे वीरोत्तमवंदितांघ्रे त्वं धनेन वित्तेन हेतुना एतेन त्र्यंबकाख्येन तुल्यः असि द्विजदेवतासु भक्त्या हेतुना ततः तस्मात् अधिकः असि अतः वित्तं प्रदेहि । अन्यं कं शरणं व्रजेम ॥ ९ ॥

श्रुत्वेति । मानी मानवान् अचिराय शीघ्रं । चिराय चिररात्राय चिरस्याद्याश्चिरार्थका इत्यमरः ॥ १० ॥

---

१. 'मासि नभसि विप्रेभ्यो धनं यः प्रददौ बहु । स मारितस्त्वया नाथ दाभाडे इति विश्रुतः ' पा० भे०. २. ' तत्तुल्यस्त्वं धनं देहि श्रावणेऽस्मिन्नुपागते । विप्राणां पालको नान्यस्त्वत्तोऽस्ति जगतीतले ' । पा० भे०. ३. ' प्रधानवर्यस्तद्वाक्यमाकर्ण्याह द्विजोत्तमान् । किं किं ददौ स मे शत्रुस्त द्ब्रूत सकलं द्विजाः । पा० भे०.

द्विजाम्नदोचुर्नभसि प्रजेशो मृल्लिङ्गकृद्द्विपगणाय मुद्राः ॥
पंक्तिद्वयं शिष्टगणाय पञ्च दशाधिकाः पञ्चदशाथवादात् ॥ ११॥
प्रहस्य विप्रानवदद्द्विजेशो निजगृहान्यात पुनश्च काले ॥
आयात दारिद्र्यदवानलो वः शान्तो नृपाधीशधनाम्बुवृष्ट्या ॥ १२॥
द्विजातयो हृष्टतरास्तदा ते स्वीयानि गेहानि ययुर्युवानः ॥
द्विजाधिपस्तत्क्षणमेव शिल्पिव्रजं समानाय्य चकार चैतत् ॥ १३ ॥
प्रधानो ब्राह्मणान्सर्वान्नानादेशसमागतान्
मासे नभसि चायाते त्यक्त्वा तान्स व्यसर्जयत ॥
पुराद्बहिः पर्वतीति गिरिर्यो विश्रुतः क्षितौ ॥
उपत्यकायां तस्यासौ शालाश्चक्रे सुखावहाः ॥ १४ ॥
महानसानां च ततः स्नापशालास्तथा पराः ॥
जलाशयं तथा रम्यं कारयामास वीरराट् ॥

द्विजा इति । पंक्त्योर्द्वयं पंक्तिद्वयं । विंशतिसंख्याकाः । पंक्तिर्विंशतीत्यादिनानि पानितः। पंक्तिशब्दो दशवाचकः। मुद्राः रौप्यमयीः मृल्लिंगकृद्द्विपगणाय शिष्टगणाय अवशिष्टविप्रसंघाय पंच वा दश वा अधिकाः अथवा पंचदश अदात् दत्तवान् । शेषं सुगमं ॥ ११ ॥

प्रहस्येति । द्विजेशः वाजिराजः प्रहस्य तस्यातीवाल्पं दानमिति मनसि निधायेतिभावः । विप्रान् निजगृहान् स्वगृहाणि । गृहाः पुंसि च भूम्न्येवेत्यमरः । यात पुनः स्वकाले नभसि आयात आगच्छत वः युष्माकं दारिद्र्यमेव दवानलः वनाग्निः । दवदावौ वनारण्यवह्नी जन्महरौ भवौ इत्यमरः । नृपाधीशः शाहुराजः तस्य धनं तदेवाम्बु तस्य वृष्ट्या शांतो जात इति शेषः । इत्यवदत् । एतेन राज्ञ एव प्रत्यब्दं दक्षिणाप्रदाने आज्ञा स्वस्यानौद्धत्यं च सूचितं ॥ १२ ॥

द्विजातय इति । युवानः तरुणाः अनेन अग्रहं आगमिष्यंतीति सूचितं ॥ १३ ॥

---

१. 'द्विजा ऊचुर्द्विजाधीश शृणु दान रिपोर्भव । प्रतिपद्दिनमारभ्य मृत्सालिंगानि तद्गृहे । चक्रुः सहस्र सख्यानि प्रत्यहं श्रावणे द्विजाः । तेभ्यो विंशतिसंख्याका मुद्रा रौप्यमयीर्ददौ । अन्येभ्यश्चाथ विप्रेभ्यो दश वा पंच वा त्रयं । ददौ स वाहिनीनाथस्तत्तद्विद्यानुसारतः'। पा० भे०. ५. 'वाजिराजः प्रहस्यासौ विप्रानूचे तदा वचः । इतः परं सविद्यानां विप्राणां भवनेषु तु । दारिद्र्य नाम किं म्होत्येव वार्तां भविष्यति । अविद्यानां द्विजातीनां गृहे लक्ष्मीर्भवेदलम् ।' पा० भे०. ६. कश्चिदधिकोय श्लोकः ७. 'पुर्या बहिः' पा० भे०.८. '०शालाविप्रेभ्यु०' पा० भे०. ९. अधिकोयऽश्लोकः कश्चित्. १०. '०दा अन्नपानहिताबहाः' पा० भे०.

प्राकारगवुनाः सम्यगद्वारैरपि तथोत्तमैः ॥
प्राव्रुट्काले5पि सुखदास्तरुवृन्दसमाकुलाः ॥ १५ ॥
कर्णाटकस्था द्राविडा स्तथांध्रा वङ्गाश्च मारव्रतनागराश्च ॥
ये कान्यकुब्जा अपि मिश्रवर्याः समैथिला मालवका ययुस्ते॥१६॥
ये कोंकणस्थास्त्रिविधा अनूपसंस्था महागूर्जरवाश्च ये ते ॥
विद्याविहीना अपि विद्ययाढ्याः समाययुः सर्वत एव सर्वे ॥ १७॥
विद्वद्वरिष्ठं सकलागमेषु निष्णातमीर्ष्यारहितं सुवर्णे ।
लोष्ठे समत्वं दधतं दयालुं दीनावनं निर्मलचित्तवृत्तिम्॥
सर्वागमज्ञं सदयं विरक्तं तं बालकृष्णं सनयं प्रधानः ॥
विद्वत्सभानायकमेकमेव चकार भूपालसभाभिरामम् ॥ १८ ॥
शतं शतार्धं द्विशतं त्रयं वा चत्वारि वा पञ्च च षट् तथाष्ट ॥
शतानि मुद्राः प्रददौ द्विजेभ्यः परीक्ष्य विद्या निगमागमाख्याः ॥१९॥
अत्युत्तमा ये समुपागतास्तानानीय गेहं शिविकादियानैः ॥
धनं तदिच्छा परिपूर्तिकारि दत्वा प्रधानोऽगमयद्गृहांस्तान् ॥२०॥

ये कोंकणस्था इति । चित्तपावनाः काराष्ट्राः देवर्षय इति त्रिविधाः । अनूपसंस्थाः समुद्रजलमध्यस्थनगरस्थाः । सर्वतः सर्वदेशेभ्यः सर्वे समाययुः ॥ १७ ॥

अथ दक्षिणाप्रदानप्रकारमाह । सर्वागमज्ञमिति । सर्वे ये आगमाः शास्त्राणि तानि जानातीति सर्वागमज्ञः तं । आगमः शास्त्रमाम्नाय इत्यमरः । सदयं दयालुं विरक्तं लोभरहितं सुनयं नीतिमंतं अविवेकराहितमितियावत् । भूपालो जयसिंहः तस्य या सभा तां अभिरमयतीति भूपालसभाभिरामः तं । अनेन राजाश्रितत्वात् सकलचातुर्याद्यत्वं सूचितं । तं जयसिंहादानीतं बालकृष्णं विद्वत्सभानायकं एकमेव चकार ॥ १८ ॥

अथ स्वग्रामादे दक्षिणाप्रदानं द्वाभ्यामाह शतमिति । प्रधान इतिशेषः । निगमागमाख्याः वेदशास्त्ररूपाः विद्याः परीक्ष्य ज्ञात्वा द्विजेभ्यः शतं शतसंख्याः शतार्धं पंचाशत् द्विशतं त्रयं त्रिशतं वा चत्वारि शतानि वा पंच शतानि वा षट् शतानि वा अष्ट शतानि मुद्राः यथायोग्यं प्रददौ । अत्र कोटिचतुष्टयं । उत्तमाः अत्युत्तमाः मध्यमाः कनिष्टाश्चेति। तन्मध्ये उत्तमानां पूर्वश्लोकोक्ता दक्षिणा अत्युत्तमानां द्वितीयश्लोकोक्ता मध्यमकनिष्टानां तु रमणकप्रदेशे ददाविति ज्ञेयं ॥ १९ ॥

अत्युत्तमा इति ॥ २० ॥

---

११. 'विप्र०' पा० भे०. १२. '०काश्चसर्वे' '०वजाययुश्च' इति च वा पा० भे०. १३. अधिकाऽयंश्लोकः क्वचित् १४. 'विलोक्यविप्राधिपतिः प्रधानः' पा० भे०. १५. 'द्विजवर्यमार्ये' पा० भे०. १६. 'द्विजेशः' पा० भे०.

द्वार्भियुते पंक्तिमिताभिरीशः परीक्षकैर्दातृवरैर्युताभिः ॥
शिष्टद्विजेभ्यो रमणप्रदेशे ददौ धनं वीक्ष्य गुणान्स तेषाम् ॥२१॥
परीक्षकान्वैदिकशास्त्रिणश्च विद्यानुरूपं प्रददौ द्विजेभ्यः ॥
स्वयं च दाता दमितारिसंघो धनं द्विजाग्र्यपभुवि व्यत्राप्सीर्त् ॥

यामाष्टकत्रिकमखण्डमथ द्विजाग्र्य-
भूमावुवाप धनधान्यमसौ स्वधुर्यैः ॥
एतद् व्रतं नरवरः प्रतिहायनं य-
च्चक्रे तदेव तनुजा अपि चक्रिरे ते ॥ २२ ॥

एवं स लक्षप्रमितद्विजेभ्यो धनं ददौ दीनजनप्रपालः ॥
युधिष्ठिरो वाजिमखेष्वदात्तत्त्रिष्वेव दातास्य तु पुत्रपौत्राः ॥ २३ ॥

ये सूत्रमात्रधरविप्रजनास्तु तेभ्यः
पञ्च स्ववेदनिरताश्च पुराणविज्ञाः ॥

द्वार्भिरिति । ईशः सः शिष्टाः अवशिष्टा ये द्विजास्तेभ्यः तेषां गुणान् परीक्ष्य पंक्त्या दशभिर्मिताभिः परीक्षकैः पंडितैः दातृवरैश्च युताभिः द्वार्भिर्युते रमणाख्यप्रदेशे धनं वित्तं ददौ ॥ २१ ॥

यामेति । असौ द्विजाग्र्या एव भूमिस्तस्यां । यद्वा द्विजा एव अग्रभूमिः श्रेष्ठ-भूमिस्तस्यां धनं वित्तं तदेव धान्यं बीजं यामानां प्रहराणां यत् अष्टकं तस्य यत्त्रिकं चतुर्विंशतिप्रहरान् त्रीनहोरात्रानिति यावत् । अखंडं अविच्छिन्नं स्वस्य धुरं वहंति ते धुर्याः मंत्रिणस्तैः करणीभूतैः अन्यत्र धुर्यैर्बलीवर्दैः उवाप वपति स्म । नरवरः सः यत् एतत् व्रतं प्रतिहायनं प्रत्यब्दं । हायनोऽस्त्री शरत्समा इत्यमरः । चक्रे तदेव तनुजाः बल्लालादयः पुत्राः पौत्रा अपि चक्रिरे कृतवंतः ॥ २२ ॥

एवमिति । दीनजनप्रपालः सः एवं लक्षमितद्विजेभ्यः धनं ददौ । इदं दानं युधिष्ठिरापेक्षयातिरिक्तमित्याह । दाता युधिष्ठिरः त्रिष्वेव वाजिमखेषु तत् धन अदात् अस्य तु पुत्रपौत्राः अपि अदुः अतः युधिष्ठिरापेक्षयाप्याधिक्यमस्य दानस्येति भावः ॥ २३ ॥

अथ दानव्यवस्थामाह । ये सूत्रमात्रेति । ये सूत्रमात्रं यज्ञोपवीतमात्रं तस्य धराः

---

१०. 'अथावशिष्टा बहवो द्विजेन्द्राः सहस्रशस्तान्रमणाख्यभूमिम् । नीत्वा स तत्रापि च दिक्प्रसस्यद्वारेषु दातॄन्विनियोज्य मिमान् ॥' पा० मे०. १८. आधिकोऽयं श्लोकः कचित् ।

११. 'यामाष्टकत्रिकमखंडमयं द्विजेभ्यो द्वारेष्वहोदशसुमंत्रिगणैः सुशिष्टैः । मुद्राः परीक्ष्य-परीक्षितविप्रसंघेप्रत्यब्दमेवविततारनतस्समोऽस्य ः' । पा० मे०. २०. 'एवं ददौलक्षमितद्वि-जेभ्यः किंचिद्विहीनेभ्यउदारधीः सः प्रत्यब्दमेव व्रतमाचचार स्वर्गेऽपिकोऽनि व्यतनोद्द्विजेन्द्रः' ॥ पा० मे०.

आयुर्विदो गणिततत्त्वविदोऽपि ये ये
दिक्पञ्चकं रमणके प्रददौ प्रधानः ॥ २४ ॥
नार्यो नराः सुवसनाः सकला नगर्या
निर्गत्य रत्नमयभूषणभूषिताश्च ॥
हृष्टाः प्रपुष्टवरवाहनरूढदेहा
द्रष्टुं ययुः प्रतिदिनं रमणप्रदेशम् ॥ २५ ॥
या पर्वती नगरवासिजनैरुपेता
मण्युत्तमामलविभूषणभूषिताभिः ॥
ताभिः स्तनंधयसुतासुतसेविताभि-
र्नारीभिरेणशिशुदृग्भिरुशत्तमाभिः ॥ २६ ॥
मातङ्गकुम्भविगलन्मदवारिगन्ध-
लुब्धालिगुञ्जितयुतायुतवाजिशब्दैः ॥
पर्यन्तभूभवविशालरसालताल-
शालालिकोकिलकलध्वनिभासुरा या ॥ २७ ॥

ब्राह्मणचिह्नधराः न तु विद्वांस इत्यर्थः तेभ्यः पंचमुद्राः । ये स्ववेदनिरताः शाखापाठकाः ये पुराणविज्ञाः पौराणिकाः ये आयुर्विदो वैद्याः ये गणिततत्त्वविदः दैवज्ञाः तेभ्यः रमणके देशे दिशां पंचकं पंचाशन्मुद्राः ददौ ॥ २४ ॥

अथ पर्वतीं वर्णयन् रमणप्रदेशमेकेनवर्णयति । नार्य इति । प्रपुष्टानि अत एव वराणि वाहनानि अश्वादीनि तानि रूढाः देहाः एषां ते तथोक्ताः हृष्टाः सुवसनाः सुवस्त्राः रत्नमयानि यानि भूषणानि तैः भूषिताः सकलाः संपूर्णाः नराः नार्यश्च नगर्याः निर्गत्य प्रतिदिनं रमणप्रदेशं द्रष्टुं ययुः ॥ २५ ॥

अथ नवभिः श्लोकैः पर्वतीं वर्णयति । येति । नगरवासिजनैः उपेता युक्ता । मणिभिः हीरकादिभिः उत्तमानि श्रेष्ठानि अत एव अमलानि यानि भूषणानि तैः भूषिताभिः । स्तनंधयाः स्तनपानाः याः सुताः कन्यकाः सुताः पुत्राश्चैतैः सेविताभिः । आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियांत्वमी । आहुर्दुहितरं सर्वेऽपत्यं तोकं तयोः सममित्यमरः । यद्वा स्तनंधयाः ये सुतासुताः कन्यापुत्राः तैः सेविताभिः । यद्वा स्तनंधयाः सुताः यासां ताः स्तनंधयसुताः कन्यकाः स्नुषाः वा ताभिः सुतैश्च सेविताभिः । यद्वा स्तनंधयसुतानां कन्यकानां स्नुषाणां वा सुतैः पुत्रैः सेविताभिः । नारीभिः प्रौढाभिरित्यर्थः उपेता युक्ता । उशत्तमाभिः कमनीयाभिः एणशिशुदृग्भिः मुग्धाभिरित्यर्थः उपेता या सा निखिलां हरिविश्वमूर्तिं जिगायेति नवमश्लोकनान्वयः ॥ २६ ॥

मातंगेति । मातंगानां गजानां कुंभाः गंडस्थलानि तेभ्यः विगलत् यत् मदवारि

या सर्वतः परिसरित्तटिनीजलौघ-
वीचीशतोद्गतसमीरणसेव्यमाना ॥
अभ्रंलिहैरुपरि देवगृहैरुपेता
मूर्ध्नि स्फुरत्कनककुम्भरुचा विचित्रैः ॥ २८ ॥
वाम्यश्वरथद्विरदमानवयानजुष्टा
तुष्टान्तरद्विजसमूहविघोषघुष्टा ॥
योषापदाधिगतनूपुरशब्दरम्या
नम्याखिलैः स्थविरबालकसंघगम्या ॥ २९ ॥
पीनोन्नमातुलकुचस्थलरत्नमुक्ता-
मालावलिप्रचुरभाभिरुदारवाग्भिः ॥
वाराङ्गनाभिरभितोऽभिविराजमाना
हैमाम्बराभिरुपयाततडित्प्रभाभिः ॥ ३० ॥

तस्य यो गंधस्तस्मिन् लुब्धाः ये अलयः तेषां यद्गुंजितं तेन युता युताः एकत्र-स्थिताः ये वाजिनः अश्वास्तेषां शब्दैः उपलक्षितेतिशेषः । यद्वा अयुतसंख्यानां वाजिनां शब्दैः उपलक्षितेतिशेषः । पर्यंतभूः प्रांतभूः तस्यां भवाः विशालाः विस्तीर्णाः ये आम्राः तालाः शालाश्च तेषां या आलिः पंक्तिः तत्र ये कोकिलाः तेषां कलध्वनिः तेन भासुरा शोभमाना । यद्वा पर्यंतभूभवविशालरसालतालशालेषु ये अलयः भ्रमराः कोकिलाश्च तेषां कलध्वनिः तेन भासुरा । यद्वा अलीनां भ्रमराणां कोकिल इव ध्वनिः अलिकोकिलध्वनिः तेन भासुरा या ॥ २७ ॥

येति । सर्वतः आसमंतात् परिसरंती या तटिनी नदी तस्याः यज्जलं तस्य य ओघः पूरः तस्य या वीचयस्तरंगाः । भंगस्तरंगऊर्मिर्वा स्त्रियां वीचिरथोर्मिषु इत्यमरः । तेषां शतानि तेभ्यः उद्गतो यः समीरणः वायु तेन सेव्यमाना उपरि ऊर्ध्वप्रदेशे अभ्रंलिहैः मूर्ध्नि स्फुरत्कनककुंभानां सुवर्णकलशानां रुचा कांत्या विचित्रैः देवगृहैः प्रासादैः उपेता या युक्ता ॥ २८ ॥

वाम्यीति । वाम्यः वडवाः । वालः किशोरो वाम्यश्वा वाडवा वाडवं गणे इत्यमरः । रथाः प्रसिद्धाः द्विरदाः गजाः मानवयानानि शिबिकाः तैः जुष्टा सेविता । तुष्टांतराः तुष्टचित्ताः । पर्यंतधनलाभादिरितिभावः । ये द्विजास्तेषां समूहाः तेषां विशिष्टो यो घोषः वेदघोषः तेन घुष्टा घोषयुक्ता । योषाणां स्त्रीणां यानि पदानि चरणाः तेषु अधिगतानि यानि नूपुराणि तेषां शब्देन रम्या रमणीया । अखिलैः जनैः नम्या देवालययुक्तत्वादितिभावः । स्थविराः वृद्धाः बालकास्तेषां संघेन गम्या एतेन सुप्रवेशत्वं सूचितं ॥ २९ ॥

पीनेति । पीनौ पुष्टौ उन्नतौ उच्चौ अत एव अतुलौ अनुपमौ यौ कुचौ तयोः स्थलं

या मण्डलाधिपतिराजनियुक्तविप्र-
संघैः समाश्रिततमा नटनर्तकैश्च ॥
सूतैश्च मागधजनैरपि बन्दिसंघै-
र्व्यापारनिष्ठवणिजां पटवेश्मभिश्च ॥ ३१ ॥
मालूरपूगचयदाडिमजांबवाद्यै
रंभाफलैः पनसचूतभवैः फलैश्च ॥
वैदूर्यमारकतहीरमुखैश्च रत्नै-
र्मुक्ताफलैरपि च हट्टनिवेशितैर्या ॥ ३२ ॥
देवा उपर्यपि तदा सुरयानसंस्था
यद्विप्रसंघकुतुकं प्रविलोकयन्तः ॥
तस्थुर्बलाहकसमूहतिरोहितास्ते
नेदं महेन्द्रवसताविति भाषमाणाः ॥ ३३ ॥

उरःस्थलं तत्र याः रत्नानां हीरकादीनां मुक्तानां च मालाः माल्यानि तासां आवलिः पंक्तिः तया प्रचुरा भा कांतिर्यासां ताभिः उदारा वाक् यासां ताभिः हेमानि हेममयानि अंबराणि वस्त्राणि यासां ताभिः अत एव उपयाताः प्राप्ताः याः स्तडितस्ता इव प्रभाः प्रकृष्टभायुक्ताः ताभिः वारांगनाभिः वेश्याभिः अभितः परितः विराजमाना शोभमाना ॥ ३० ॥

येति । मंडलानां ये अधिपतयो राजानः तैः नियुक्ताः ये विप्राः उभयवेतनास्तेषां संघैः समाश्रिततमा । एतेन सार्वभौमपदावाप्तिः सूचिता । नटैः नर्तकैश्च समाश्रिततमा । सूतैः पौराणिकैः मागधजनैः बंदिसंघैश्च समाश्रिततमा व्यापारनिष्ठवणिजां पटवेश्मभिश्च समाश्रिततमा या ॥ ३१ ॥

मालूरेति । मालूराणि नारिकेलानि बिल्वानि वा । मालूरः श्रीफले बिल्वे इति विश्वः । पूगानि क्रमुकाणि तेषां चयः दाडिमानि प्रसिद्धानि जांबवानि जंबुफलानि आद्यानि येषां तानि तैः फलैः पनसाः चूताश्च तेभ्यः भवैः फलैश्च युक्तेति शेषः । वैदूर्याणि विदूरात्पर्वताद्भवंति तानि वैदूर्याणि । विदुराञ् इति ञ्प्रत्ययः । मारकतानि हीराश्च मुखं मुख्याः येषां तैः रत्नैः हट्टे आपणे निवेशितैः मुक्ताफलैश्च युक्ता या ॥ ३२ ॥

देवा इति । तदा दक्षिणाप्रदानसमये सुरयानेषु विमानेषु संतिष्ठंति ते सुरयानसंस्थाः । बलाहकानां समूहे तिरोहिताः अंतर्हिताः इदं कृत्यं महेंद्रवसतौ अमरावत्यां न इति भाषमाणाः देवा अपि यत् विप्रसंघकुतुकं यस्याः पर्वत्याः विप्रास्तेषां संघस्य कुतुकं कौतुकं विलोकयंतः संतः उपरि ऊर्ध्वप्रदेशे तस्थुः स्थितवंतः ३३ ॥

नागा नगेन्द्रपदभूविवरोपयाताः
पातालतो मधुरगानविलुब्धचित्ताः ॥
यद्रम्यकौतुकविलोकनजातहर्षाः
शीर्षाणि रत्नविमलान्यधुवन्नितान्तम् ॥ ३४ ॥
सा पर्वती द्रुहिणनिर्मितवस्तुजात-
युक्ता जिगाय निखिलां हरिविश्वमूर्तिम् ॥
या कौरवेशभवने निखिलैर्नृपालै-
र्दृष्टार्जुनेन च तथा समराङ्गणे ताम् ॥ ३५ ॥
यन्त्रेषु गर्जत्सु च दीपिकासु सहस्रशो दीप्ततरासु मार्गे ॥
श्रितेषु चान्नेषु नरेषु मार्गे पश्यत्सु विप्रा नगरीं ययुस्ते ॥ ३६ ॥
राजा तु वृत्तमखिलं द्विजवक्त्रतस्त-
च्छ्रुत्वातिहर्षभरनिर्वृतमानसोऽभूत् ॥
तस्मिन्नुपागतवति प्रशशंस तं च
प्रत्यब्दमस्य कुरु वृद्धिमिति प्रावादीत् ॥ ३७ ॥

नागा इति । पातालादिति पातालतः नगेंद्रः पर्वती तस्य पदं चरणः तस्य संबंधिनी भूः । यद्वा नगेंद्रस्य पदं स्थानं तस्य संबंधिनी भूः भूमिः तस्याः विवराणि तेभ्यः उपयाताः आगताः मधुरगाने विलुब्धं चित्तं येषां ते तथोक्ताः यस्याः पर्वत्याः रम्यं यत्कौतुकं तस्य विलोकनेन जातः हर्षो येषां ते तथोक्ताः । रत्नैः मणिभिः विमलानि शीर्षाणि नितांतं अधुवन् अकंपयन् ॥ ३४ ॥

सेति । द्रुहिणः ब्रह्मा । ब्रह्मात्मभूः सुरज्येष्ठ इत्यमरः । तेन निर्मितं यद्वस्तुजातं वस्तुजातिः । जातं जात्यौघजन्मसु इत्यमरः । तेन युक्ता सा पर्वती या कौरवेशभवने धृतराष्ट्रगृहे निखिलैः नृपालैः तथा तेन प्रकारेण अर्जुनेन समरांगणे दृष्टां तां हरेः विष्णोः या विश्वमूर्तिः विश्वरूपं तां जिगाय ॥ ३५ ॥

अथ संध्यायां ब्राह्मणानां नगरप्रवेशप्रकारमाह यन्त्रेष्विति । विप्राः ब्राह्मणाः यंत्रेषु तोफासु दारुसंसर्गादितिभावः । गर्जत्सु । दारुलक्षणं । तोफालक्षणं च मूले एव स्फुटीभविष्यति । सहस्रशः दीपिकासु मार्गे नगरप्रवेशमार्गे दीप्ततरासु सतीषु । अन्नेषु श्रितेषु पाचितेषु मार्गभोजनार्थं विप्राणामितिभावः पश्यत्सु सत्सु तां नगरीं ययौ ॥ ३६ ॥

राजेति । राजा शाहुः । तत् वृत्तं दक्षिणाप्रदानरूपं तस्मिन् वाजिराजे उपागत वति सप्तारं प्राप्ते सति शंसं स्पष्टं ॥ ३७ ॥

धनिकस्य गृहे समर्पितं धनमन्यत्र यथा प्रलभ्यते ॥
द्विजपाणितले तथार्पितं धनमन्यत्र नरैरवाप्यते ॥ ३८ ॥
नानाविधानि वसनानि महाधनानि
हैमानि भूषणवराणि च मौक्तिकानि ॥
रत्नानि ताम्रमयपात्रसमूहमेके
याता निजान् जनपदान्मुदिताः प्रगृह्य ॥ ३९ ॥
कोंकणस्था द्विजाः केचित्समागत्येति तं जगुः ॥
त्वयि नाथे ब्राह्मणानां पीडायुक्ता द्विजप्रभो ॥ ४० ॥
अनूपदुर्गे यन्नाम्ना वसतीत्यभिविश्रुतम् ॥
तत्संस्था म्लेच्छसंघाता बाधन्तेऽस्मान्प्रधानप ॥ ४१ ॥
द्विजातीनां वचः श्रुत्वा कनीयांसं सहोदरम् ॥
चिमाजिसंज्ञं प्रोवाच गच्छ म्लेच्छान्निवारय ॥ ४२ ॥
स बाढमिति तद्वाक्यमादद्दे शिरसा नमन् ॥
विप्रा अपि निजान्गेहानाययुः स्वस्थमानसाः॥ ४३ ॥
अयुते द्वे पदातीनां गृहीत्वा युद्धदुर्मदः ॥
पञ्चाशच्चापि यन्त्राणि पाश्चात्यजलधिं ययौ ॥ ४४ ॥
स सागरस्य तीरे हि समात्रितयमास्थितः ॥
म्लेच्छानां नाशने युक्तिं नैवापश्यद् द्विजाधिपः ॥ ४५ ॥
अत्र युद्धं कथं कार्यं ते समुद्रे वयं भुवि ॥
मद्वीर्यस्य परीक्षार्थं ज्यायसेदं नियोजितम् ॥ ४६ ॥

वृद्धैर्हेतुमाह धनिकस्येति । अन्यत्र ग्रामांतरे अन्यत्र अन्यजन्मनि ॥ ३८ ॥

अथ विप्राणां स्वस्वदेशप्रयाणमाह नानेति । एके मुदिताः हृष्टाः संतः निजान् जनपदान् देशान् याताः गताः ॥ ३९ ॥

अथ बाजिराजस्य भ्रातुः कनीयसः चिमाजीतिप्रसिद्धस्य प्रतापं वर्णयति कोंकणस्था इत्यादिभिः षोडशैः । कोंकणस्था इति । तं बाजिराजं इति जगुः ऊचुः । इति किं त्वयि नाथे पालके सति ब्राह्मणानां पीडा युक्ता किं इति काकुः । अथवा अयुक्तेति च्छेदः ॥ ४० ॥

अनूपेति । अनूपदुर्गं । जलप्रायमनूपंस्यादित्यमरः ॥ ४१. ॥ ४२–४७ ॥

एवं मनसि विचार्य समुद्रं स्तौति त्रिभिः । हे समुद्रेति । हे समुद्र हे भगवन् हे दयानिधे हे विप्रभक्त । यद्वा विप्रभक्तो यो हरिः विष्णुः तस्य कामिनी पत्नी लक्ष्मीः तस्याः पिता जनकः । हे नदीपते । ब्राह्मणानां योर्थः प्रयोजनं । अर्थोभिदेय

२१ '०त्येदमूचिरे' पा० भे०, २२. '०वाप्यतकाचन' पा० भे०.

कृतकार्यो भवेयं चेत्प्रवेक्ष्यामि निजां पुरीम् ॥
नो चेत्प्राणान्प्रधक्ष्यामि समराग्नौ निजानहम् ॥ ४७ ॥
हे समुद्र भगवन्दयानिधे विप्रभक्तहृदिकामिनीपतेः ॥
ब्राह्मणार्थकरणोद्यताय मे देहि मार्गमधुना नदीपते ॥ ४८ ॥
कामिनीजनकवत्समं निजं स्वान्तमद्य कुरु मा पयोनिधे ॥
शीतपर्वतसुतप्रगूहनात्त्वां शरण्यमिति मन्महे वयम् ॥ ४९ ॥
शीतपर्वतसुतप्रगोपनं शालकत्वमनुसृत्य तत्कृतम् ॥
रक्षितासि यदि मामकीर्तितस्त्वं शरण्य इति तर्हि वक्ष्यसे॥ ५० ॥
एवमस्य वचनं निशम्य महावारिधिः शरणयातकामदः ॥
स्वप्न एत्य निजगाद हे द्विज ध्वस्तयाविमतिः प्रगृह्यताम् ॥ ५१ ॥
ततः समागत्य चिमाजिनामा सैन्येन सार्धं प्रणनाम वार्धिम् ॥
मार्गं ददौ तस्य विकृष्य वारि प्रमादिषु म्लेच्छगणेषु तूर्णम् ॥ ५२ ॥
युद्धं महत्तत्र बभूव सार्द्धं यामद्वयं तस्य च तैः प्रवीरैः ॥
हत्वा स तान्म्लेच्छगणान्समस्तान्पुरं विवेशापभयो द्विजेन्द्रः ॥ ५३ ॥
संस्थाप्य तत्र द्विजवर्यमेकं सुरक्षकं वीरवरैः समेतम् ॥
नौकाभिरुत्तीर्य स विप्रवर्यः पुण्याभिधां स्वां नगरीं जगाम ॥ ५४ ॥

रेवस्तुप्रयोजननिवृत्तिषु इत्यमरः । तस्य करणं आचरणं तत्र उद्यताय मे मह्यं अनेनात्यंतावश्यं मत्कार्यं कर्तव्यमिति सूचितं । अधुना मार्गं देहि ॥ ४८ ॥

कामिनीति । हे पयोनिधे कामिनीनां पत्नीनां नदीनां ये जनकाः पर्वतास्तैस्तुल्यं तद्वत् पाषाणतुल्यं कठोरमित्यर्थः । स्वांतं हृदयं मा कुरु न कर्तव्यमित्यर्थः । यद्यपि माङि लुङिति सर्वलकारापवादेन लुङा भाव्यं तथापि निषेधार्थो माशब्दोप्यस्तीति न दोषः । शीतेति । वयं शीतपर्वतो हिमालयः तस्य सुतः मैनाकस्तस्य प्रगूहनात् गोपनात् त्वां शरणे साधुः शरण्यः तं शरण्यं मन्महे जानीमः ॥ ४९ ॥

शरण्यत्वं प्रतिपादितं तत्तावन्न संभवतीत्याह शीतेति । शीतपर्वतो हिमालयः तस्य सुतस्य प्रगोपनं रक्षणं शालकत्वं श्वशुरत्वं अनुसृत्य कृतं, यदि मां अकीर्तितः सकाशात् रक्षितासि तर्हि मयेति शेषः । शरण्य इति वक्ष्यसे । वचपरिभाषणे इत्यस्मात् कर्मणि लृट् ॥ ५० ॥

एवमिति स्पष्टार्थमेतत् ॥ ५१–५४ ॥

, कुप्यमिति । कुप्यं ताम्रादि अकुप्यं हेमरूप्यादि । स्यात् कोशश्च हिरण्यं च

२३. ' ०णापरित्यक्तयाहानिनि भ्रयनाशयत्न् ' पा० भे०.

कुप्यं तथाकुप्यमपि प्रभूतं धनं ततस्त्यं यदवापि तेन ॥
सर्वं स राज्ञे गजवाजिना च निवेदयामास गुणालयाय ॥ ५५ ॥

बाजिराजस्य पुत्रौ द्वौ बभूवतुररिंदमौ ॥
ज्येष्ठो बल्लालनामाभूत् कनीयान्राघवाभिधः ॥ ५६ ॥
कनीयसस्तु तनयः सदाशिव इति स्मृतः ॥
स तु वीरः कलावस्मिन् जामदग्न्य इवाभवत् ॥ ५७ ॥
एवं प्रजाः पालयति बाजिराजे समाययौ ॥
कलिना प्रेरिता काचिद्यवनी वारकामिनी ॥ ५८ ॥
मस्तानीति समाख्याता तरुणी कोकिलस्वरा ॥
बाजिराजं समभ्येत्य ननर्त च तथा जगौ ॥ ५९ ॥
तस्या गीतेन नृत्येन रूपेण च विमोहितः ॥
कंचित्कालं तया साकं रेमे वीरवराग्रणीः ॥
तस्याः पुत्रः समजनि प्रतापनयशीलभाक् ॥
नाम्ना समशरः ख्यातस्तस्मादप्ती तथाभवत् ॥ ६० ॥
यवनीसंगमात्तस्य तपः सुस्राव संचितम् ॥
कलिस्त्वतीव हृष्टः सन्ननर्त च तथा जगौ[२७] ॥
राज्ञाज्ञप्तो बाजिराजः कौबेरीं हरितं ययौ ॥
मल्लारिणारिणा युक्तः सेनाधीशेन दुर्हृदाम् ॥ ६१ ॥

हेमरूप्ये कृताकृते । ताभ्यां यदन्यत्तत्कुप्यमित्यमरः । ततः आगतं ततस्त्यं । अव्ययात् त्यप् । अत्रापि प्राप्तं । कर्मणि लुङि चिणः परस्य लुक् ॥ ५५ ॥

अथ तयोः संततिवर्णनपूर्वकं इतिहासांतरमाह । बाजिराजस्येति ॥ ५६ ॥

अथ वेश्यायां जातं वंशमाहत्रिभिः । एवमित्यादिभिः ॥ ५८ ॥

राज्ञेति । राज्ञा शाहुना आज्ञप्तः बाजिराजः दुर्हृदां दुर्जनानां अरिणा मल्लारिणा मल्लारिनाम्ना सेनाधीशेनयुक्तः सन् कुबेरस्य इयं कौबेरी तां कौबेरीं उत्तरां । तस्ये दमित्यणिङ्ङीप् । हरितं दिशं । दिशस्तु ककुभः काष्ठा आशाश्च हरितश्चताइत्यमरः । ययौ जगाम ॥ ६१ ॥

---

२४. '०बाजिर्नाभिः संप्रेषयामास' पा० भे०. २५. 'चिमाजि संज्ञस्यसुतः' पा० भे०. २६. 'अधिकोयं श्लोकः क्वचित्' २७. 'अधिकोयं श्लोकः क्वचित्' २८. 'समाययौ बाजिराजः प्रस्थितोऽयुत्यत्तरांदिशम्' । मल्लारिरितिविख्यातं सेनान्यं सेनयान्वितम् ॥' पा० भे०.

अग्रतः प्रेषितस्तेन शूरो होल्कराभिधः ॥
उदग्दिग्राजराजानां राजीरजयदाशु सः ६२ ॥
प्राप्य तीरं चलन्नीरं रेवाया द्विजराडसौ ॥
ज्वरातुरः सन् शत्रूणां कालः कालवशं ययौ[30] ॥ ६३ ॥
पाणिपङ्करसनिशाकरोन्मिते शालिवाहनशके प्रधानपः
नर्मदामधिवसन्तनुं जहौ दीनविप्रजनपालनक्षमः ॥ *
राणुः स्थाणुपदाब्जपूजनपरः कश्चित्कुशाग्राग्रधी-
र्बालः पंकजभूपदोद्भवजनुर्धर्मं निजं चिन्तयन् ॥
आगत्य द्विजराजबाजिसचिवं भक्त्या सिषेवे सदा
राजाधीश्वरशाहुबाहुजकृपापात्रं सुगोत्रं प्रभुम्[31] ॥ ६४ ॥
प्रधानाधिपती रात्रावेकदागान्नृपगृहान् ॥
उपानहौ प्रगृह्यास्य बहिस्तथौ स बालकः ॥ ६५ ॥

अग्रतइति तेन बाजिराजेन अग्रतः अग्रे प्रेषितः शूरः होलकराभिधः होलकरोपनामा मः मल्लारिः उदीचा चासौदिक् च उदग्दिक् । पुंवत्कर्मधारयेत्यादिना पुंवद्भावः । उदग्दिशि राजराजाः राजाधीशाः । राजाहः सखिभ्यष्टच् । तेषां राजीः पंक्तीः आशु शीघ्रं अजयत् ॥ ६२ ॥

प्राप्येति । शत्रोः कालः सः स्वयं चलत् चंचलं नीरं यस्मिन् तच्चलन्नीरं रेवायाः नर्मदायाः तीरं प्राप्य ज्वरेण आतुरः अभिभूतः सन् कंचित् कालं वसन् कालवशं मरणं ययौ प्राप्तः ॥ ६३ ॥

अथ सिंहावलोकनेन तस्यैव सेनाधिपतेश्चरित्रं तद्वंशचरित्रं चाह यावत्समाप्ति । राणुरिति । स्थाणोः शिवस्य । स्थाणू रुद्र उमापतिरित्यमरः । पदाब्जं तस्य पूजनं तत्र परः आसक्तः । कुशस्य अग्रं कुशाग्रं अतिसूक्ष्मेत्यर्थः । कुशाग्राग्रमिवधीर्यस्य सः । पंकजभूर्ब्रह्मा तस्य पदं चरणः तदुद्भवः शूद्रः । पद्भ्यां शूद्रो अजायतेति श्रुतेः । तस्माज्जनुर्जननं यस्य तथोक्तः कश्चिद्राणुर्नाम बालः निजं धर्मं विप्रसेवारूपं चिंतयन् सन् । राज्ञां अधीश्वरः शाहुः तत्संज्ञो यः बाहुजः क्षत्रियः तस्य कृपायाः पात्रं । गां पृथ्वीं त्रायतेऽसौ गोत्रः । शोभनश्चासौ गोत्रश्च सुगोत्रः तं । यद्वा अपत्यं पौत्रप्रभृतिगोत्रमिति पाणिनिसंकेतितं पौत्रप्रभृति अपत्यं शोभनं

२९. 'अग्रतः प्रेषयामास स होलकरसंज्ञितम् । उदीच्य सदिशं गत्वा तत्रत्यानजयत्परान्' ॥ पा० भे०. ३०. 'स्वयं रेवातटं प्राप्य ज्वरेणातीवपीडितः । तत्रैव न्यवसत्किंचित्कालं कालवशागतः' । पा० भे०. ३१. 'राणोजीति मुनः कश्चिच्छूद्रजातिसमुद्भवः । विप्रसेवापरो धर्मः शूद्रस्येति द्विजोत्तमान् । शुश्रूषार्थं तत्पादौ पूजि चास्मादचिंतयत् । नयेनविनयेनापि शमेनच समन्वितः । पा० भे०. * अधिकोऽयं श्लोकः क्वचित्

उरोधृतसुपादुकं दृढतरं शयानं चिरं
विलोक्य सचिवाधिपः समुपहर्तुमैते यदा ॥
शशाक न तदा शिशुर्बलवता समुत्थापितो
निधाय पुर एव ते स्वयमपि प्रभोस्तस्थिवान् ॥ ६६ ॥
तदाप्रभृति बालेऽस्मिन्नस्य प्रीतिरवर्धत
गुणिन्येव गुणज्ञानां पक्षपातो न पामरे ॥ ६७ ॥
शौर्यौदार्यसमायुक्तं तं दासं विनयान्वितं
उदीचीं प्रेषयामास ससैन्यं राजकार्यकृत् ॥
सिंदेनामधरो ज्योतिःपादद्वन्द्वनिषेवकः ॥
उदीचीं स दिशं जित्वा सर्वं राज्ञे करं ददौ ॥ ६८ ॥
राणुर्वीरो दारितारातिराशिर्दाता दीनप्राणिरक्षाप्रवीणः ॥
वीणावाद्यारञ्जितस्वान्तवृत्तिर्वृत्तिं वृत्त्याहीनविप्रेष्वकार्षीत् ॥६९॥

गोत्रं यस्येति सुगोत्रः तं प्रभुं निग्रहानुग्रहसमर्थं । द्विजराजो यः वाजिनाम। सचिवः प्रधानः तं आगत्य सिषेवे सेवितवान् ॥ ६४ ॥

प्रधानेति । प्रधानानां अधिपतिः बाजिराजः एकदा एकस्मिन् दिवसे रात्रौ नृपस्य शाहोः गृहान् प्रासादं अगात् । सः बालकः अस्य बाजिराजस्य उपनह्येते ते उपानहौ पादत्राणे । उपपूर्वात् नहबंधने अस्मात्क्विप् दीर्घश्च । प्रगृह्य बहिः तस्थौ ॥ ६५ ॥

उरइति । सचिवानां अधिपः बाजिराजः दृढतरं यथा स्यात् तथा उरसि धृते सुपादुके येन तं उरोधृतसुपादुकं चिरं शयानं बालं विलोक्य ते पादुके समुपहर्तुं यदा न शशाक तदा बलवता बलिष्ठेन अन्येनेत्यर्थः । समुत्थापितः अतिप्रयासेन मन्याधः करं दत्वा उत्थापित इत्यर्थः । सः शिशुः ते पादुके प्रभोः पुर एव नत्वन्यत्र निधाय स्वयमपि पुरः तस्थिवान् अतिष्ठत् ॥ ६६–६७ ॥

दक्षिणस्यां करवीरसमीपे स्थिता कुलदेवता ज्योतिः ॥ ६८ ॥

राणुरिति । दारिताः अरातीनां शत्रूणां राशयोयेन स दारितारातिराशिः दाता दीनाः ये प्राणिनः तेषां रक्षायां रक्षणे प्रवीणश्चतुरः वीणारूपं यद्वाद्यं तेन आसमंताद्रंजिता स्वांतस्य मनसः वृत्तिः येन तथोक्तः एतेन गानकलाभिज्ञ इतिदर्शितं ।

---

३२. उरोधृतपदत्राणः शिश्येनिद्राविमोहितः । प्रधानस्तादृशं दृष्ट्वा हस्तात्ते हर्तुमुद्यतः । नैवाशक्नोद्यदातु यत्नेनोत्थापयच्छिशुम् । उत्थितः स प्रधानस्य स्थापयामास ते पुरः ॥'' पा० भे०. ३३. अधिकोय श्लोकः क्वचित् । ३४. शिंदे इत्यभिधायुक्तो वीरवर्यः स शूद्रराट्' पा० भे०. ३५. 'मारिता०' पा० भे०.

जित्वा सर्वामुत्तरां तारितस्वः स्वीयाचारैश्चारदृग्दीर्घदर्शी
कीर्तिं भूमौ राजसिंहस्य तस्य तन्वन्नासीदुत्तरस्यां स तस्याम् ॥ ७० ॥
तस्माज्जज्ञे माधवो वीरवर्यो योऽसौ सर्वं भूतलं निर्जिगाय ॥
म्लेच्छान्हूणान्बर्बरान्दुर्विनीतान्हत्वा राज्यं कण्टकोनं चकार ॥ ७१ ॥
कामादीनामान्तराणां रिपूणां शास्ता हन्ता बाह्यशत्रुव्रजस्य ॥
स्वीयैः स्वच्छैर्यः प्रतापैर्विरेजे भूमावस्यां राजकीर्तिं वितन्वन् ॥ ७२ ॥
तस्मिन्वंशे तादृशो नैव जज्ञे कश्चिन्नैवं जायते वा कदापि
स्नानं पानं जान्हवीवारिणो यो नित्यं चक्रे दूरदेशस्थितोऽपि[३६] ॥
यदीयपाणिस्थितखड्गधारां मन्येऽतुलां कल्पलतां यतः सा ॥
मर्त्यानमर्त्यान्विदधाति शत्रून्कुप्येतरच्चापि धनं प्रसूते ॥ ७३ ॥

नारिभिः परनारीभिः दृष्टं स्पृष्टमुरःस्थलम् ॥
अदर्शि गोपवनिताप्रियभक्तस्य यस्य च ॥ ७४ ॥
यदीयकरगा खड्गधारा भागीरथी ध्रुवम् ॥
पापा अपि परे यस्याः स्पर्शनाद्यान्ति दिव्यताम् ॥ ७५ ॥

राणुर्नाम वीरः वृत्या उपजीविकया हीनेषु विप्रेषु वृत्तिं उपजीविकां अकार्षीत् कृतवान् ॥ ६९ ॥

जित्वेति । स्वीयैः स्वकीयैः आचारैः आचरणैः कर्मभिरिति यावत् । तारिताः स्वे स्वकीयाः येन तथोक्तः चारा एव दृक् यस्य । दीर्घं पश्यतीति दीर्घदर्शी सः राणुर्नाम वीरः तस्य शाहोः तस्यां उत्तरस्यां कीर्तिं तन्वन् विस्तारयन् सन् आसीत् ॥ ७० ॥

अथ तदीयं वंशं तद्वंश्यानां चरितं चासमाप्तेराह । तस्मादिति । तस्मात् राणुनाम्नः माधवः जज्ञे । कंटकैः शत्रुभिः ऊनं कंटकोनं चकार कृतवान् ॥ ७१॥

कामादीनामिति । अंतरे शरीरे भवाः आंतराः तेषां कामादीनां शास्ता । बहिर्भवाः बाह्याः ये शत्रवः तेषां व्रजस्य हंता । शेषं सुगमं ॥ ७२ ॥

अथ माधवमेववर्णयति यदीयेत्यादिभिः षड्भिः । यदीयेति । अहमितिशेषः अतुलां अनुपमां यदीयपाणिस्थितखड्गधारां कल्पलतां मन्ये यतः सा मर्त्यान् शत्रून् अमर्त्यान् देवान् विदधाति । कुप्येतरच्चापिधनं प्रसूते सः माधवः वीरराट् जयतीति षष्ठेनान्वयः ॥ ७३ ॥

नारिभिरिति । अरिभिः गोपवनिताप्रियः श्रीकृष्णः तस्य भक्तस्य यस्य भूपतेः पृष्ठं नादर्शि न दृष्टं । परेषां अन्येषां नारीभिः उरस्थलं न स्पृष्टं ॥ ७४ ॥

यदीयेति । यस्या यं यदीयः यदीयश्चासौ करश्च यदीयकरः यदीयकरं गच्छतीति

---

३६. अधिकोयं श्लोकः क्वचित् ।

यस्मिंस्तुरङ्गमधिरोहति देवराजः
प्रस्थापयत्यखिलयानवराणि सद्यः ॥
दिव्याङ्गना अपि विभूषणभूषिताश्च
माल्यानि कल्पतरुजानि महाधनानि ॥ ७६ ॥
यस्मिन्खड्गकरे तुरङ्गमगतेऽसंख्याश्ववाहैर्युते
स्वस्थानं प्रविहाय निर्गतवति प्रद्योतनः कंपते ॥
शत्रूणां निचयः स्वमण्डलयुतः शेषोऽपि पातालके
राजाधीश्वरवन्द्यवन्दितपदद्वंद्वे द्विजस्वस्तरौ ॥ ७७ ॥
युद्धे योऽर्जुनवद्रिपौ रविजवद्गाने तु गन्धर्ववद्-
वित्ते यक्षकुलेशवज्जनकवद्दीने नये धर्मवत् ॥
पत्न्यां चापि गिरीशवद्वितरणे यः कर्णवत्काव्यवद्
बुद्धौ भूपवरार्चितो विजयते श्रीमाधवो वीरराट् ॥ ७८ ॥

यदीयकरगा खड्गधारा भागिरथी ध्रुवं मन्ये । यतः पापाअपि पापवंतोपि परे शत्रवः यस्याः स्पर्शनात् दिवि भवाः दिव्याः दिव्यानां भावः दिव्यता तां देवत्वं यांति गच्छांति ॥ ७५ ॥

यस्मिन्निति । यस्मिन् माधवे तुरंगं अधिरोहाति सति देवराजः इंद्रः अखिलानि यानि यानवराणि विमानानि तानि विभूषणैः विभूषिताः दिव्यांगनाः अप्सरसः महाधनानि माल्यानि पुष्पाणि सद्यः तत्कालं प्रस्थापयति । अयं पलायमानं दीनं शरणागतं च न हंति समरे अग्रतः युध्यमानमेव हंति तस्मादिंद्र एतेन हतानां वीराणामानयनार्थं विमानादीनि प्रेषयतीत्यर्थः ॥ ७६ ॥

यस्मिन्निति । राजाधीश्वराणां वंद्याः तैः वंदितं पादपद्मं यस्य तस्मिन् द्विजानां स्वस्तरौ कल्पवृक्षे असंख्याश्ववाहैर्युते खड्गकरे तुरंगमगते यस्मिन् स्वस्थानं स्वाश्रितदेशं प्रविहाय प्रस्थितवति सति प्रद्योतनः सूर्यः । प्रद्योतनो दिनमणिरित्यमरः । कंपते स्वमंडलभयादितिभावः । स्वमंडलयुतः शत्रूणां निचयः कंपते । कोशसैन्यादिराहित्यादितिभावः । पातालमेव पातालकं तस्मिन् पातालके । स्वार्थेकः । शेषोपि कंपते । असंख्यातसैन्यभारादिति भावः ॥ ७७ ॥

युद्धे इति यः युद्धे अर्जुनेन तुल्यं अर्जुनवत् । तेन तुल्यं क्रिया चेद्वातिरिति वाति प्रत्ययः । एवमग्रेपि । रिपौ रविजेन तुल्यं रविजवत् यमवत् गानेतु । गंधर्ववत् वित्ते यक्षकुलेशवत् कुबेरवत् दीने जनकवत् नयेधर्मवत् पत्न्यांचापि गिरीशवत् सांबवत् वितरणे दाने कर्णवत् यः बुद्धौ काव्यवत् शुक्रवत् भूपवरैः अर्चितः सः श्रीमाधवः वीरराट् जयति ॥ ७८–७९ ॥

गुणेषु लुब्धाः सकलाः कलास्तं सिषेविरे दास्यमुपेत्य भूपम्
संपत्तिरेनं युवतीव भेजे दृष्ट्वा विपक्षत्रुगृहे जगाम ॥ ७९ ॥

तत्सूनुर्हरिनन्दनेन सदृशः शीलेन धर्म्येण यो
धर्मं भूपवरं जिगाय यशसा यः पूरयामास गाम् ॥
यः शत्रुव्रजकक्षमक्षतयशा युद्धेऽदहद्भूपराट्
श्रीमान्दौलतनामभाग्विजयते राजाधिराजः सुधीः ॥ ८० ॥

तन्मंत्री शशिवंशभूषणमणिः श्रीकृष्णपादार्चन-
प्राप्तश्रीः श्रिततापवारणचयप्रध्वंससिंहः सुधीः ॥
विद्वद्वर्यमनोगतार्थरचनासंपूर्तिकल्पद्रुमो
दीनांधादिदयापरो विजयते शिष्टाग्रणीर्धार्मिकः ॥
कीर्त्या येन महीतलं कवलितं भूत्याऽखिलं भूतलं
दानेनाखिलविप्रमंडलमथो शत्रुः प्रतापानलैः ॥
देहः पुण्यचयेन बुद्धिसचिवो ज्ञानेन चालिंगितः
सोयं दौलतराजमंत्रिमहितः शिष्टाग्रणीराजते ॥
वाचं कल्पलतां मन्ये यदीयां यन्मुखोद्गता ॥
स्वर्णराशीन् रूप्यराशीन् रत्नराशीन्फलत्यलम् ॥
सहस्रशो द्विजा यस्य गेहे पायससंयुतान् ॥
लड्डुकान् मण्डकान्नित्यं भुजते तुष्टमानसाः ॥*
सोऽयं यन्त्रवराङ्यनिर्जितरिपुव्रातो व्रती घोटकि-
व्राजापूरितभूतलोऽखिलमहीदेवालिकल्पद्रुमः ॥
दीनान्धव्रजपालनोऽहितमहाखड्गोऽवनीपालको-
ष्णीषोद्धर्तिसुमाल्यरञ्जितपदो वर्वर्ति सर्वोपरि ॥ ८१ ॥

तदिति । हरेः इंद्रस्य यः नंदनः पुत्रः अर्जुनः तेन सदृशः । यद्वा हरेः सूर्यस्य नंदनेन कर्णेन सदृशः । यद्वा हरेः विष्णोः नंदनेन मदनेन सदृशः । यद्वा हरेः इंद्रस्य नंदनेन जयंतेन सदृशः । यद्वा हरेः वायोः नंदनेन भीमेन हनुमता वा सदृशः । यद्वा हरेः चंद्रस्य नंदनेन बुधेन सदृशः । यद्वा हरेः यमस्य नंदनेन धर्मेण सदृशः । यद्वा हरेः इंद्रस्य नंदनेन वालिना सदृशः । यद्वा हरेः सूर्यस्य नंदनेन सुग्रीवेण सदृशः धर्मादनपेतं धर्म्यं तेन धर्म्येण शीलेन । धर्मपथ्यर्थन्यायादनपेते इति यत्प्रत्ययः। कक्षं तृणं । गां पृथिवीं । गौर्भूमिरचलानंतेत्यमरः । अर्कमर्कटमंडूकविष्णुवासववायवः । तुरंगसिंहशीतांशुयमाश्च हरयो दश । शेषं स्पष्टं ॥ ८० ॥

सोयमिति । यंत्रवराणि तोफाः घोटकिनो अश्वारोहः । माल्यानि मालाः । वर्वर्ति ।

---

* कचाः "लोकाअधिकाहमेकाचित्

कन्या चाप्यखिला बलोत्तमतमा बालाभिधा राजते
विद्वत्कल्पलता सुशीलमहिताऽहल्यां विजिग्ये कृतैः ॥
कार्यैर्या यवनान्रिपून्निजमतिप्रौढ्याजयत्साधुना
ह्यास्ते गालवदुर्गमत्र निकषा भ्रातापि तत्रैव सः ॥ ८२ ॥
स्वाहाग्नेर्महिषी यथा सुरपतेः पत्नी शची वा गुरो-
स्तारा वा जनकात्मजा रघुपतेः कृष्णस्य वा रुक्मिणी ॥
शंभोः शैलसुताथवाखिलगुरोर्विष्णोः पयोधेः सुता ॥
श्रीमद्दौलतनामराजमहिषी सा बायजाख्या तथा ॥ ८३ ॥
हिन्दुः सिन्धुसुताप्रियांघ्रिकमलद्वन्द्वार्चनावापित-
श्रीः संपद्भरमानिताखिलमहीदेवो नृपेन्द्राधिपः ॥
उद्यद्दण्डनिपातपातितसुदुर्वृत्तव्रजो वीरणो
भ्रातास्या अपि राजते जनिमतां मान्यो वदान्याग्रणीः ॥ ८४ ॥
कर्णं सव्रणं तरुमप्यनल्पं कल्पं न मन्येऽर्थिजनार्थितं यौ ॥
अयच्छतां यच्छाति यद् द्विजेभ्यो यो याचितं याचितमप्यनल्पम् ॥८५॥
नलरामयुधिष्ठिराः पुरा त्रियुगीवाडवकामपूरकाः ॥
इह दानपतेरभावतो द्विजदैन्ये सति यः समुद्यतः ॥ ८६ ॥
अयं कल्पद्रुमः सा हि कल्पवल्ली मता मम ॥
उभावपि सुपुत्राढ्यौ फलतो द्विजहेतवे ॥ ८७ ॥
विश्वं ब्रह्मतया सर्वं पश्यन्तावपि लोकवत् ॥
व्यवहारदशायां यौ क्रीडतां तौ सुतैः सह ॥ ८८ ॥
इति श्री शिवकाव्ये पुरुषोत्तमविरचिते दशमश्चमत्कारः

---

वृत्तं तदीयं स निशम्य राजा बल्लालसंज्ञं सुतमस्य वीरम् ॥
आनीय तातादधिकं गुणौघैश्चक्रे प्रधानं महितं हितं तम् ॥ १ ॥

यङ्लुङन्तमिदंलटो रूपं ॥ ८१ ॥

अभितः परितः इत्यादिनानिकषायोगे द्वितीया ॥ ८२–८८ ॥

॥ इति श्रीशिवकाव्यव्याख्यायां स्वयंकृतायां दशमश्चमत्कारः ॥

वृत्तमिति । सः राजा शाहुः तस्य इदं तदीयं बाजिराज-संबंधि वृत्तं परलोकगमनरूपं निशम्य श्रुत्वा अस्य बाजिराजस्य सुतं वीरं गुणौघैः तातात् अधिकं अतएव महितं पूजितं हितं हितकर्तारं तं बल्लालसंज्ञं आनीय प्रधानं चक्रे । मुख्यप्रधानाधिकारं दत्तवानित्यर्थः ॥ १ ॥

बल्लालनामा ललितैर्वचोभिर्दमेन शांत्या विनयेन भूपम् ॥
अतोषयद्दीनजनप्रपालं भूपालसंघार्चितपादपीठम् ॥ २ ॥
पितृव्यपुत्रेण सदाशिवेन वीराग्रगण्येन समन्वितः सन् ॥
चकार सर्वं नृपकार्यजातं राजापि चिंतारहितो बभूव ॥ ३ ॥
राजाधिराजोऽपि गुणान् समीक्ष्य प्रधानवर्यस्य सतां मतस्य ॥
मेने मनस्येवमयं मदीयं राज्यं स्वतातादधिकं हि रक्षेत् ॥ ४ ॥
प्रधानपोऽसौ निखिलाः प्रजाः स्वा अपालयद्राजनिदेशकारी ॥
वैरी न चासीदिह कश्चनास्य क्षोणीतले राजविवर्धितस्य ॥ ५ ॥
द्विजातयस्तस्य गुणज्ञतां तामाकर्ण्य विद्याभ्यसने प्रवृत्ताः ॥
भटा अपि प्रोद्भटशस्त्रशिक्षाः कलाधराश्चापि कलाः प्रपेठुः ॥ ६ ॥
राजा प्रजारंजनकृत्प्रधाने मुख्ये समाधाय स राज्यभारम् ॥
तस्मिन् गताधिर्हरपादपद्मसमर्चने सादरतां दधार ॥ ७ ॥
समारतः पुण्यपुरीमुपेत्य प्रासादवर्ये विहिते स्वपित्रा ॥
महेंद्रधिष्ण्ये मघवानिव स्वाः प्रजा अवन् विप्रपतिः स रेमे ॥ ८ ॥
तस्मिन् प्रधाने सति भारतेऽस्मिन् प्रजा अमन्यंत भुवं दिवं ताः ॥
प्रधाननाथं तु बिडौजसं तं भूपं रमावल्लभभागभाजम् ॥ ९ ॥
पुण्याभिधया नगरी विधेया ऽमरावतीवेति जगाद यत्तत् ॥
कृत्वा गते स्वः पितरि ह्ययं तु ततोधिकां तां विदधे पुरीं स्वाम् ॥ १० ॥

बल्लालेति । दमेन बाह्येंद्रियनिग्रहेण शांत्या अंतरिंद्रियनिग्रहेण ललितैः मनोहरैः वचोभिः भूपं अतोषयत् ॥ २ ॥

पितृव्येति । पितृव्यस्य चिमाजीनाम्नः पुत्रेण ॥ ३ ॥ राजेति ॥ ४।५।६ ॥

राजेति । गतः आधिर्मानिसी व्यथा यस्मात् स गताधिः । पुंस्याधिर्मानसी व्यथेत्यमरः ॥ ७ ॥

समारतइति मघवानिव इंद्रइव रेमे अवन् रक्षन् सन् ॥ ८ ॥

तस्मिन्निति । ताः प्रजाः तद्देशीयाः लोकाः अस्मिन् भारते खंडे तस्मिन् बल्लाले प्रधाने सति भुवं दिवं अमन्यंत । प्रधाननाथं तु बिडौजसं इंद्रं अमन्यंत । तं शाहुं रमावल्लभभागभाजं विष्ण्वंशभाजं अमन्यंत ॥ ९ ॥

पुण्याभिधेति । इयं पुण्याभिधा नगरी अमरावती विधेया कर्तव्या इति यत् जगाद तत् कृत्वा पितरि बाजिराजे स्वः स्वर्गे । स्वरव्ययं स्वर्गनाकत्रिदिवत्रिदशालया इत्यमरः । गते सति अयं बल्लालः तां स्वां पुरीं ततः अमरावत्याः अधिकां विदधे चकार ॥ १० ॥

---

१. '०जामदन०' पा० भे० ।

त्दृष्टाः पुष्टा रत्नहाराभिमृष्टा दृष्टा लोकैः कौतुकाल्लोकशिष्टाः ॥
यांत्यायांति प्रत्यहं राजगेहाद्यस्यां कार्ये सन्नियुक्ता नृयानैः ॥ ११ ॥
दरिद्रशब्दार्थभवानुभूतिं यस्यां वसन् कोऽपि जनो न लेभे ॥
हेमादिरूपं प्रतिपद्य लक्ष्मीर्गृहे गृहे क्रीडति यन्नितांतम् ॥ १२ ॥
रसालैस्तमालैस्तथा नारिकेलैः सुरंभाकुलैः पूगपोतैश्च युक्ताः ॥
अपश्यन् यदुद्यानमाला विशाला नरा दृष्टिमंतस्त एवेति मन्ये ॥ १३ ॥
निश्येव चंद्रः कुमुदौघमेव विकासयत्येष मुखाब्जजातम् ॥
यदीयनारीवदनेंदवस्तु नक्तं दिवं[२] पश्य विकासयंति ॥ १४ ॥
द्विगुणं त्रिगुणं चतुर्गुणं वा लभते यत्र धनं वणिक् च मूल्यात् ॥
कृतविद्यमहीसुरः सुवर्णं प्रतिवर्षं लभते यथेष्टमेव ॥ १५ ॥

अथ ततोधिकां तां विदधे पुरीं स्वामित्युक्तं तदेव आधिक्यं सप्तदशभिः श्लोकैराह दृष्टा इत्यादिभिः । दृष्टाः नित्यं धनलाभादिति भावः । अतएव पुष्टाः । रत्नानां हारैः अभिमृष्टाः युक्ताः । अतएव लोकैः कौतुकाद्दृष्टाः स्वस्य तथाभूतत्वाभावादितिभावः । लोकेषु जनेषु शिष्टाः उत्तमाः राजाश्रितत्वादितिभावः । कार्ये राजकार्ये सन्नियुक्ताः नराः यस्यां नगर्यां राजगेहान् नृयानैः शिबिकाभिः प्रत्यहं दिने दिने यांति गच्छंति आयांति आगच्छंति ॥ ११ ॥

दरिद्रेति । दरिद्रशब्दस्य योर्थः तस्मात् भवा या अनुभूतिः तां दारिद्र्यमित्यर्थः । शेषं स्पष्टं ॥ १२ ॥

रसालैरिति । ये नराः रसालैः आम्रैः तथा तमालैः नारिकेलैः शोभनैः रंभाणां कदलीनां कुलैः पूगानां क्रमुकाणां पोतैः बालैश्च युक्ताः विशालाः विस्तीर्णाः यस्याः उद्यानानि यदुद्यानानि यदुद्यानानां मालाः पंक्तीः अपश्यन् त एव दृष्टिमंतः इत्यहं मन्ये । तेषामेव दृष्टेः साफल्यमित्यर्थः ॥ १३ ॥

निश्येवेति । एषः चंद्रः निश्येव न तु दिवेति भावः कुमुदानां कैरवाणां ओघं संघमेव न त्वन्यसरोजसंघमितिभावः । विकासयति । यस्याः इमाः यदीयाः । सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः । एवमग्रेपि । यदीयाश्च ता नार्यश्च यदीयनार्यः यदीयनारीणां वदनानि त एव इदं वस्तु नक्तं दिवं रात्रंदिवं । अचतुरेत्यादिना निपातनात् साधुत्वं । मुखाब्जानां जातं जातिस्तां । जातं जात्योघजन्मसु इत्यमरः । विकासयंति पश्य ॥ १४ ॥

द्विगुणमिति । किंच यत्र यस्यां नगर्यां वणिक् मूल्यात् धनात् द्वौ गुणौ आवृत्ती यस्येति द्विगुणं वा अथवा त्रिगुणं वा चतुर्गुणं प्रारब्धानुरूपमित्यर्थः । धनं लभते न तु कदाचिदपि मूल्यान्न्यूनमिति भावः । कृतविद्यः महीसुरः ब्राह्मणः वर्षे वर्षे इति

२. 'दिवानिशं' 'रात्रं दिवं' इति वा पाठः ।

रमणी रमणीव या सुवासा रमणानंदविधायिनींदुवक्त्रा ॥
अतिरम्यपयोधरा धरायामुदितेवामरभूर्भुवं विजेतुम् ॥ १६ ॥
वज्रित्रस्ताः शैलसंघा विशंकं वासस्थानं निर्भयं नाध्यगच्छन् ॥
वासोराशिव्याजतो यां समेत्य हट्टे हट्टे संवसंतीति मन्ये ॥ १७ ॥
विनिमयं वितनोति यदापणे रजतकांचनकैः सततं जनः ॥
व्यवहृतिस्तु न कुप्यमयी तथा कदशनं वसनं मलिनं न च ॥ १८ ॥
गृहैः कलत्रैः शिशुभिः पुरस्ताज्जलैः सदन्नैर्वसनैश्च पश्चात् ॥
आकर्षितं पांथमनस्तु यत्र चक्रे निजं लक्षणमेव सत्यम् ॥ १९ ॥

प्रतिवर्षं सुवर्णं इष्टं अनतिक्रम्य इति यथेष्टमेव लभते ॥ १५ ॥

रमणीति । रमयति सा रमणी । शोभनो वासो यस्यां सा सुवासा । अन्यत्र शोभनो वासो वसतिः यस्याः सा । यद्वा सांतमिदं शोभनानि वासांसि वस्त्राणि यस्यां सा सुवासा । अन्यत्र शोभनं वासो वस्त्रं यस्याः सा सुवासाः । रमंते ते रमणाः विलासिनः तेषां आनंदं विदधातीति रमणानंदविधायिनी । अन्यत्र रमणस्य भर्तुः आनंदं अन्यत् समानं । ताच्छील्येणिनिः नांतत्वात्ङीप् । इंदुरिव वक्त्रं पुरद्वारं यस्याः सा अन्यत्र इंदुरिव वक्त्रं मुखं यस्याः सा इंदुवक्त्रा । धरतीति धरा । पचाद्यच् । अति रम्यं यत्पयः उदकं तस्य धरा धर्त्री । अतिरम्यौ पयोधरौ यस्याः सा अतिरम्यपयोधरा या नगरी रमणीव सुंदरीव अमराणां भूः स्वर्लोकः तस्याः भवतीति अमरभूः अमरावती तां अन्यत्र अमरभूभुवं अप्सरसं विजेतुमिव उदिता । उत्प्रेक्षोपमाश्लेषाणां संसृष्टिः ॥ १६ ॥

वज्रीति । वज्री इंद्रः तस्मात् त्रस्ताः भीताः । सुत्रामागोत्रभिद्वज्रीत्यमरः । शैलानां पर्वतानां संघाः निर्भयं निःशंकं वासस्य स्थानं नाध्यगच्छन् न प्रापुः । अतः यां नगरीं समेत्य वाससां राशयस्तेषां व्याजः मिषं तस्मात् इति वासोराशिव्याजतः हट्टे हट्टे आपणे आपणे संवसंतीति मन्ये । यस्यां वाससां राशयः पर्वतसमानाः हट्टे हट्टे संतीत्यर्थः । उत्प्रेक्षालंकारः ॥ १७ ॥

विनिमयमिति । जनः यस्याः आपणे रजतकांचनकैः विनिमयं क्रयविक्रयं सततं करोति । कुप्यमयी ताम्रादिमयी व्यवहृतिः नास्ति । तथा कुत्सितं अशनं कदशनं मलिनं वसनं च न नास्ति ॥ १८ ॥

गृहैरिति । यत्र यस्यां नगर्यां स्वकार्यैः गृहैः कलत्रैः । कलत्रं गेहिनी गृहमिति धनंजयः । शिशुभिः बालैश्च पुरस्तात् अग्रे आकर्षितं । यत्र यस्यां नगर्यां जलैः सदन्नैः वसनैश्च पश्चात् आकर्षितं पांथमनस्तु निजमेव लक्षणं ' संकल्पविकल्पात्मकं

---

१. ' ॰ामरराट्पुरीव॰ ' पा॰ भे॰.

विलोक्य बुद्ध्या विकलीकृतं तन् क्लीबैरपि क्लीबतरं तु यत्र ॥
वर्षास्विहैवात्रमतिर्विधेया सिद्धांतमेवं निजमेव नीतम् ॥ २० ॥
ऋणत्रयं भूमितले प्रसिद्धं तथा चतुर्थं व्यवहारजन्यम् ॥
ऋणत्रयान्नैव नरोऽविमुक्तस्तुरीयकं यत्र तु नैव दृष्टम् ॥ २१ ॥

भक्तं सुगंधि युवतीं सुगुणां तनूजं
वश्यं सुसूक्ष्मवसनं दधि माहिषं च ॥
हैयंगवीनमपि शंभुरता लभंते
लोको निदर्शनमदोविषये यदीयः ॥ २२ ॥

प्रासादशैलशिखरोपगृहाधिरूढा ।
बालाः शरत्सकलचंद्रजिदाननाब्जाः ॥

मन ' इति लक्षणं सत्यं चक्रे । गृहगमनस्यात्यावश्यकत्वात् एतन्नगरीवासस्याप्यत्या-वश्यकत्वान्निश्चयं नाधिजगामित्यर्थः ॥ १९ ॥

विलोक्येति । यत्र यस्यां नगर्यां बुद्ध्याक्लीबैरपि गृहादिभिः । यद्यपि शिशु-शब्दस्य न नपुंसकत्वं तथापि छत्रिन्यायेन तत्राप्यारोपितं । विकलीकृतं अतिशयेन क्लीबमिति क्लीबतरं पांथमनः विलोक्य वर्षासु इहैव अस्यामेव नगर्यां आवसतिः विधेया इति निजं सिद्धांतमेव नीतं । निश्चयात्मिका बुद्धिरिति लक्षणमस्या ज्ञेयं । एतेन स्वगृहाद्यपेक्षया अत्रत्यजलादीनामाधिक्यं दर्शितं ॥ २० ॥

ऋणत्रयमिति । ऋणानां त्रयं ऋणत्रयं देवऋणं ऋषिऋणं पितृऋणमिति-त्रिविधं ऋणं भूमितले प्रसिद्धं तथा व्यवहारजन्यं चतुर्थं प्रसिद्धं यत्र ऋणत्रयात् अविमुक्तः नरः न नास्ति । सर्वोपि ऋणत्रययुक्त एवासीदिति भावः । तुरीयकं चतुर्थं व्यवहारजन्यं । चतुरश्छयतावाद्याक्षरलोपश्चेति छप्रत्ययांताच्चतुश्शब्दात् स्वार्थेकः । यत्रनैव दृष्टं । यत्र सर्वेपि यज्ञकर्तारः वेदपाठकाः पुत्रवंतः धनवंतश्चासन्निति भावः ॥२१॥

भक्तमिति । शंभौरताः शंभुरताः शिवभक्ताः शोभनः गंधो यस्येति सुगंधि । गंधस्येदुत्पूतिसुसुरभिभ्य इति इत्वं । भक्तं ओदनं । भिस्साम्त्री भक्तमंधोन्नमोदनो-स्त्रीसदीदिविरित्यमरः । सुगुणां युवतीं तनूजं वशंगतः वश्यः तं वश्यं स्वाधीनं वशंगत इति यत् । सुसूक्ष्मं च तद्वसनं च सुसूक्ष्मवसनं महिष्याः इदं माहिषं । तस्येदमित्यण् । दधिह्यस्तनगोदोहोद्भवं हैयंगवीनं घृतं नवं । हैयंगवीनं संज्ञायामिति निपातनात् साधुत्वं । लभंते अमीषां विषये अदो विषये यस्याः अयं यदीयः । वृद्धाच्छइति छप्रत्ययः । लोकः निदर्शनं दृष्टान्तः । शाल्यमन्नमनवं नवं घृतं मुद्गसूपमथ माहिषं दधि । सूक्ष्मवस्त्रमबला च कोमला को लभेत शिवपूजनं विनेति श्लोकोक्तफलभाजः सर्वेपि यत्र शिवभक्ताः संतीतिभावः ॥ २२ ॥

प्रासादेति । शरदि यः सकलः पूर्णः चंद्रः शरत्सकलचंद्रः शरत्सकलचंद्रं

दिव्यांगना इव विभांति सदैव यत्र ।
पीनोन्नतातुलकुचाम्तडिदंबराढ्याः ॥ २३ ॥
अधिकं सुखदा पुरी सुराणामिति यज्ञान् मनुजा विधाय जग्मुः ॥
नहि तत्र सुखं तथेति मत्वा भनिपातस्य मिषेण यां व्रजन्ति ॥ २४ ॥
जलाशयानां मिषतः पयोधिः शुद्धो हि यस्यां प्रतिरथ्यमास्ते ॥
क्रमेण मां वाडवनामवह्निर्ग्रसेदितीवापभयो विलीनः ॥ २५ ॥
दुग्धादीनां सिंधवो यत्र लीना भीता नूनं वाडवाद्गोषु सर्वे ॥
सायं प्रातः प्रत्यह दुग्धदोहा यद्यप्येताः सर्वदा यत्क्षरन्ति ॥ २६ ॥
तस्यां वसन्नभसि मास्यखिलद्विजेभ्यो ।
दत्वा पितुः समधिकं स तु दक्षिणां ताम् ॥
सम्राड्के नृपतिसन्निहितः प्रजानां ।
कार्याणि शास्त्रमनुसृत्य चकार धीरः ॥ २७ ॥

जयतीति शरत्सकलचंद्रजित् शरत्सकलचंद्रजित् आननाब्जं । यासां ताः शरत्सकलचंद्रजिदाननाब्जाः । पीनौ उन्नतौ अतुलौ कुचौ यासां ताः तथोक्ताः तडिदिव अंबरं वस्त्रं तेन आढ्याः युक्ताः । प्रासादा एव शैलाः पर्वताः तेषां शिखराणि ऊर्ध्वप्रदेशाः तेषु यानि उपगृहाणि सौधानि तानि अधिरूढाः बालाः दिविभवाः दिव्याः दिव्याश्च ता अंगनाश्च दिव्यांगनाः ता इव सर्वकालं यत्र यस्यां नगर्यां विभांति शोभंते । सर्वांगनापेक्षया सौंदर्यात् सौवर्णवसनत्वात् उच्चगृहाधिरूढत्वाच्च देवांगना इव विभांतीत्यर्थः ॥ २३ ॥

अधिकमिति । मनुजाः सुराणां पुरी अमरावती अधिकं पुण्यनगर्यपेक्षया अधिकं सुखदा इति हेतोः यज्ञान् विधाय तामितिशेषः । जग्मुः अनंतरं तत्र अमरावत्यां तथा पुण्यपुरीसदृशं सुखं न इति मत्वा भानां ताराणां मिषेण पातः पतनं तस्य मिषेण यां नगरीं व्रजंति गच्छंति ॥ २४ ॥

जलाशयानामिति । वाडवह्निः वडवानलः क्रमेण प्रथमं क्षाराब्धिग्रासे प्रवृत्तः अनंतरमिक्षुरसादं ग्रसेदिति क्रमेणांतिमं मांग्रसेत् इतीव यस्यां विलीनः शुद्धः पयोधिः शुद्धोदकसमुद्रः अपभयः सन् जलाशयानां मिषतः व्याजात् रथ्यायां रथ्यायामिति प्रतिरथ्यं आस्ते । यथार्थेऽव्ययीभावः ॥ २५ ॥

दुग्धादीनामिति । दुग्धादीनां क्षीरादीनां सिंधवः समुद्राः वाडवाद्वह्नेर्भीताः संतः यत्र यस्यां वर्तमानासु गोषु लीनाः अंतर्हिताः नूनं । यत् यस्माद्धेतोः एताः गवः सायं संध्याकाले प्रातः प्रातःकाले अहनि अहनीति प्रत्यहं दुग्धः निष्काशितः दोहः क्षीरं यासां ताः दुग्धदोहाः यद्यपि तथापि सर्वदा सर्वकालं क्षरंति स्तनद्वारा स्रवंति ॥ २६ ॥

---

१. '०भाः' पा० भे० ।

दाता नृपालगणमूर्धजमौलिमाला-
संघोद्गलत्प्रचुरगंधरजः समृध्द्या ॥
संरंजितामलपदो जयति प्रकामं ।
श्रीशाहुनाम नृपतिर्भुवि कल्पवृक्षः ॥ २८ ॥
यस्मिन् शासति भारतं द्विजवरा यज्ञक्रियातत्परा ।
राजानो जितवैरिणो निजमहीलोकान् मुदा बिभ्रति ॥
वाणिज्याप्तसमस्तभोगनिचया वैश्यास्तदन्ये सुखं ।
क्रीडन्ति स्वपुरेषु नित्यमुदिता देवः सदा वर्षति ॥ २९ ॥
दानप्रदातृजनसंस्तवनप्रसंगे विद्वत्सदस्युपमितिः स बभूव कर्णः ॥
तावन्न यावदुदियाय नरेंद्रवंद्यपादारविंदयुगलो भुवि शाहुराजः॥३०॥

तस्यामिति । तस्यां नगर्यां वसन् वीरः बल्लालः नभसि मासे श्रावणे मासे अखिलद्विजेभ्यः पितुः बाजिराजात् समधिकं यथास्यात्तथा तां प्रसिद्धां दक्षिणां दत्ता अनंतरं सप्तारके नृपतिसन्निहितः शाहुसमीपस्थः सन् शास्त्रं नीतिशास्त्रं अनुसृत्य प्रजानां लोकानां कार्यं चकार । दातेति । नॄन् पालयंति ते नृपालाः राजानः तेषां गणाः संघास्तेषां मूर्धजाः मूर्धस्थिताः ये मौलाः मुकुटाः तेषु याः मालाः माल्यानि तेषां संघः समुहः तस्मात् उद्गलत् यत्प्रचुरगंधं रजः परागः तस्य समृद्धिः वृद्धिः तया संरंजिते अमले निर्दोषे पदे चरणौ यस्य तथोक्तः भुवि कल्पवृक्षः श्रीयुक्तः शाहुनामनृपतिः प्रकामं अत्यंतं जयति सर्वोत्कर्षेण वर्तते ॥ २८॥

यस्मिन्निति । यस्मिन् भारतं भरतखंडं शासति सति । द्विजवराः ब्राह्मणाः यज्ञक्रियायां तत्पराः आसन्निति शेषः । जितवैरिणः राजानः क्षत्रियाः निजा या मही पृथ्वी तत्संबंधिनो लोकान् मुदा हर्षेण बिभ्रति पुष्णंति वैश्याः वाणिज्याप्तसमस्तभोगनिचयाः आसन् । तदन्ये शूद्रादयः नित्यमुदिताः संतः स्वपुरेषु आसन् स्वस्ववृत्या सर्वेपि हृष्टा आसन्नित्यर्थः। देवः पर्जन्यः सदा सर्वकालं वर्षति ववर्ष । वर्तमानसामीप्ये वर्तमानवद्वेतिवर्तमाने लट् ॥ २९ ॥

दानेति । सः कर्णः विदुषां सदः विद्वत्सदः तस्मिन् विद्वत्सदसि । स्त्रीनपुंसकयोः सद इत्यमरः । दानप्रदातारः ये जनास्तेषां संस्तवयनं तस्य प्रसंगः तस्मिन् उपमितिः उपमानं तावद्बभूव यावत् नरेंद्रवंद्यपादारविंदयुगलः शाहुराजः भुवि न उदियाय नोदितः ॥ ३० ॥

---

५. श्रीशंभुभूपतनयः शिवनामभूपः' 'द्विजकल्पवृक्षः' इति च पा० भे० । ६. '०भूतलं' पा० भे० । ७. 'कालेहरिर्वर्षति' पा० भे० । ८. '०शिवनामभूपः' पा० भे० ।

दधाति पादं न गदोऽपि यस्य राज्ये रिपुभ्योऽभिभवः कुतो नु ॥
वर्षति मेघा नितरां स्वकाले चोराभिभूतेस्तु कुतोऽत्र वार्ता ॥ ३१ ॥
स शाहुराजो जयति प्रकामं सुदक्षिणो दक्षिणदिक्पतिर्यम् ॥
संप्राप्य विप्रा निजमर्थितार्थं सद्यो लभन्तेऽलिपतकल्पवृक्षम् ॥ ३२ ॥

वार्ध्यब्जनाकबलिसद्मसु कामिनीनां ।
बिंबाधरेऽमृतमयं स्वरुचिप्रपञ्चः ॥
मन्ये तृणेषु तदमुष्य यतो द्विषंतो ।
धृत्वा मुखे मृतिभयं समरे त्यजन्ति ॥ ३३ ॥

तस्मिन्नृपे पालयति प्रजास्ताः कालोऽतियातः सुमहाननेन ॥
तुल्यं करिष्यंति न केऽपि चक्रू राज्यं कलौ दारितवैरिणेह ॥ ३४ ॥
तपःप्रभावं प्रसमीक्ष्य तस्य कलिः स्वकृत्ये न बभूव शक्तः ॥
अपत्यवीतत्वमलं विधाय नृपे प्रहृष्टः स बभूव नीचः ॥ ३५ ॥
सिंहासनारोहणवर्षतो यः सैकं नृपो विंशतिवर्षयुग्मम् ॥
चकार राज्यं जितशत्रुवर्गः सुराधिपाराधनलब्धकीर्तिः ॥ ३६ ॥

दधातीति स्पष्टार्थमेतत् ॥ ३१ ॥

स इति । सुतरां दक्षिणः कुशलः सुदक्षिणः ॥ ३२ ॥

वार्ध्यब्जेति । वार्धिः समुद्रः अब्जश्चंद्रः । नाकः स्वर्गः । बलिसद्म पातालं कामिनीनां युवतीनां बिंबमिव अधरः तस्मिन् अमृतं अयं स्वरुचेः प्रपंचः विस्तारः । तत् अमृतं तृणेषु अस्तीत्यहं मन्ये । यत् यस्माद्धेतोः अस्य द्विषंतः मुखे धृत्वा समरे संग्रामे मृतिभयं मरणभयं त्यजंति ॥ ३३ ॥

तस्मिन्निति । तस्मिन् नृपे ताः प्रजाः पालयति सति महान् कालः अतियातः अतिक्रांतः । अस्मिन् कलौ अनेन तुल्यं केपि राजानः राज्यं न चक्रुः अग्रे केपि न करिष्यंति । किं भूतेन दारिताः वैरिणो येन तथोक्तेन । ॥ ३४ ॥

तप इति । कलिः तस्य राज्ञः तपसः प्रभावं सामर्थ्यं प्रसमीक्ष्य स्वस्य कृत्ये शक्तः समर्थः न बभूव । नीचः सः कलिः नृपे अपत्येन वीतः रहितः तस्य भावः तत्त्वं विधाय अलं अत्यंत प्रहृष्टः बभृव । यद्वा अपत्यवीतत्वमेव मलः तं विधाय ॥ ३५ ॥

सिंहासनेति । एकेन सहितं सैकं विंशतिवर्षाणां युग्मं विंशतिवर्षयुग्मं एकचत्वारिंशद्वर्षाणीत्यर्थः । शेषं स्पष्टं ॥ ३६ ॥

---

९. '॰कुतःस्यात् ' पा॰ भे॰ । १०. '॰कुतोहि॰ ' पा॰ भे॰ । ११. '॰राजे रिपुभयं॰ ' पा॰ भे॰ ।

कलौ नृपाणां परमायुरत्र त्रिंशत्समास्तत्र तु राज्यभोगः ॥
पुण्यस्य राज्ञो द्विदशप्रसंख्यसमाप्रमाणोऽयमनल्पभोगः ॥ ३७ ॥
स सप्तषष्टिप्रमितायुरासीद्धर्ता रिपूणां स्वजनस्य भर्ता ॥
कर्ता क्रतूनां द्विजवर्यधुर्यैर्गार्यासमाराधनलब्धसंपत् ॥ ३८ ॥
वार्ध्यं गतं देहमवेक्ष्य राजा सर्वान् समाहूय स मंत्रिमुख्यान् ॥
अपृच्छदेकैकमिदं वदाश्व तुरंगसादिप्रवराः कियन्तः ॥ ३९ ॥
सहस्रयुग्मं त्रिसहस्रमेकश्चत्वारि पंचाष्टसहस्रसंख्याः ॥
तुरंगवाहा इति ते यदोचुर्बल्लालनामानमिदं जगाद ॥ ४० ॥
त्वद्वाजिवाहाः कति चात्र संति पुण्याभिधे चापि पुरे कियन्तः ॥
सत्यं वदेत्थं नृपतेर्वचस्तच्छ्रुत्वाऽब्रवीत्सन्नतिपूर्वमेषः ॥ ४१ ॥
संत्यत्र चत्वार्ययुतानि वाजिचरप्रवीरा हि तथैव तत्र ॥
पुण्याभिधे निर्जितवैरिवर्गा मत्तातताताेपगमा महान्तः ॥ ४२ ॥
संग्रामवार्ताश्रवणप्रहर्षा य आहवे देहमिमं तृणाल्पम् ॥
मन्यंत एते धनमानभूषावस्त्रार्चिताः कुंतमुखायुधाढ्याः ॥ ४३ ॥

कलाविति । अत्र अस्मिन् कलौ नृपाणां परं उत्कृष्टं आयुः । यद्वा परमं च तत् आयुश्च परमायुः त्रिंशत् समाः वर्षाणि तत्र वर्षेषु मध्ये पुण्यस्य राज्ञः द्व्यधिकाः दश द्विदश द्विदशप्रसंख्या यासां ताः द्विदशप्रसंख्याः द्विदशप्रसंख्याश्च ताः समाश्च द्विदशप्रसंख्यसमाः द्विदशप्रसंख्यसमाः प्रमाणं यस्य स द्विदशप्रसंख्यसमाप्रमाणः राज्यभोगः । अयं तु अनल्पः भोगो राज्यभोगः यस्य स अनल्पराज्यभोगः आसीत् ॥ ३७ ॥

स इति । द्विजवर्येषु धुर्याः श्रेष्ठाः तैः तद्द्वारेत्यर्थः क्रतूनां यज्ञानां कर्ता । कर्तृकर्मणोः कृतीति षष्ठी ॥ ३८ ॥

वार्ध्यमिति । सः राजा देहं वार्ध्यं वृद्धत्वं गतं अवेक्ष्य सर्वान् मन्त्रिमुख्यान् समाहूय तुरंगसादिप्रवराः अश्वारोहश्रेष्ठाः कियंतः संतीदं वद इति एकैकं अपृच्छत् ॥ ३९ ॥

सहस्रेति स्पष्टं ॥ ४० ॥ त्वदिति ॥ ४१ ॥

श्रुत्वाब्रवीत्संनतिपूर्वमेष इत्युक्तं तदेवाह संत्यत्रेति द्वाभ्यां । चत्वारि अयुतानि चत्वारिंशत्सहस्राणि । मत्तातताताेपगता इत्यनेन परंपरागताः नत्वाधुनिका इति दर्शितं ॥ ४२ ॥

संग्रामेति । आहवे युद्धे । अभ्याघातसमाघातसंग्रामाभ्यागमाहवा इत्यमरः ॥ ४३ ॥

निशम्य वाक्यं नरपोऽतितुष्टस्तदैव राज्यं निजमस्य हस्ते ॥
प्रत्यर्पयामास स वाजिदंतिकोशादिभिः संयुतमत्युदारः ॥ ४४ ॥
पितामहेन प्रपितामहेन स्वयं च तातेन सदार्जितं यत् ॥
प्रधानमात्तत्मलकं चकार सुपात्रनिक्षेपनिराकुलात्मा ॥ ४५ ॥
सर्वान् समभ्यर्च्य धनेन वस्त्रैरंतःपुरस्थान्नगरस्थितांश्च ॥
आबालवृद्धं स जगाद राजा प्रधानवर्यो ह्यविताधुना वः ॥ ४६ ॥
ततो नृपः क्रोशयुगे स्थितां तां कृष्णां समभ्येत्य नदीमदीनः ॥
पत्नीसहायः प्रतिपूज्य चक्रे स्तुतिं सुराधीश्वरदेहजायाः ॥ ४७ ॥

कृष्णे कृष्णतनूद्भवे भगवति ब्राह्मी लिपिः पापिनो ।
नायं यास्यति नाकमित्यवितथा भालस्थिता याभवत् ॥
तां मिथ्या न करोषि वारिणि निजे स्नातं दिवं यन्नय-
स्येनं तत्तव वर्णने भुवि नरो नैवास्ति कश्चिद्विभुः ॥ ४८ ॥

निशम्येति । निशम्य श्रुत्वा अत्युदारः स शाहुः ॥ ४४ ॥ पितामहेनेति । प्रधानाधीनं प्रधानसात् ॥ ४५ ॥

सर्वानिति । वः युष्मान् अविता रक्षिष्यति । यद्वा वः युष्माकं अविता रक्षकः अस्तीतिशेषः ॥ ४६ ॥

तत इति । पत्नी सहायो यस्य सः पत्नीसहायः । अनेन पत्न्या सहगमनं कृतमिति सूचितं । सुराधीश्वरो विष्णुः तस्य देहः तस्माज्जाता तस्याः । कृष्णा कृष्णतनुः साक्षादिति कार्तिकमाहात्म्यं ॥ ४७ ॥

स्तुतिं चक्रे इत्युक्तं तामेवाह कृष्णे इत्याद्यष्टाभिः पद्यैः । कृष्णे इति । कृष्णो विष्णुः । विष्णुर्नारायणः कृष्ण इत्यमरः । तस्य तनुः शरीरं तस्मादुद्भवा तत्संबुद्धौ हे कृष्णतनूद्भवे । अत्र पाद्मे कार्तिकमाहात्म्ये कृष्णादिनद्युत्पत्तिप्रकारोऽलिखितः सोऽत्रानुसंधेयः । हे भगवति कृष्णे । अयं पापी नाकं न यास्यति स्वर्गं न गमिष्यति । नाकः स्वर्गांतरिक्षयोरिति विश्वः । इति या पापमस्यास्तीति पापी तस्य पापिनः । अत इति ठनाविति इनिः । भालस्थिता ब्राह्मी ब्रह्मण इयं ब्राह्मी । तस्येदमित्यण् । न वितथा अवितथा सत्या लिपिः अभवत् आसीत् तां मिथ्या न करोषि निजे वारिणि स्नातं एनं पापिनं । अन्वादेशे एनादेशः । दिवं स्वर्गं नयसि तत्तस्मात् कारणात् तव वर्णने भुवि कश्चित् नरः विभुः समर्थः नास्ति । ब्रह्मलिपेः संरक्षणं स्वर्गं प्रति नयनं च विरोधस्तस्माद्विरोधाभासालंकारः । परिहारस्तु ना अयमितिच्छेदः । नृशब्दस्य प्रथमा अयं ना नरः नाकं स्वर्गं यास्यति इति ॥ ४८ ॥

---

१२. '०प्रभुः' पा० मे० ।

मातः पापचया मया हि[13] विहिता निःशंकमंकस्थितम् ।
बालं कालमुखान्न मोचयसि चेत्क्लेशापहाख्यां त्यज ॥
भानुर्भाति न वा क्षमा न सहते चंद्रो न चंदत्यथो ।
वायुर्वाति न वेति कुत्रचिदियं वाणी श्रुता किं वद ॥ ४९ ॥
आधारात्तव देवि पातकततिस्त्रैलोक्यमातः कृता ।
कीनाशप्रभवं भयं न गणितं लोकापवादादपि ॥
देवेंद्रैरभिवंदिते भगवति त्वन्नाथमंबाधुना ।
कालश्चेद्ग्रसिता व्रजेत्तव लयं कीर्तिः पुरा संचिता ॥ ५० ॥
दैत्यद्विट्पदसंभवांगुलिनखाग्रोद्भूतभागीरथी-
पाथस्तुंगतरंगसंगतमरुत्स्पर्शक्षणे निर्मलाः ॥
जायंते मनुजा व्रजंति च दिवं त्वं यत्स्वयं श्रीहरिः
साक्षान्मृत्युभयाद्विमोचयसि चेन्नाश्चर्यमेतत्तव ॥ ५१ ॥

मातरिति । हे मातः मया तु पापचयाः पापसंघाः निःशंकं विहिताः त्वदाश्रयादिति भावः अंके उत्संगे स्थितं बालं मां कालस्य यमस्य मुखात् न मोचयसि चेत्क्लेशान् अपहंतीति क्लेशापहा क्लेशापहा चासौ आख्या क्लेशापहाख्या तां त्यज मुंच । अपेच क्लेशतमसोरिति डः । न तु तव रक्षणे मम शक्तिर्नास्ति क्लेशापहाख्यां त्यक्ष्यामीति चेदाह । भातीति भानुः नभाति न प्रकाशते । क्षमते सा क्षमा पृथ्वी न सहते न क्षमते । चंदतीति चंद्रः न चंदति नाह्लादयति वातीति वायुः न वाति न वहति । इति वाणी कुत्रचित् श्रुता किं वद । इदं यथा कदापि न भवति तथा क्लेशापहाख्यात्यागोपि न तस्मान्मद्रक्षणमेव तव युक्तमित्यर्थः ॥ ४९ ॥

आधारादिति । त्रयो लोकास्त्रैलोक्यं । चतुर्वर्णादित्वात्स्वार्थेष्यञ् । त्रैलोक्यस्य माता त्रैलोक्यमाता तत्संबुद्धौ हे त्रैलोक्यमातः हे देवि मया तव आधारात् पातकानां ततिः कृता कीनाशो यमः । कृतांते पुंसि कीनाशः क्षुद्रकर्षकयोस्त्रिषु इत्यमरः । तस्मात्प्रभवं भयं न गणितं लोकापवादादपि भयं न गणितं देवेंद्रैः अभिवंदिते हे भगवति हे अंब त्वं नाथो यस्य तं मां कालः ग्रसिता चेत्पुरा संचिता ते कीर्तिः लयं व्रजेत् गच्छेत् ॥ ५० ॥

दैत्येति । दितेः कश्यपपत्न्याः अपत्यानि दैत्याः । दित्यदित्यादित्येत्यादिना ण्यः तान् द्वेष्टीति दैत्यद्विट् वामनः तस्य पदं वामचरणः तस्मात्संभवा या अंगुलिः अंगुष्ठः तस्य नखं तस्य अग्रं तस्मात् उद्भूता या भागीरथी तस्याः यत्पाथः उदकं तस्य तुंगाः उच्चाः ये तरंगास्तैः संगतो यो मरुत् वायुस्तस्य यःस्पर्शक्षणः

---

१३. '०तु०' पा० भे० । १४. '०पापाप०' पा० भे० । १५ '०यत' पा० भे० ।

देवीयं सुरनिम्नगा किमु वरा कृष्णाथ वेत्थं पुरा
विज्ञातुं सुरलोकभूतल इमे पात्रे तुलाया विधौ ॥
कृत्वा संतुलयत्यहो हि गुरुतायोगाद्भुवं नात्यजत्
कृष्णा स्वर्गनदी स्वनाम निखिलं यार्थार्थ्यमेवानयत् ॥ ५२ ॥
कृष्णे कृष्णजले त्वदीयसलिले मज्जंति ये मानवा
दिव्यैर्यानवरैः प्रयांति हि यदा वैकुंठलोकं तदा ॥
निंदंति स्वतपांसि यज्ञनिकरान् स्वर्गंगता मानवाः
कृष्णास्नानफलं प्रपश्यत सुराः श्रीकृष्णरूपा इमे ॥ ५३ ॥
गोदां याति वियन्नदीति निखिला जल्पंति लोकाः स्फुटं
व्यासश्चापि लिलेख मंदगतिभिर्नो दृश्यते तत्र सा ॥

तस्मिन् मनुजाः निर्मलाः निर्दोषाः जायंते च परं दिव्यं स्वर्गं व्रजंति त्वं यत्स्वयं साक्षात् श्रीहरिः श्रीविष्णुरेव असीति शेषः। अतःमृत्योः भयात् विमोचयसि चेत् तव आश्चर्यं न। हरेरवतारो वामनः दितिपुत्रद्वेष्टा ब्राह्मणद्वेष्टेति गूढाशयः तस्य वामपदादिपरंपरया उत्पन्नायाः भागीरथ्याः एतत्सामर्थ्यं त्वं तु ब्रह्मपत्नीशापेन नदीत्वं प्राप्तः श्रीविष्णुरेव। कृष्णा कृष्णतनुः साक्षाद्वेण्या देवो महेश्वर इत्यादि वचनप्रामाण्यात् असि। अतः मृत्युभयवारणं तव नाघटितमित्यर्थः ॥ ५१ ॥

देवीति। विधौ ब्रह्मणि इयं देवी सुरनिम्नगा भागीरथी वरा श्रेष्ठा किमु अथवा कृष्णा वरा इत्थं विज्ञातुं सुरलोकश्च भूतलं च सुरलोकभूतले इमे पात्रे कृत्वा संतुलयति सति अहो इत्याश्चर्ये कृष्णा गुरोर्भावः गुरुता जाड्यं तस्य योगात् संबंधात्। वोतोगुणवचनादिति विकल्पात् ङीबभावः। भुवं नात्यजत् स्वर्गनदी भागीरथी निखिलं स्वनाम यायार्थ्यमेव अनयत्। स्वर्गनद्याः भूनदीत्वं न युक्तमिति-उपरिगतेतिभावः ॥ ५२ ॥

कृष्णे इति। कृष्णं जलं यस्याः सा कृष्णजला तत्संबुद्धौ हे कृष्णजले हे कृष्ण तव इदं त्वदीयं त्वदीयं च तत् सलिलं च त्वदीयसलिलं तस्मिन् ये मानवाः मज्जंति स्नांति ते यदा दिव्यैः यानवरैर्विमानैः वैकुंठलोकं व्रजंति तदा स्वर्गं गताः मानवाः स्वतपांसि श्रमसाध्यानि केचिद्यज्ञनिकरान् ज्योतिष्टोमादीन् श्रमसाध्यान् निंदंति। निंदनेकारणमाह। हे सुराः हे देवाः इमे मानवाः श्रीकृष्णरूपाः सरूपतामुक्तिभाज इत्यर्थः इदं कृष्णास्नानफलं प्रपश्यत। अल्पायासेन महत्फलं प्राप्तमेतैरस्माभिस्तु बह्वायासैरल्पफलं क्षयिष्णु च लब्धं धिगस्मान् धिगस्मत्तपांसीत्यर्थः ॥ ५३ ॥

गोदामिति। वियन्नदी भागीरथी सुरपूजिते कन्यायां सति गोदां याति इति

---

११. 'परं' पा० भे०।

कन्यायां सुरपूजिते स्फुटतरं त्वां सा तु संयाति यत्
तन्मन्ये जनपापसंघहरणोपायव्रतं शिक्षति ॥ ५४ ॥
वैकुंठः परिमाणवान् भगवती पाथोधिजैका तथा
यस्तु त्वत्सलिले निमज्जति नरो विष्णुत्वमागच्छति ॥
एवं विष्णुशतैर्निरंतरमितैर्लोके प्रपूर्णे पुरः
स्थास्यंति क्वनु विष्णवो जलधिजाहेतोर्विवादे कथम् ॥ ५५ ॥
इदमष्टकमष्टसिद्धिदं पठतां पापचयापहं परम् ॥
पुरुषोत्तमतुष्टिकारकं पठनीयं मनुजैरुषस्यदः ॥ ५६ ॥
एवं स्तुत्वा राजराजो नदीं तां तस्यास्तीरे दक्षिणे संस्थितः सँन् ॥
विप्राग्र्येभ्यः सर्वदानानि दत्वा नत्वा सर्वान् मीलिताक्षो बभूव॥५७॥
शर्वं सांबं संस्मरन् प्राणवायुमूर्ध्वं नीत्वा मूर्धमध्यं विभिद्य ॥
हित्वा देहं पंचभूतैरुपेतं नाकं यातो दिव्यदेहं दधानः ॥ ५८ ॥

निखिलाः जनाः जल्पंति वदंति । व्यासश्चापि लिलेख पुराणेषु इत्यर्थः । सा भागीरथी तत्र गोदायां मंदमतिभिः अज्ञैः न दृश्यते चर्मचक्षुरगोचरेत्यर्थः । सा तु भागीरथी तु स्फुटतरं स्पष्टं महाबलेश्वरपर्वते प्रवाहरूपेणोत्तरत आगत्य त्वां संयाति यत् तत्तस्माद्धेतोः जनानां पापसंघहरणे यः उपायः तस्य व्रतं शिक्षते अभ्यस्यति इति अहं मन्ये । तव तदपेक्षया ज्येष्ठत्वात् ज्ञानाधिक्याच्च पापहरणोपायाभ्यसनार्थमेवायातीवेत्यर्थः ॥ ५४ ॥

वैकुंठ इति । वैकुंठः परिमाणवान् इयत्तावान् भगवती पाथोधिजा लक्ष्मीः एका यस्तु त्वत्सलिले नरः निमज्जति सः विष्णुत्वं आगच्छति एवं निरंतरं इतैः गतैः विष्णूनां शतैः लोके वैकुंठलोके प्रपूर्णे सति पुरः अग्रे विष्णवः क्वस्थास्यंतिजलधिजाहेतोः विवादे कथं स्यात् ॥ ५५ ॥

स्तोत्रपाठफलमाह इदमिति । अष्टसिद्धयस्तु । अणिमा महिमा चैव गरिमा लघिमा तथा । ईशत्वं चवशित्वं च प्राप्तिः प्राकाम्यमेवचेत्यमरः ॥ ५६ ॥ अथास्य देहत्यागप्रकारो द्वाभ्यामाह एवमिति । मीलिते अक्षिणी येन सः मीलिताक्षः शर्वमिति ॥५७॥ दिवमिति । अवनतानां जनानां आनंदस्य करणे साधनीभूते । यद्वा अवनतजनानां शरणागतानां आनंदकः रणो यस्य तस्मिन् दिवं स्वर्गं याते गते सति नगरस्य ये नराः नार्यश्च तेषां नयनानि तेभ्यः विनिर्याताः वारां उदकानां चपलतरधाराः तटवर्तीं कृष्णाख्यां नदीं अखिलैर्नागरजनैः अनुल्लंघ्यां विदधुः चक्रुः । अतिशयोक्तिरलंकारः ॥ ५८ ॥

---

१७. ' ०सः ' पा० भे० ।

दिवं याते तस्मिन्नवनतजनानन्दकरणे
रणे शूरे वीरे नगरनरनारीनयनतः ॥
विनिर्याता वारां चपलतरधारा तटवती-
मतीवानुलुंध्यां विदधुरखिलैर्नागरजनैः ॥*

नाम्नैव कृष्णा तटिनी पुरा या तां वर्णतश्चापि तदैव चक्रुः ॥
नार्यः सरोजायतलोचनांतर्वर्त्यंजना निंदितचंद्रवक्त्राः ॥ ५९ ॥

बल्लालनामा स तु वीरवर्यस्तद्देहकृत्यं विहितं तदीयैः ॥
चक्रे धनं चापि ददौ द्विजेभ्यो दंतिव्रजग्रामतुरंगमादीन् ॥ ६० ॥

चिताभुवि स्थापितमत्र लिंगं दृषन्मयं प्रावृषि तज्जलौघैः ॥
मुहुर्मुहुश्चालितमप्यनेजन्नृपस्य पुण्येन तथाधुनापि ॥ ६१ ॥

चंद्रसप्तरसभूमिसंमिते (१६७१) शालिवाहनशके नृपोत्तमः ॥
कीर्तिमत्र विनिधाय सुस्थिरां दिव्ययानवसतिर्दिवं ययौ ॥ ६२ ॥

शाहोः सुतो राम इति प्रसिद्धो रम्यैरगण्यैः सहितो गुणौघैः ॥
तस्मादभूच्छाहुनृपः प्रतापप्रतापितारातिजवो जनेशः ॥ ६३ ॥

नाम्नैवेति । निंदितः चंद्रः यैस्तानि निंदितचंद्राणि निंदितचंद्राणि वक्त्राणि यासां ताः सरोजानि कमलानीव यानि आयतानि विस्तृतानि लोचनानि तेषां अंतर्वर्ति अंजनं कज्जलं यासां ताः तयोक्ताः नार्यः या नदी पुरा पूर्वं नाम्नैव कृष्णा आसीदिति शेषः । तां वर्णतः कृष्णेन वर्णेन तदैव कृष्णां नीलां चक्रुः । पूर्वं या कृष्णेति संज्ञा तां तस्मिन् राज्ञः वियोगक्षणे एव ययार्थां कृतवत्यः न तु सर्वदा ॥५९॥ बल्लालेति । बल्लालनामा प्रधानराट् तदीयैः राजबांधवैः विहितं तत्कालोचितं उत्तरकृत्यं चक्रे । दंतिनां व्रजाः समूहाः यद्वा दंतिनो गजाः व्रजा गवां गोष्ठाः तान् ददौ ॥ ६० ॥ चिताभुवीति । अत्र कृष्णायां चितायाः भूः चिताभूः तस्यां चिताभुवि स्थापितं दृषन्मयं पाषाणप्रचुरं तत् लिंगं शिवलिंगं प्रावृषि वर्षाकाले जलानां ओघैः मुहुर्मुहुश्चालितमपि एजतीति एजत् न एजत् अनेजत् अकंपमानं अस्ति नृपस्य शाहोः पुण्येन अधुनापि अस्मिन्नपि काले तथा अनेजत् अकंपमानं अस्ति प्रवाहेपि निश्चलमित्यर्थः ॥ ६१ ॥ चंद्रेति । दिविभवं दिव्यं दिव्यं च तत् यानं च दिव्ययानं विमानं तत्र वसतिर्यस्य सः नृपोत्तमः अत्र अस्मिन् लोके ॥ ६२ ॥ अथास्य दत्तपुत्रान्वयमाह यावत्समाप्ति । शाहोरिति । राम इति प्रसिद्धः शाहोः सुतः दत्त आसीदिति शेषः । तस्मात् रामात् पुनः शाहुः अभूत् ॥ ६३ ॥

---

१८. 'धीरे' पा० । * अधिकोऽयं श्लोकः क्वचित्

तदात्मजोयं रिपुदंतिसिंहः प्रतापसिंहो जगतीं सपत्नैः ॥
ह्रतां पुनः स्वामपहृत्य सर्वामास्तेऽधुना तां परिपालयन् सन् ॥६४॥
यदीयं प्रतापं समाकर्ण्य सर्वे द्विषंतः प्रभीताः प्रजग्मुर्दिगन्तान् ॥
द्विजानां व्रजा आययुर्यत्समीपं प्रतापादिसिंहो जयत्येष राजा ॥ ६५ ॥
भानौ प्रतापो म्रदिमा न तत्र चंद्रे मृदुत्वं नहि तत्र तापः ॥
प्रतापसिंहे द्वयमप्यदर्शि व्यवस्थया शत्रुजने नते च ॥ ६६ ॥
भूपालाधीश राजन् तव रिपुनिचयो भीतभीतोऽपयातो
देशात्स्वीयाद्दिगंतात्तदनु झटिति ते कीर्तिदूती प्रणुन्ना ॥
धर्तुं याता तमेनं चपलतरमतेस्तस्य त्वत्तापकीर्ति-
र्योद्धुं याता प्रयागेऽसितसिततटिनीव्याजतो युध्यतस्ते ॥ ६७ ॥
क्षमां त्वदीयां धरणी गृहीत्वा जनापराधान् सहते नितांतम् ॥
उदारतां कल्पतरुस्त्वदीयामभ्यस्य नूनं वितरत्यनंतम् ॥ ६८ ॥
इति श्रीशिवकाव्ये पुरुषोत्तमविरचिते एकादशश्चमत्कारः ॥ ११ ॥

॥ पूर्वार्धं समाप्तमेतत् ॥

अथ अस्मिन् काले वर्तमानं प्रतापसिंहं वर्णयति यावत्समाप्ति । तदेति । रिपव एव दंतिनो गजाः तेषां सिंहः ॥ ६४ ॥ यदीयमिति । प्रतापः प्रतापशब्दः आदिर्यस्येति प्रतापादिसिंहः प्रतापसिंह इत्यर्थः । तदाख्यः राजा जयति सर्वोत्कर्षेण वर्तते ॥ ६५ ॥ भानाविति । भानौ सूर्ये प्रकृष्टस्तापः प्रतापः तत्र भानौ मृदोर्भावः म्रदिम्ना मृदुत्वं । पृथ्व्यादीनां इमानिज्वक्तव्यईति इमानिच् । चंद्रे मृदुत्वं वर्तते इतिशेषः । तत्र चंद्रे तापः न । प्रतापसिंहे राज्ञि शत्रुजने नते शरणागते च विषये व्यवस्थायां द्वयमपि अदर्शि दृष्टं ॥ ६६ ॥ अथ प्रतापसिंहं प्रतिसभायां यदुक्तं तदेव श्लोकद्वयेनाह हे भूपालेति । भूपालानां अधीश सार्वभौमराजन् तव रिपूणां निचयः भीतभीतः सन् व्याख्यातमेतत्पूर्वं स्वीयाद्देशात् दिगंतं दूरदेशं अपयातः गतः । तदनु तदनंतरं ते तव कीर्तिः दूतीव कीर्तिदूती प्रणुन्ना प्रेरिता सती तं रिपुनिचयं धर्तुं याता गता चपलतरा मतिर्यस्य तस्य रिपुनिचयस्य दृप्ता गर्विता अपकीर्तिः योद्धुं याता प्रवृत्ता ते अकीर्तिकीर्त्यौ प्रयागे असिताच सिताच असितसिते असितासिते च ते तटिन्यौ च असिततसिततटिन्यौ असिततसिततटिन्योः यमुनाभागीरथ्योः व्याजात् इति व्याजतः मिषात् युध्यतः युद्धं कुरुतः ॥ ६७ ॥ क्षमामिति । स्पष्टार्थमेतत् ॥ ६८ ॥

इति श्रीशिवकाव्यव्याख्यायां काव्यप्रकाशिकाख्यायां स्वयंकृतायामेकादशश्चमत्कारः । पूर्वार्धंसमाप्तिमगात् । भगवान् गोपालकृष्णः प्रीयतामेतेन व्याख्यानेन ॥

---

१९. ‘ स शाहुनृपो राजते राजवर्यः ’ पा० भे० । २०. ‘ ०यस्मिन्नृपे तद्वय० ’ ‘ शाहौनृपे ’ इति च पा० भे० । २१. ‘ ०त्यभीक्ष्णम् ’ पा० भे० ।

[ काव्येतिहास-संग्रहांतर्गतम्. ]

[ ११ ]

# श्रीपुरुषोत्तमपंडितविरचितस्य

## श्रीशिवकाव्यस्य

उत्तरार्द्धम्

इदं

बी. ए. उपपदधारिणा मोडकोपाव्हेन बल्लाळसूनुना

जनार्दनेन

नैकपुस्तकसमालोचनपूर्वकं संशोध्य सटीकं प्रकाशितम्

तच्च पुण्यपत्तने ज्ञानप्रकाशनाम्नि मुद्रालयन्त्रालये मुद्रितम्.

शकाब्दाः १८०९.

# SHRI-SIVA-KAVYAM.

OR

A historical poem in Sanskrit on the rise, greatness, and fall of the Maratha Empire from the Times of Sivaji the Great to the Abdication of Baji Rao II 1627-1818 A. D.

BY

**PURUSHOTTAM PANDIT**

LATTER HALF

EDITED BY

**JANARDAN BALAJI MODAK B. A.**

*Printed at the "Dnyan Prakash" Press, Poona.*

POONA:

1887.

# शिवकाव्य-पूर्वार्द्ध.

## अनुक्रमणिका.

द्रव्यप्राप्ति--राज्यविभाग--अष्टप्रधान--राज्योपभोगकाल-मृत्यु.

## चमत्कार ६.

संभाजी–दिल्लीपतिपराभव–अवरंगजेब चिंताग्रस्त होतो-कबजी पूर्वप्रधान आवडत नाहींत-कबजीचें नादीं लागतो-दिल्लीपति भीमातीरीं-दिल्लीपतीच्या कन्येचें लावण्य-कबजी दिल्लीपतीचें मन संभाजीविषयीं दूषित करतो-संभाजीचें सौंदर्याचें वर्णन-अवरंगजेबाचे कन्येचें संभाजीवर प्रेम-संभाजी व अवरंगजेब यांची भेट-संभाजी कारागृहीं-संभाजीचा मृत्यु-अवरंगजेबाची कन्या त्यामुळें शोक करते-अवरंगजेब शाहूस घेऊन जातो.

## चमत्कार ७.

शाहुजन्म-बादशहा व त्याची कन्या यांचा शाहूची क्रीडा पाहून आनंद-अवरंगजेब दक्षिणेंत-शहरें वेढतो व मूर्ति फोडतो-पंढरीस येतो-विठ्ठलाचा कर कटीवर व शिरीं लिंग असण्याचीं कारणें-नरसोबाचे वाडीस जातो भुंगे राजारामाचा पुत्र शिवाजी-शाहूचें लग्न-अठरा वर्षें दिल्लीस वास-बादशहा स्त्रीसह दर्शनास बलावितो-दासीस राणीचा वेष-बादशहाचें दर्शन-बादशहा चौथा हिस्सा आपले राज्याचा देतो-देशीं जाण्याची आज्ञा मिळते-बादशहाचे कन्येचा निरोप-ताराबाई हा खरा शाहू नव्हे असें म्हणते-ती युद्धास प्रवृत्त होते-बाळाजी विश्वनाथ शाहूस भेटतो तो ताराबाईकडे जातो-शके १६२९ त शाहूस राज्याभिषेक.

## चमत्कार ८.

शाहूचे राज्याची भराभराट-बहिरोपंत पिंगळे-बाळाजी विश्वनाथ रजपूत व यवन यांस जिंकतो–त्यास पेशवे पद मिळतें–प्रधानमंडळ–शाहूची मृगया-दातृत्व–दहींभाकर देणारी बाई–तिला गांव इनाम-जयसिंह.

## चमत्कार ९.

कोंकणस्थ ब्राह्मणांचें दारिद्र्य-बाळाजी विश्वनाथाचे दोन पुत्र-बाळाजी विश्वनाथाचा मृत्यु-बाजीराव बल्लाळ पेशवा होतो-त्रिंबकराव दाभाडे सेनापति यास बाजीराव ठार मारतो-गोदास्तुति-बाजीराव दक्षिणा घेतो–बाळकृष्ण पंडित-सातार्‍यास बाजीराव परत येतो-शाहू व बाजीराव-निजामउल्मुल्क व बाजीराव यांचा बिघाड सबब-शाहू व बाजीराव.

## चमत्कार १०.

पुण्याची वसाहत व भरभराट-ब्राह्मणांच्या दक्षिणेचा इतिहास-रमणा-दक्षिणा समारंभवर्णन–शाहूस अतिसंतोष–चिमाजी आपा वसईवर जातो-समुद्रस्तुति-हल्ला-वसई सर करतो-संतति मस्तानी-समशेरबहादर-होळकरासह उत्तरेस बाजीराव जातो-त्याचा नर्मदातीरीं मृत्यु-राणोजी शिंदे व त्याचा वंश यांचें वर्णन.

## चमत्कार ११.

बाळाजी बाजीराव प्रधान-त्याजवर राज्यभार पुण्याचें वर्णन-देशाची भरभराट-शाहूचें वार्धक्य-पेशव्याचे हातीं राज्यनिक्षेप–माहुली–कृष्णास्तुति-मृत्यु–शोक-उत्तरकार्य-शाहूचे वंशज.

## शिवकाव्य-उत्तरार्द्ध.

### अनुक्रमणिका

### चमत्कार १२.

**बाळाजी बाजीराव ऊर्फ नानासाहेब.**

मंगलाचरण-राघोबादादाकृत उत्तर दिग्विजय--ऋतुवर्णन--उपवनक्रीडावर्णन-जलक्रीडावर्णन.

### चमत्कार १३.

**नानासाहेब.**

वर्षाऋतुवर्णन--शरदृतुवर्णन--राघोबादादाकृत उत्तरदिग्विजय--जयपूर जोधपूरदिल्लीविजय--यवनविजय--बल्लाळसंततिवर्णन-राघोबासंततिवर्णन--सदाशिरावभाऊचें अनपत्यत्व-द्रव्यखिचडीदान-ब्राह्मणमज्जन.

### चमत्कार १४.

**नानासाहेब.**

गोपिकाबाई नानासाहेबांचें मन दूषित करिते--सोनपतपानपतयुद्ध-नानासाहेब व गोपिकाबाई यांचा शोक--नानासाहेबांचा मृत्यु.

### चमत्कार १५.

**थोरलेमाधवराव.**

फलितपश्चर्या-कलिधर्मवर्णन--कलीस वरप्राप्ति-निजाम पुणें जाळतो-राक्षसभुवनची लढाई हैदराचा पराभव-क्षयरोगानें माधवरावाचें मरण-रमाबाईचें सहगमन.

### चमत्कार १६.

**नारायणराव.**

पूर्वजन्मवृत्त-वध.

### चमत्कार १७.

**सवाईमाधवराव.**

जन्म--तळेगांवची लढाई--विठ्ठर (स्टयुअर्ट साहेब) याचें पलायन-राजनीति-यशोदेशीं विवाह-पुणें शहराचें वर्णन. हरिपंत फडके यांचें मरण-महादजी शिंद्याचें मरण-निजाम युद्धाची तयारी करितो.

### चमत्कार १८.

**सवाईमाधवराव.**

खर्ड्याची लढाई-निजामाचा पराभव-निजामाची दुर्दशा-मशीरग्रहण-माधवराव गच्चीवरून उडी टाकतात-मृत्यु-नानाफडणीसाचा-मृत्यु-दौलतराव शिंद्याचें वर्णन.

### चमत्कार १९.

**अमृतराव यांची कारकीर्द.**

### चमत्कार २०.

**द्वितीय--बाजिराव.**

स्तुतिनिंदात्मक वर्णन-इंग्रज लोक चाकरीस ठेविले-सदाशिव माणकेश्वर दिवाण झाले-तीर्थाटण-सदाशिव माणकेश्वर व कवि यांची भेट-शिवाजी आदिकरून मराठे राजांवर संस्कृत काव्य करण्याविषयीं सदाशिव माणकेश्वर कवीस सांगतात-कवीस स्वप्नांत व्यासदर्शन व काव्य करण्याविषयीं व्यासाची आज्ञा-बापूगोखले सेनापति झाले-मोरोबा दीक्षित दिवाण झाले-इंग्रजांबरोबर लढाई ( खडकीची ) बाजीरावाचा पराभव-दीक्षित-दिवाण यांचें मरण-बाजीरावाचें पलायन-बापूगोखले यांचें मरण--बाजीरावाचें भागीरथीतीरीं (ब्रह्मावर्ती) राहणें-अल्फिष्टन साहेब पुण्यांत राज्य करूं लागतो-कविपूर्वजवर्णन काव्यसमाप्तिकाल.

**समाप्त.**

---

# अथ श्रीशिवकाव्यस्योत्तरार्द्धम्

## द्वादशश्चमत्कारः

श्रीरंगनाथ कुरु ते रतिमाप्तकाम स्वीयं कदापि न जहाति बुधोदयेच्छुः
देवद्रुमो वितरणे न विशेषकामो वांच्छासमं वितनुते नरि सर्वदेश ॥१॥

श्रीगणेशायनमः ॥ मंगलादीनि मंगलमध्यानि मंगलांतानि शास्त्राणि प्रथंते इत्यतः अस्य चमत्कारस्य ग्रंथमध्यस्थत्वात् मंगलं कर्तव्यमिति मंगलमारभते.

श्रीरंगनाथेति। रंगंति जानुभ्यां कराभ्यां च गच्छंति ते रंगाः बालाः गत्यर्थात् भ्वादिकात् रगि धातोः पचाद्यच्। तेषां नाथः स्वामी रंगनाथः। श्रिया युक्तश्चासौ रंगनाथश्च श्रीरंगनाथः तत्संबुद्धौ हे श्रीरंगनाथ हे बालकृष्ण ते रतिं प्रीतिं मयीति शेषः कुरु। यद्वा श्रीः अंग नाथेति छेदः। हे श्रीः अंग नाथ हे विष्णो श्रीसाहचर्यात् नाथशब्देन विष्णोर्ग्रहणं। शेषं पूर्ववत्। स्युः प्याट् पाडंग हे है भो इत्यमरः। यद्वा। श्रीः अंगना अथेति पदत्रयं। अथेति मंगलार्थे हे आप्तकाम पूर्णकाम एतेन भक्तमनोरथपूरणे शक्तिमत्वं सूचितं। ते अंगना श्रीः मयि अरतिं अप्रीतिं कुरुते त्वं रतिं कुरु। त्वयि रतिं कुर्वाणे सति सापि रतिं करिष्यतीति भावः॥ यद्वा। हे श्रीः मे इयं अंगना पत्नी मयि अरतिं अप्रीतिं कुरुते दारिद्र्यादिति भावः। अतः त्वं रतिं कुरु कृपाकटाक्षेणावलोकयेत्यर्थः। एवं सति दारिद्र्यपरिहारे मे पत्नी अनुकूला स्यादिति भावः॥ कुरुते इत्यस्यावृत्तिं मे इत्यस्याध्याहारो बोध्यः। ननु त्वयि कृपाकरणे मम किं प्रयोजनं इत्यत्राह॥ हे बुध हे देव उदयेच्छुः उदयमिच्छतीति उदयेच्छुः। यद्वा। उत्कृष्टः अयः शुभावहविधिः तमिच्छतीति उदयेच्छुः। अयः शुभावहो विधिरित्यमरः॥ स्वीयं स्वकीयं भक्तमित्यर्थः। कदापि कस्मिन्नपि काले न जहाति न त्यजति॥ कृपामेव करोतीत्यर्थः॥ यद्वा। उदयेच्छुः बुधः स्वीयमित्यादि पूर्ववत्। यद्वा। कं सुखं ददातीति कदः तत्संबुद्धौ हे कद सुखप्रद। सुखशीर्षजलेषु कं इति विश्वः। सविसर्गपाठे आप्तकामः पूर्णकामः बुधानां उदयं इच्छतीति बुधोदयेच्छुः स्वीयमस्यास्तीति स्वी धनवान् आत्मीयवान् वा यं कमपि न जहाति॥ ननु अभक्ते त्वयि कृपाविधानमयुक्तमित्यत्राह। देवद्रुमः कल्पवृक्षः वितरणे दाने विशेषकामः न। वांछासमं वांछातुल्यं वितनुते। विस्तारयति ददातीत्यर्थः। अतः हे ईश ते नरि त्वद्भक्ते मयि सर्वदा सर्वकालं वांछासमं वांछानुरूपं वितनु विस्तारय देहीत्यर्थः॥ यद्वा हे सर्वद इति संबुद्धिः। यद्वा सर्वे देशाः यस्येति सर्वदेशः तत्संबुद्धौ हे सर्वदेश सकलदेशाधिपते। यद्वा हे देव द्रुमः वृक्षः वीनां पक्षिणां तरणं वितरणं तस्मिन् वितरणे पक्षिस्थिती विशे-

बल्लालराघवसदाशिवनामधेयास्ते भ्रातरोऽग्नय इवाप्रतिमप्रभावाः
राजाज्ञया भरतखंडमखंडमेतदावुः सुरेश्वरपदांबुजदत्तचित्ताः ॥ २ ॥
नाना दादा भावुरित्थं त्रयाणामासन् संज्ञास्तत्क्रमाल्लोकसिद्धाः
अस्मिन् देशे चापि काले नराणां संज्ञा ज्ञेया अग्रिमश्लोकबद्धाः ॥ ३ ॥
दादा बाबा दाजि मामा च काका बापू अण्णा रावजी चापि तात्या
आत्या भावू चाप्यपाथो गबाबा श्रैष्ठे नृणां नाम नाना च लोके ॥ ४ ॥
नानानामापुण्यमेवाधितिष्ठंश्चक्रे राज्यं राजराजीवभानुः
सेनापत्यं राघवः स्वीचकार धीरो वीरो दानशूराग्रगण्यः ॥ ५ ॥

षकामः न ॥ उत्तमैः पक्षिभिः मयि स्थेयमनुत्तमैर्न स्थेयं इत्याग्रहो नास्तीतिभावः । अन्यत् पूर्ववत् ॥ १ ॥

बल्लालेति ॥ बल्लालराघवसदाशिवाः नामधेयानि येषां ते बल्लालराघवसदाशिवनामधेयाः । आख्याव्हे अभिधानं च नामधेयं च नाम चेत्यमरः । अप्रातिमः प्रभावो येषां ते अप्रतिमप्रभावाः । शोभनाः रायः सुरायः उत्तमधनानि तेषां ईश्वरः सुरेश्वरः राजा शाहुः तस्य पदांबुजं तत्र दत्तं चित्तं यैः ते तथोक्ताः। अन्यत्र सुरेश्वरः विष्णुः तस्य पदांबुजं । अन्यत् पूर्ववत् । अग्नीनां देवदूतत्वात् सर्वेश्वरानुसरणं युक्तं । ते भ्रातरः अग्नय इव आहवनीयादय इव एतत् भरतखंडं अखंडं अविच्छिन्नं यथास्यात्तथा । यद्वा अखंडमिति भरतखंडविशेषणं । राजाज्ञया शाहुराजाज्ञया ॥ अन्यत्र राजतेऽसौ राजा विष्णुः तस्याज्ञया आवुः ररक्षुः। अन्यत्र जाठराग्निरूपेण इति ज्ञेयं ॥२॥

नानेति । नाना इत्येका संज्ञा दादा इत्यपरा भावुरिति तृतीया । इत्थं अनेन प्रकारेण लोकेषु महाराष्ट्रजनेषु सिद्धाः प्रसिद्धाः । लोकस्तु भुवने जने इति विश्वः । त्रयाणां भ्रातॄणां संज्ञाः तासां बल्लालराघवसदाशिवसंज्ञानां क्रमः अनुक्रमः तस्मात्तत्क्रमात् आसन् ।। बल्लालो नानासंज्ञः राघवो दादासंज्ञः सदाशिवो भावुसंज्ञः आसीदित्यर्थः ॥ अत्रेदमवधेयं अपदं न प्रयुंजीतेति भाष्यप्रामाण्यात् अपदप्रयोगो साधुरतः स्वरादिनिपातमव्ययमिति आसां संज्ञानां स्वराद्यंतर्गतत्वात् अव्ययत्वात् अव्ययादाप् सुप् इति सुपो लुक् ॥ ३ ॥

अग्रिमं श्लोकं आह दादेति । नृणां मनुष्याणां विद्यया वा संपत्त्या वा वयसा श्रैष्ठे श्रेष्ठत्वे सति लोके महाराष्ट्रजने नामसंज्ञा दादा इत्यादिकापि जायते इति शेषः ॥ तृतीयचरणे च । अपि एते अव्यये अपा इति संज्ञा अथ इत्यव्ययं गबा इत्येका संज्ञा अबा इत्यप्येका संज्ञा शेषं सुगमं ॥ ४ ॥

बल्लालादित्रयः भरतखंडं ररक्षुरित्युक्तं तत्र त्रयाणां रक्षणप्रकारं आह श्लोकद्वयेन । नानेति ॥ राजान एव राजीवानि कमलानि तेषां भानुः विकासकः सूर्यः नानानामा बल्लालः पुण्यमेव पुण्याख्यनगरमेव अधितिष्ठन् सन् अधिशीङ्स्थासां

भावुः शाहोराज्ञया यौवराज्यं चक्रे चक्रिप्रीतिभाग् भाग्यशाली
एवं युक्तास्ते त्रयो लोककार्यं कारुण्येनापूर्णचित्ता अकुर्वन् ॥ ६ ॥
पुण्याख्या पूर्वर्धते स्मातिमात्रं पुण्यैर्लोकैरावृतानावृतापि
अब्धिश्चंद्रे पर्वणीवोदिते सा तस्मिन्नाथे लोकरक्षातिदक्षे ॥ ७ ॥
दादा सेनासार्धमागत्य वीरो जित्वा सर्वामुत्तराशां द्विजानां
अप्यातन्वन् भूतले कीर्तिवासो दाता यातः पुण्यमेव प्रपुण्यः ॥ ८ ॥
यो यो विप्रो यं यमर्थं ययाच तं तं दत्त्वा ते त्रयः स्वर्द्रुमत्वं
आपाद्येदं भूतलं संररक्षुः रक्षंतः स्वं क्षात्रकर्मावलंब्य ॥ ९ ॥

कर्मेति कर्मत्वं राज्यं चक्रे ॥ दादाख्यस्य कृत्यमाह । धीरः अत एव वीरः दाने धनत्यागे शूराः दानशूराः तेषां अग्रे गण्यतेऽसौ दानशूराग्रगण्यः अत्युदार इत्यर्थः । राघवः दादाख्यः सेनापतेः कर्म सैनापत्यं । गुणवचनेत्यादिना ष्यञ् प्रत्ययः । स्वीचकार स्वीकृतवान् ॥ ५ ॥

सदाशिवाख्यस्य कृत्यमाह भावुरिति ॥ चक्रमस्यास्तीति चक्री विष्णुस्तस्मिन् प्रीतिं भजतीति प्रीतिभाक् । अत एव भाग्येन संपत्त्या शालतेऽसौ भाग्यशाली भावुः शाहोः आज्ञया न तु स्वातंत्र्येणेति भावः ॥ युवा चासौ राजा च युवराजः तस्य कर्म यौवराज्यं चक्रे कृतवान् । कारुण्येन दयया आपूर्णं चित्तं येषां ते तथोक्तास्ते त्रयो युक्ताः एकचित्ता इत्यर्थः लोककार्यं जनकार्यं अकुर्वन् ॥ ६ ॥

पुण्याख्येति । अनावृतापि प्राकाररहितापि चोरादिभयरहितेति भावः । पुण्यैः सत्कर्मनिरतैः । शस्तं चाथ त्रिषु द्रव्ये पापं पुण्यं सुखादि चेत्यमरः ॥ लोकैः जनैः आवृता व्याप्ता सा पूः पुरी । लोकानां जनानां रक्षा रक्षणं तस्मिन् अतिदक्षे अतिचतुरे तस्मिन्नानाख्ये नाथे उदिते उदयं प्राप्ते सति चंद्रे पर्वणि पूर्णिमायां उदिते सति अब्धिरिव वर्धते स्म ववृधे ॥ ७ ॥

अथ दादाख्यस्य दिग्विजयमेकेनाह दादेति ॥ प्रकृष्टं पुण्यं यस्य सः प्रपुण्यः यतः दाता दादा राघवः सेनया सार्धं सेनासार्धं आगत्य गत्वा सर्वां उत्तराशां उत्तरदिशं जित्वा द्विजानां ब्राह्मणानामपि उत्तरा स्वदानोत्तरभाविनी यद्वा उत्तरा उत्कृष्टा या आशा धनेच्छा तामपि जित्वा सर्वानातिसंपन्नान् विधायेत्यर्थः ॥ भूतले कीर्तिरेव वासः वस्त्रं आतन्वन् विस्तारयन् सन् पुण्यमेव पुण्यनगरं एव यातः नान्यत्रेति भावः ॥ ८ ॥

य इति ॥ ते त्रयः भ्रातरः यो यो विप्रः यं यं अर्थं वस्तु । अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु इत्यमरः । ययाच तं तमर्थं दत्त्वा स्वर्द्रुमत्वं कल्पवृक्षत्वं स्वस्मिन्निति शेषः । आपाद्य संपाद्य । क्षत्रस्य क्षत्रियजातेः इदं क्षात्रं क्षात्रं च तत् कर्म च क्षात्रकर्म तस्येदमित्यण् । अवलंब्य स्वं स्वकीयं ब्राह्मणजातिधर्मं इत्यर्थः । रक्षंतः क्षंतः इमं भूमिलोकं ररक्षुः ॥ ९ ॥

राजन्वत्त्वाद्भूतलं द्वापरीयाः सर्वे धर्मा आयुरायुर्विना ते
आयुः स्याच्चेत्तत्समं युक्तमित्थं सर्वो लोकः प्राब्रवीद्भारतीयः[1] ॥ १० ॥
देवेंद्रांशान् तान् विदित्वा द्विजेशान् मध्वाद्याः षट् सेवितुं प्रादुरासन्
स्वे स्वे काले पुण्यलोकावृतायां पुर्यां तस्यां संस्थितान् वीरवर्यान् ॥११॥
अथ समाविरभूत्सुरभिस्तदा वरचयं रचयंस्तरुसंहतौ
सुमनसां मनसां सुखकारकं फलभरं नवपल्लवशालिनं ॥ १२ ॥
द्विजपतिः सहितो युवतीजनैर्जगदिनो गदिनोऽधिगताखिलः
उपवनं पवनं हयतो जयन् समविशत्प्रथितः क्षितिमंडले ॥ १३ ॥

राजन्वत्वादिति । द्वापरे भवाः द्वापरीयाः । वृद्धाच्छः । सर्वे ते पुराणप्रसिद्धाः धर्माः आयुर्विना आयुष्यं वर्जयित्वा । राजन्वत्वात् सुराजन्वात् । राजन्वान् सौराज्ये इति निपातनात्साधुः । भूतलं भूलोकं आयुः प्रापुः ॥ आङ् पूर्वाद्यातेर्लङि लङ् शाकटायनस्यैवेति झेर्जुस् ॥ द्विपाद्धर्मः प्रववृते । आयुस्तु शतवर्षमेव नाधिकमित्यर्थः । भारते भरतखंडे भवः भारतीयः सर्वः लोकः आयुः तेन द्वापरीयेण आयुषा समं तत्समं सहस्रसंख्यमित्यर्थः स्याच्चेद्युक्तं इत्थं प्राब्रवीत् उक्तवान् ॥ १० ॥

देवेंद्रांशानिति ॥ मधुर्वसंतः आद्यो येषां ते मध्वाद्याः षट् ऋतवः पुण्यैर्लोकैः आवृतायां व्याप्तायां तस्यां संस्थितान् वीरवर्यान् तान् द्विजेशान् ब्राह्मणपतीन् देवेंद्राः अष्टादिक्पतयः तेषां अंशान् विदित्वा ज्ञात्वा स्वे स्वे काले सेवितुं प्रादुरासन् प्रादुर्भूता बभूवुः ॥ ११ ॥

प्रथमं तावद्वसंतं वर्णयति अथेति । मंगलार्थं तदा तस्मिन् काले सुरभिः वसंतः । वसंते पुष्पसमयः सुरभिर्ग्रीष्म उष्मकः इत्यमरः । तरुसंहतौ वृक्षसमूहे मनसां अंतःकरणानां सुखकारकं । यद्वा सुमनसां इदं आवर्तते सुमनसां देवानामपि मनसां । सुपर्वाणः सुमनस इत्यमरः । सुखकारकं सुमनसां पुष्पाणां । स्त्रियः सुमनसः पुष्पमित्यमरः । वरचयं उत्तमसमूहं नवपल्लव-शालिनं फलभरं च रचयन् सन् समाविरभूत् प्रकटो बभूव ॥ १२ ॥

द्विजपतिरिति । जगति इनः श्रेष्ठः जगदिनः गदास्यास्तीति गदी तस्मात् गदिनः विष्णोः । व्रीह्यादिभ्यश्चेति इनिः । अधिगतं अखिलं संपूर्णं येन स अधिगताखिलः । क्षितिमंडले प्रथितः प्रख्यातः । पवनं वायुं हयतः हयेन सार्वविभक्तिकस्तसिः ॥ जयतीति जयन् अभिभवन् वायोरप्यधिकवेगमश्वमारूढ इत्यर्थः ॥ द्विजपतिः बल्लालः युवतीनां तरुणीनां जनैः समूहैः । शार्ङ्गरवाद्युवन् शब्दात् ङीप् । सहितः सन् उपवनं आरामं । आरामः स्यादुपवनं कृत्रिमं वनमेव यदित्यमरः । समविशत् ॥ १३ ॥

1 " भारतस्थः " पाठांतरम्.

द्विजवरं जवरंजितमानसं समधिरुह्य हयं हतदुर्जनं
अनुययौ पुरपाल इतीरितः स कथयन् मधुजां श्रियमूर्जिताम् ॥ १४ ॥
नवपलाशपलाशतरुव्रजे कुसुमसंहतिराशु मनोभुवः
शिखिविनिर्गतकर्णिशरावलिः किमु वियोगिविनाशकृदुद्यता ॥ १५ ॥
प्रतिदिनं सहकारशिलीमुखैर्विरहिणां हृदयानि विदार्य वा
रुधिरयुक् पललप्रचयोमुना विनिहितः स पलाशतरुष्वयं ॥ १६ ॥
नवदलावृतचूतशिखोद्गता सुरभिगंधिमनोरममंजरी
विरहिमानसदारुविकर्तने किमधुना मधुना विनियोजिता ॥ १७ ॥

द्विजवरमिति । पूरं पालयतीति पुरपालः इति ईरितः उक्तः पुरपालसंज्ञ इत्यर्थः ॥ सः तत्सेवकः जवेन वेगेन रंजितं तोषितं मानसं येन तं हयं अश्वं समधिरुह्य मधुजां वसंतसंभवां । मधु पुष्परसे क्षौद्रे मद्ये ना तु मधुद्रुमे । वसंते दैत्यभिच्चैत्रे स्यादुर्जाल्यां च योषिति इति मेदिनी ॥ यद्वा मधुजां चैत्रभवां । स्याच्चैत्रे चैत्रिको मधुरित्यमरः ॥ ऊर्जितां वर्धिष्यमाणां श्रियं शोभां कथयन् सन् हतदुर्जनं बल्लालं अनुययौ अनुजगाम ॥ १४ ॥

मधुजां श्रियं कथयन् यथा वियुक्तं तदेवाह नवपलाशेति । हे द्विजवरेति सर्वत्र संबुद्धिर्ग्राह्या ॥ नवानि पलाशानि पत्राणि येषां ते नवपलाशाः नवपलाशाश्च ते पलाशतरवश्च नवपलाशपलाशतरवः तेषां व्रजः समूहः तस्मिन् । पत्रं पलाशं छदनं दलं पत्रं छदः, पुमान् इत्यमरः । कुसुमसंहतिः पुष्पनिचयः वियोगिनां विरहिणां विनाशं करोतीति विनाशकृत् । मनोभुवः कामस्य । आशु शीघ्रं । शिखिनः अग्नेः विनिर्गता अत एव आरक्तेति भावः ॥ कर्णिशरावलिः कर्णिशरपंक्तिः उद्यता उदिता किमु ॥ उत्प्रेक्षालंकारः ॥ १५ ॥

प्रतिदिनमिति । वेत्युत्प्रेक्षांतरे स अयं पुष्पनिचयः अमुना मनोभुवा सहकाराणां पुष्पाणि सहकाराणि आम्रपुष्पाणि त एव शिलीमुखाः बाणाः तैः विरहिणां हृदयानि विदार्य स्फोटयित्वा पलाशतरुषु विनिहितः रुधिरयुक् रक्तयुतः पललप्रचयः मांससंघः । पललं क्रव्यमामिषमित्यमरः । किमु ॥ १६ ॥

नवेति । मधुना चैत्रेण अधुना वसंते नवानि यानि दलानि तैः आवृता या चूतशिखा आम्राग्रभागः तत्र उद्गता उत्पन्ना । सुरभिः मनोहरः गंधो यस्याः सा सुरभिगंधिः गंधस्यादुत्पूतिसुसुरभिभ्य इति इत् ॥ सुरभिगंधिश्चासौ मनोरममंजरी च सुरभिगंधिमनोरममंजरी विरहिणां मानसमेव दारु काष्ठं तस्य विकर्तने विदारणे विनियोजिता किमु । वसंतसहायेन चैत्रेण आम्रोपरिभागे प्रथममेकैवोत्पादिता मंजरी काष्ठभेदकक्रकचसाम्यात् क्रकचत्वेनोत्प्रेक्षिता ॥ १७ ॥

---

२ 'मुद्यताम्' पाठांतर.

नरपतेऽलिकुलं तव यत्पुरो भ्रमदुपैति मुहुर्निहतस्य तत्
अपयशोरिगणस्य शिरःस्थितं पदमदो ननु याचति सुस्थिरं ॥ १८ ॥
किमथवा मदनेन विनिर्मितं निगडमायसमेतदलिच्छलं
जिगमिषून्मनुजान् कुसुमोद्गमे सपदि बद्धुमनादृतयोषितः ॥ १९ ॥
विकचवारिजमध्यगता इमे मधुलिहो न शरा हि मनोभुवः
उदकजातनिषंगनिवेशिता उपरिपुंखमुखाः पिहिताननाः ॥ २० ॥
बकुलपुष्पनिविष्टमुखा इमे मधुलिहो न शरा मदनस्य ते
विरहिचित्तशरव्यविभेदनाभ्यसनलक्षितलक्ष्यविमोचिताः ॥ २१ ॥
नवदलावलितालिनि चंपके विकचपुष्पचयो न मनोभुवः
नरपतेः कनकासनमायतं मधुकरानुचरा न विशंति यत् ॥ २२ ॥

नरपते इति । हे नरपते अलीनां भ्रमराणां कुलं अलिकुलं । षटपदभ्रमरालयः इत्यमरः । भ्रमत् संचरत् सत् तव पुरः मुहुः उपैति यत् तत् निहतस्य तव अरिगणस्य शिरःस्थितं अदः अपयशः सुस्थिरं पदं याचति ननु ॥ पूर्वं पराजितानां तवारीणां शिरसि अपयशः स्थितमासीत् तत् पुनर्युद्धे तेषु हतेषु स्थानाभावात् भ्रमरमिषेण त्वां सुस्थिरं स्थानं याचतीतिभावः ॥ १८ ॥

उत्प्रेक्षांतरमाह किमिति । अथवा पक्षांतरे मदनेन अनादृताः उपेक्षिताः योषितो यैस्तान् कुसुमोद्गमे वसंते जिगमिषून् प्रवासं कर्तुमिच्छून् सपदि तत्कालं बद्धुं विनिर्मितं अयसः लोहस्य इदं आयसं । तस्येदमित्यण् । अलयः भ्रमराः छलं मिषं यस्य अलिच्छलं । छलं तु स्खलिते व्याजे इत्यमरः । निगडं ननु ॥ १९ ॥

विकचेति । विकचानि विकासं प्राप्तानि यानि वारिजानि कमलानि तेषां मध्यो मध्यभागः तत्र गताः इमे मधुलिहो भ्रमराः न हि किं तर्हीत्याकांक्षायामाह । उदकजातानि कमलानि त एव निषंगा इषुधयः । निषंगा इषुधिर्द्वयोरित्यमरः । तेषु निवेशिताः स्थापिताः उपरिपुंखमुखं येषां ते तथोक्ताः पिहिताननाः मनोभुवः मदनस्य शराः बाणाः संतीति शेषः ॥ २० ॥

बकुलेति । बकुलानां वंजुलानां । अथ केसरे बकुलो वंजुलोऽशोके इत्यमरः ॥ पुष्पाणि तेषु निविष्टानि मुखानि येषां ते तथोक्ताः रसास्वादनार्थमिति भावः । एते पुरोवर्तिनो मधु लिहंति ते मधुलिहः भ्रमराः न । तर्हि किमित्याकांक्षायामाह ॥ विरहिणां वियोगिनां चित्तं तदेव शरव्यं लक्ष्यं । वेध्यं लक्ष्यं शरव्येथ शराभ्यास उपासनमित्यमरः । तस्य विभेदनं तस्य अभ्यसनं अभ्यासः तस्मिन् विषये लक्षितानि यानि लक्ष्याणि पुष्परूपाणि शरव्याणि तेषु विमोचिताः मनोभुवः शराः बाणा इमे । विरहिमानसस्यातितीक्ष्ण्यात् तद्भेदनमशक्यं इति मत्वा मदनेन लघूनि बकुलपुष्पाण्यालक्ष्य पूर्वमभ्यासार्थं मोचिताः एते बाणाः । न भ्रमरा इति भावः ॥ २१ ॥

अयमशोकतरुः प्रथितः क्षितौ विरहिणा त्वतिशोक इतीर्यते
कमलजेन फलैः कुसुमैर्वै विरहितो विहितः स वरं हि तत् ॥ २३ ॥
नवजपाकुसुमानि भवन्मते मम मते रविणा स्वकरा इमे
विनिहिता इह राहुभयादसौ समधिगच्छति तानलिरूपतः ॥ २४ ॥
कदलिका कुसुमैश्च फलैर्दलैर्निजशरीरनिपातदिनावधि
निखिलमास्सु जनं परितर्पयत्यवनता वनतापहरापि सा ॥ २५ ॥
इतरवृक्षफलं फलमेव तन्नृप रसालफलं त्वमृतं मतम्
यदि तदीयरसः सितया युतः सघृतपोलिकयास्य न चोपमा ॥ २६ ॥

नवेति । नवानि यानि दलानि पत्राणि तेषां आवलिः पंक्तिः तया शालते तच्छीलः नवदलावलिशाली तस्मिन् । ताच्छील्ये णिनिः । चंपके विकचपुष्पचयः न । तर्हि किमित्याकांक्षायामाह । मनोभुवः कामस्य नरपतेः आयतं विस्तृतं कनकासनं सुवर्णमयसिंहासनं ननु । अत्रार्थे युक्तिमाह । यत् मधुकराः भ्रमराः चराः दूताः अतएव तत् सिंहासनं न विशंति । यद्वा मधुकरा एव अनुचराः मधुकरानुचराः शेषं पूर्ववत् ॥ २२ ॥

अयमिति । अयं पुरोवर्ती नास्ति शोको यस्मादिति अशोकः स चासौ तरुश्च अशोकतरुः क्षितौ पृथिव्यां प्रथितः अस्तीति शेषः । विरहिणा तु अतिशोकः अति अत्यंतं शोको यस्मात् स अतिशोकः इतीर्यते उच्यते । अतितापतप्तैर्जनैर्दर्शनक्षणे एव तापक्षयात् यः अशोक इत्युच्यते स एव विरहिणा तु तापदत्वात् अतिशोक इत्युच्यते इति भावः । सः अशोकः कमलजेन ब्रह्मणा वरैः उत्तमैः फलैः कुसुमैश्च विरहितः विहितः कृतः इति यत् तद्वरं हीति निश्चये ॥ २३ ॥

नवेति । जपायाः कुसुमानि जपाकुसुमानि नवानि च तानि जपाकुसुमानि च नवजपाकुसुमानि भवन्मते मम मते इह जपावृक्षे रविणा इमे स्वकराः राहुभयात् विनिहिताः स्थापिताः । असौ राहुः तान् रविकरान् अलिरूपतः भ्रमररूपेण समधिगच्छति ॥ २४ ॥

कदलिकेति । कदलिका कुसुमैः फलैः दलैः पत्रैश्च निजस्य स्वस्य शरीरस्य निपातदिनं अवधिर्यथा भवति तथा निखिलमास्सु सकलेषु मासेषु जनं परितर्पयति । सा अवनता सती वनस्य अरण्यस्य वृक्षच्छायारहितस्येति भावः ॥ अटव्यरण्यं विपिनं गहनं काननं वनमित्यर्थः ॥ तापः संतापः तस्य हरा हर्त्री पचाद्यच् अप्यस्तीति शेषः । यद्वा अवनतान् प्रणामकर्तॄन् अवतीति अवनतावनः सूर्यः । नमस्कारप्रियो भानुरिति स्मृतः । तस्य तापं उष्णं तस्य हरतीति हरा हर्त्री । यद्वा अवनतावनेति नृपस्य संबुद्धिः तापहरा उष्णहरा ॥ २५ ॥

इतरेति । इतरे आम्रभिन्ना ये वृक्षाः तेषां फलं तत् फलमेव । हे नृप रसाल-

**सकलचंद्रसुवृत्तसुपोलिका-सहितमाम्रफलोद्भ्दतसद्रसं ।**
**नवघृतेन विमिश्रितमत्ति यो द्विजपुरःसरमेष नरोत्तमः ॥ २७ ॥**
**पुरत इक्षुगणः स तु सन् महान् यदयमत्र कृषीवलकैस्तव ।**
**प्रणिहितोपि च यंत्रमुखे रसं मधुरमेव ददाति सुपुष्कलं ॥ २८ ॥**
**विदुरनीतिमपि श्रितमागतं समधिगम्य भवंतमिहैक्षुकं ।**
**रटति नास्त्यपराधलवो मयि किमिति यंत्रमुखेन निपीडनं ॥ २९ ॥**
**क्रमुकवृक्षततिः प्रसवोन्मुखी तव विभाति पुरः कृशतां गता ।**
**बदरपांडुमुखी युवतीव सा गुरुतरोदरलक्षितलक्षणा ॥ ३० ॥**

स्य फलं आम्रस्य फलं तु अमृतं अमृतवत्स्वाद्वित्यर्थः । मतं उक्तं ॥ यदि तदीयरसः सितया शर्करया सघृतपोलिकया च युतः तर्हि अस्य उपमैव नास्ति अमृतादप्यधिक इति भावः ॥ २६ ॥

सकलेति । यः पुमान् सकलः पूर्णः यः चंद्रः तद्वत्सुवृत्ता वर्तुला या सुपोलिका तया सहितं आम्रफलोद्भ्दतं सद्रसं नवघृतेन हैयंगवीनेन विमिश्रितं द्विजाः ब्राह्मणाः पुरःसराः यथा स्यात् तथा अत्ति भक्षयति एषः नरोत्तमः नरश्रेष्ठः दैववानितिभावः ॥ २७ ॥

पुरत इति । यः इक्षुगणः पुरतः अग्रभागे दृश्यते इति शेषः । स तु महान् महत्तरः सन् साधुः ॥ साधुत्वे युक्तिमाह ॥ यत् अत्र उपवने तव । कृषिर्येषामस्ति ते कृषीवलाः ॥ रजः । कृष्यसुनीत्यादिना वलच् प्रत्ययः । कृषीवला एव कृषीवलकाः तैः कृषीवलकैः । स्वार्थे कः । यंत्रस्य रसोत्पादकस्य लोके ‘ चरक ’ इति प्रसिद्धस्य मुखे प्रणिहितोपि दत्तोपि सुपुष्कलं अथ च मधुरमेव रसं ददाति ॥ २८ ॥

विदुरेति । इह अस्मिन् उपवने इक्षूणां समूहः ऐक्षुकं । तस्य समूह इत्यणि । विदुरस्य नीतिमपि भारते प्रसिद्धामपि अपिशब्दादन्या अपि नीतिः । अदंडयान् दंडयन् राजा दंड्यांश्चैवाप्यदंडयन् ॥ अयशो महदाप्नोति नरकं चापि गच्छतीत्यादिस्मृतीः पठंतमित्यर्थः ॥ श्रितं आगतं प्राप्तं भवंतं समधिगम्य ज्ञात्वा मयि अपराधलवः अपराधलेशः नास्ति यंत्रमुखेन निपीडनं किमिति रटति आक्रोशति ॥२९॥

क्रमुकेति । प्रसवस्य बालजननस्य उन्मुखी । अन्यत्र पूगीफलोत्पत्तेः उन्मुखी । कृशतां कार्श्यं गता ॥ बदरवत् पांडु मुखं यस्याः अन्यत्र बदरपांडु मुखं अग्रभागो यस्याः । गुरुतरं उदरं कुक्षिः अन्यत्र मध्यभागः तेन लक्षितं ज्ञातं लक्षणं अंतर्वत्नीत्वं यस्याः सा क्रमुकवृक्षाणां पूगवृक्षाणां । घोंटा तु पूगः क्रमुको गुवाकः खपुरोस्य तु इत्यमरः । ततिः पंक्तिः युवतीव तरुणीव विभाति शोभते ॥ ३० ॥

---

१ ‘ ०फलोद्भव० ’ पाठांतरम्.

नरशिरःसमसत्फलसंयुतास्तरुवरा इह भांति समंततः।
नृपतिगाधिसुतेन विनिर्मिता नरचयप्रसवाय महत्तमाः ॥ ३१ ॥
तरुगुरुः सरुरेव विराजते तव बले द्विरदो भगणे शशी ॥
सदसि सभ्यपतिर्मणिसद्गणे मणिरिवाप्रतिमोपि च मध्यमः ॥ ३२ ॥
तरुवरा इह संति महत्तमाः सुकुसुमैः सुफलैः सुदलैर्वृताः।
इह तथापि वनं सरुणामुना नृप विभाति तरुद्विजसूरिणा ॥ ३३ ॥
किमिह तेन निरर्थकजन्मना जनिमतामधमेन दुरात्मना
तपनतप्तजनाश्रयतापि नो जनुरमुष्य धिगस्तु नटाकृतेः ॥ ३४ ॥
तरुवरा इतरेऽङ्कुरजन्मतो निजनिपातदिनावधि सर्वथा
अनुदिनं विदधत्यखिलांगकैरुपकृतिं विरसा अपि खंडिताः ॥ ३५ ॥

नरेति। अतिशयेन महांतः इति महत्तमाः। नृपतिः यः गाधिःतत्सुतः विश्वामित्रः तेन नरचयस्य मनुष्यसंघस्य प्रसवाय उत्पत्त्यै ब्रह्मसृष्टौ मनुष्यान्मनुष्योत्पत्तिः अहं तु वृक्षान्मनुष्यमुत्पादयामि इति स्वासाधारणतपःप्रभावद्योतनाय विनिर्मिताः उत्पादिताः अत एव नरशिरोभिः मनुष्यशिरोभिः समानि तुल्यानि यानि फलानि नारिकेलानि तैः संयुताः तरुवराः नारिकेलाः समंततः परितः। समंततस्तु परितः सर्वतो विष्वगि-त्यपीत्यमरः। इह अस्मिन् उपवने उद्याने विभांति शोभंते ॥ ३१ ॥

तरुगुरुरिति। एषः पुरोवर्ती तरुगुरुः तरुश्रेष्ठः सरुः प्रसिद्धः तव बले सैन्ये द्विरद इव। भगणे नक्षत्रगणे। नक्षत्रमृक्षं भं तारेत्यमरः। शशीव। सदसि सभायां सभ्यानां सभासदां पतिरिव। संश्चासौ गणश्च सद्गणः मणीनां सद्गणः मणिसद्गणः तस्मिन् अप्रतिमः मध्यमणिरिव विराजते ॥ ३२ ॥

तरुवरा इति। हे नृप इह अस्मिन् वने यद्यपि सुदलैः सुपत्रैः सुकुसुमैः सुफलैः वृताः महत्तमाः संति तथापि वनं तरुवरा एव द्विजाः विप्राः तेषां मध्ये सूरिणा पंडितेन अमुना सरुणा विभाति शोभते ॥ ३३ ॥

गुणा दोषाश्च पदार्थमात्रे संति तेषां मध्ये गुणानां उद्भावनं दोषाणां तिरोधानं वैपरित्यं वा उभयोद्भावनं वा पंडितेच्छया भवतीति द्योतयन् अमुं तरुं स्तुत्वा तमेव निंदति किमिति। इह अस्मिन् वने निरर्थकं जन्म यस्य तेन जनिमतां जन्मवतां। जनुर्जननजन्मानीत्यमरः। अधमेन नीचेन दुष्टः आत्मा यस्य तेन तरुणा किं न किंचित्साध्यं इत्यर्थः। तपनः सूर्यः। तपनः सविता रविरि-त्यमरः। तेन तप्ताः ये जनाः तेषामाश्रयः तपनतप्तजनाश्रयः तपनतप्तजना-श्रयस्य भावः तपनतप्तजनाश्रयतापि नो नास्तीत्यर्थः। अतः नटाकृतेः अमुष्य जनुः जन्म धिक् धिक्कारोस्तु ॥ ३४ ॥

तरुवराइति। इतरे तरुवराः अंकुराणां जन्मतः जन्मनः सकाशात्। निजस्य

**गृहविधौ पटुता किमु दारुणि किमथवान्नविपाचनदक्षता**
**अनुपमं कुसुमं फलमप्यलं प्रमुदितं कुरुतेऽस्य जनं किमु ॥ ३६ ॥**
**चलदलो दलितद्विषदुच्चय श्रियमयं वितनोति निषेवके**
**हरिरिहारिहतिश्रितनंदको वसति यः सति यच्छति कं जने ॥ ३७ ॥**
**तुलसिकावनमेतदनुत्तमं रुचिरगंधविपूरितदिङ्मुखं**
**तदुपयातमरुत्सकलांहसां ततिमयं विधुनोति धिनोति नः ॥ ३८ ॥**
**दमनकावलयोऽत्र विभांति याः स किल भूमिगतः सकलो गुणः**
**समुदितो नु विभिद्य महीमिमां गुणगुणिव्यतिषंग इहैव नु ॥ ३९ ॥**

स्वस्य निपातदिनं पतनादिवसः सः अवधिर्यथा भवति तथा अनुदिनं दिवसे दिवसे सर्वथा सर्वप्रकारेण अखिलांगकैः सर्वैरंगैः अंकुरपत्रपुष्पफलाद्यैः उपकृतिं उपकारं विदधाति कुर्वंति । विगतः रसो येभ्यस्ते विरसाः शुष्का अपि खंडिता अपि अखिलांगकैः त्वगादिशिखापत्रांतैः उपकृतिं विदधाति नायमिति भावः ॥ ३५ ॥

गृहेति । अस्य दारुणि काष्ठे गृहस्य विधिर्विधानं तत्र पटुता कुशलत्वं अस्ति किमु नास्तीत्यर्थः अथवा अन्नस्य विपाचनं पाकः तत्र दक्षता दक्षत्वं किमु नास्तीत्यर्थः अस्य अनुपमं कुसुमं पुष्पं फलमपि जनं अलं अत्यंतं प्रमुदितं हृष्टं कुरुते किमु नेत्यर्थः ॥ ३६ ॥

चलेति । दलितो विनाशितो द्विषदुच्चयो रिपुसंघो येन तत्संबुद्धौ हे दलित-द्विषदुच्चय अयं चलदलः अश्वत्थः । बोधिद्रुमश्चलदलः पिप्पलः कुंजराशनः इत्यमरः । निषेवके सेवनकर्तरि श्रियं संपदं वितनोति ददाति इत्यर्थः किं च यः सति जने सत्पुरुषे कं सुखं । सुखशीर्षजलेषु कमिति विश्वः । यच्छति अर्पयति । अरेः शत्रोः हतिः हननं तदर्थं श्रितः नंदकः खड्गो येन । कौमोदकी गदा खड्गो नंदकः कौस्तुभो मणिरित्यमरः । स हरिः विष्णुः इह अस्मिन् वृक्षे वसति तिष्ठति ॥ ३७ ॥

तुलसिकेति । रुचिरगंधेन विपूरितं दिङ्मुखं येन तत् तुलसिकावनं पश्येति शेषः । अयं तस्मात् तुलसीवनात् उपयातः मरुत् वायुः सकलांहसां सकलपातकानां ततिं विधुनोति नाशयति नः अस्मान् धिनोति प्रीणयति तोषयतीति यावत् ॥ ३८ ॥

दमनकेति । अत्र वने याः दमनकानां आवलयः पंक्तयः विभांति शोभंते सः इमां महीं विभिद्य समुदितः सकलः भूमिगतः भूमिसंबंधी गुणो नु । ननु गुणस्य द्रव्यं विना अनवस्थानात् कथं गुणत्वमत आह । इहैव अत्रैव वने गुणगुणिनोः व्यतिषंगः वियोगः नु किमु । दमनकानां मूलं आरभ्य अग्रपर्यंतं रमणीयगंधत्वात् गंधगुणापाः भूमेर्गंध एकीभूयास्मिन् वने दमनकरूपेणोदितो ननु इत्युत्प्रेक्षा ॥ ३९ ॥

भुवनपेन जनांडविसर्जनाभ्यसनहेतुरियं विहिता पुरा
प्रतिकृतिः किमु सैष कपित्थको रुचिरवर्तुलसत्फलसंयुतः ॥ ४० ॥
रुचिरपक्वफलां बदरीमिमामविरतं कुजनः परिपीडयेत्
इति विधिर्विदधे धृतकंटकां तदपि सा लगुडैः परिपीड्यते ॥ ४१ ॥
अतिमनोरमगंधविपूरिताखिलककुब् रमणीयदलच्छवि
सकलपुष्पसमूहशिरःस्थितं तदिह पश्य सुमं नृप लाक्षिकं ॥ ४२ ॥
ऋतुषु षट्सु यथा कुसुमाकरः फलगणेषु यथाम्रफलं वरं
उडुगणेऽपि शशी महितस्तथा निखिलपुष्पचयेष्विह लाक्षिकं ॥ ४३ ॥
कमपि पक्षमपास्य मम प्रभो वद विचार्य मुहूर्तमनालसं
श्रवणगोचरमीक्षितमाहृतं यदिह लाक्षिकपुष्पसमं सुमं ॥ ४४ ॥

भुवनपेति । रुचिराणि शोभनानि वर्तुलानि संति यानि फलानि तैः संयुतः सैष कपित्थकः । भुवनानि पातीति भुवनपः विष्णुः तेन पुरा पूर्वं विहिता जनांडं ब्रह्मांडं तस्य विसर्जनं सृष्टिः तस्याभ्यसनं अभ्यासः तस्य हेतुः हेतुभूता इयं प्रतिकृतिः किमु ॥ ४० ॥

रुचिरेति । कुत्सितो जनः कुजनः यद्वा कोः पृथिव्याः जनः कुजनः रुचिराणि पक्वानि फलानि यस्यां तां पुरोवर्तिनीं बदरीं अविरतं निरंतरं परिपीडयेत् इति विधिः ब्रह्मा तां धृतकंटकां विदधे कृतवान् तदपि तथापि सा बदरी लगुडैः काष्ठैः ताड्यते कुजनपदमावर्त्य विभक्तिव्यत्ययेन कुजनेनेति कर्तरि तृतीया । दैवं पुरुषकारादपि प्रबलमिति तात्पर्यं ॥ ४१ ॥

अतीति । हे नृप इह वने अति अत्यंतं मनोरमो यो गंधस्तेन विपूरिताः अखिलाः ककुभः दिशो येन तत् । दिशस्तु ककुभः काष्ठा इत्यमरः । रमणीया दलच्छविर्यस्य तत् अत एव सकलपुष्पसमूहस्य शिरसि स्थितं अत्युत्तममित्यर्थः ॥ तत् भावप्रकाशादिवैद्यग्रंथेषु लाक्षापुष्पत्वेन प्रसिद्धं । लोके 'गुलाब' इति प्रसिद्धं । सुमं पुष्पं । प्रसूनं कुसुमं सुममित्यमरः । सममित्यपपाठः । पश्य अवलोकय ॥ ४२ ॥

ऋतुष्विति । षट्सु ऋतुषु मध्ये यथा कुसुमाकरो वसंतः वरः फलगणेषु आम्रफलं यथा वरं यथा उडुगणे नक्षत्रगणे । नक्षत्रमृक्षं भं तारा तारकाप्युडु वा स्त्रियामित्यमरः । शशी चंद्रः महितः पूजितः । तथा निखिलपुष्पचयेषु इह अस्मिन् भूलोके उपवने वा लाक्षिकं पुष्पं वरं अस्तीति शेषः ॥ ४३ ॥

कमपीति । हे मम प्रभो कमपि पक्षं अपास्य त्यक्त्वा मुहूर्तं घटिकाद्वयं नास्ति अलसो यथा स्यात्तथा विचार्य लाक्षिकपुष्पसमं सुमं श्रवणयोः कर्णयोः विषयीभूतं वा ईक्षितं वा आहृतं लब्धं यत् यदि यद्वा । यदि ह इति छेदः ह हर्षे तर्हि वद ।

१ ताड्यते इति वा पाठः

**मकरकेतुजयध्वज एष वा त्रिभुवनं प्रविजित्य समुच्छ्रितः**
**सकलपुष्पचतुष्पदकेसरी भ्रमदलिः कुसुमेषु मदद्विपः ॥ ४५ ॥**
**यत्पीतं सितयातिदाहशमनं पाथः सदानंददं**
**वर्णेनापि च गंधतो मृदुतया कांत्यातिशेतेऽखिलं**
**पुष्पाणां निचयं तदेतदमलं लाक्षाप्रसूनं बुधैः**
**प्राचीनैर्न हि वर्णितं प्रविततं तेभ्यः कविभ्यो नमः ॥ ४६ ॥**
**नरवराधिपते नवमल्लिका कुसुमिता युवतीव मधुव्रता**
**प्रियसमागमकंटकितांगका खलु विभात्यरुणच्छदभूषिता ॥ ४७ ॥**

तत्प्रसूनसमं प्रसूनांतरं नास्तीति भावः ॥ ४४ ॥

मकरेति । त्रयाणां भुवनानां समाहारस्त्रिभुवनं त्रैलोक्यं । पात्राद्यंतस्य नेति ङी बभावः । प्रविजित्य समुच्छ्रितः रोपितः एषः लाक्षापुष्परूपः ध्वज एव रोपित इत्यर्थः मकरकेतोः मदनस्य जयसूचको ध्वजः जयध्वजः । वेति विकल्पे । वा स्याद्विकल्पोपमयोरेवार्थे च समुच्चये इत्यमरः । यथा सार्वभौमः सकलां भुवं विजित्य जयध्वजं स्थापयति तथा कामेन त्रिलोकीं जित्वा एष लाक्षपुष्परूपः ध्वज एव रोपित इत्यर्थः । यद्वा सकलपुष्पचतुष्पदेषु केसरी सिंहः एषः । यद्वा कुसुमेषु कुसुमानि संति एषां ते कुसुमाः वृक्षाः । अर्शआदित्वादच् । तेषु मध्ये भ्रमंतः अलयो यस्मिन् सः भ्रमदलिः एषः मदद्विपः मत्तो गजः ॥ यद्वा कुसुमेषु पुष्पेषु तेष्वेव चतुष्पदेषु एष मदद्विपः । यद्वा कुसुमेषोः मदनस्य मदद्विपः ॥ ४५ ॥

यदिति । यत् पुष्पं एकवचनं जात्यभिप्रायेण पुष्पाणीत्यर्थः सितया खंडशर्करया । सहेति शेषः । पीतं भक्षितं सत् अतिदाहस्य शमनं नाशः भवतीति शेषः भावे ल्युट् यद्वा शमयतीति शमनं कर्तरि ल्युट् । लोके ' गुलकंद ' इति प्रसिद्धो यः सोत्र ग्राह्यः । यत् पुष्पं पाथः सत् उदकं सत् आनंददं भवतीति शेषः ग्रीष्मवसंतयोः यदुदकं तापशांत्यर्थं शरीरे क्षिपंति इदमपि लोके प्रसिद्धं । यत्पुष्पं वर्णेन गंधतः मृदुतया कांत्या च अखिलपुष्पाणां निचयं अतिशेते अतिक्रम्य तिष्ठति ततः एतत् अमलं लाक्षाप्रसूनं यैः प्राचीनैः बुधैः प्रविततं न वर्णितं तेभ्यः कविभ्यः नमः नमःस्वस्तीत्यादिना चतुर्थी ॥ ४६ ॥

नरेति । हे नरवराधिपते कुसुमानि संजातानि यस्याः सा कुसुमिता पुष्पवती अन्यत्र सरजस्का तारकादित्वादितच् । मधुव्रताः भ्रमराः संति यस्यां सा मधुव्रता सभ्रमरा अर्श आदित्वादच् । अन्यत्र मधु मद्यं तदेव व्रतं भक्षणरूपं व्रतं यस्याः सा मधुव्रता । प्रियस्य दोहदस्य अन्यत्र प्रियस्य इष्टस्य समागमः तेन कंटकितानि अंगानि यस्याः सा । समासांतः कप् । अरुणाः छदाः पत्राणि तैर्भूषिता । दलं पत्रं छदः पुमान् इत्यमरः । अन्यत्र छादयतः तौ छदौ ओष्ठौ ताभ्यां भूषिता नवमल्लि-

तरुवराश्रयलब्धपुरोगतिं भ्रमरगुंजितदत्तदलश्रुतिं
कुसुमहाससितां विततां लतां मृदुपदामिह पश्यत मालतीं ॥ ४८ ॥
कमलिनीमलिनीलतमां ततां द्विजपते जपते प्रददद्वसु
महितया हितया युत योषया सरसि तां रसितामवलोकय ॥ ४९ ॥
विधुमयूखसितैः कुसुमैर्वृता मधुकरारवकारणतां गता
किमु सखे भविता शतपत्रिका नवदला वद लक्षिकया समा ॥ ५० ॥
अतिमनोहरगंधसमाहृता-खिलमनाः सुमना कुसुमान्विता
पवनधूतदलैः पथिकानिमानिह समाह्वयतीव पुनः पुनः ॥ ५१ ॥

का युवतीव तरुणीव विभाति खलु ॥ ४७ ॥

तरुवरेति । तरुवरो वृक्षश्रेष्टः तस्याश्रयेण लब्धा पुरोगतिः ऊर्ध्वगमनं यया तां अन्यत्र तरुरिव वरः भर्ता तस्याश्रयेण लब्धा पुरोगतिः उर्ध्वगतिः स्वर्गगमन-योग्यतेति यावत् यया तां भ्रमराणां गुंजितं शब्दितं तस्मिन् दत्ते दलश्रुती दल-कर्णौ यया तां । श्रुतिः स्त्री श्रवणं श्रव इत्यमरः । अन्यत्र भ्रमंति ते भ्रमराः जाराः तेषां गुंजितं सकामाकुतं तत्र दत्ते दले इव श्रुती कर्णौ यया तां कुसुमान्येव हासः अन्यत्र कुसुमानीव हासः तेन सितां श्वेतां विततां विस्तृतां अन्यत्र विततां पीनावयवां । मृदूनि पदानि मूलानि यस्यास्तां अन्यत्र मृदुनी पदे चरणौ यस्यास्तां मालतीलतां । सुमना मालती नातीत्यमरः । मालतीं मालतीसंज्ञां युवतीं लतां च पश्यत बहुवचनमनुगाभिप्रायेण ॥ ४८ ॥

कमलिनीमिति । हितया हितावहया अतः महितया मानितया योषया युत हे द्विजपते ब्राह्मणाधिपते जपते जापकाय वसु धनं प्रददातीति प्रददत् त्वमिति शेषः । सरसि तडागे अलिभिः नीलतमां अतिनीलां तां पुरोवर्तिनीं रसः सुगंध-रसः संजातो यस्याः तां । रसो गंधरसे जले इति मेदिनी । कमलिनीं अवलोकय ॥ ४९ ॥

विधिवेति । हे सखे विधोश्चंद्रस्य मयूखाः इव सितानि कुसुमानि तैः वृता । मधुकराणां भ्रमराणां आरवाः शब्दाः तेषां कारणतां कारणत्वं । आरवारावसं-रावविरावा अथ मर्मर इत्यमरः । गता प्राप्ता नवानि दलानि यस्याः सा नवदला शतपत्रिका लक्षिकया समा तुल्या भविता किमु वद नेत्यर्थ ॥ ५० ॥

अतीति । इह अस्मिन् उपवने अति अत्यंतं मनोहरो यो गंधस्तेन समा-हृतानि अखिलानां मनांसि यया सा कुसुमैः पुष्पैः अन्विता सुमना । जाती सुमना मालती जातीत्यमरः । पवनेन धुतैः कंपितैः दलैः पत्रैः इमान् पथिकान् पुनः पुनः आह्वयतीव आकारयतीव ॥ ५१ ॥

कुसुमिता जनवल्लभतामिता सुपिहिता मधुपैः परिवारिता
अवनता गणिका वितता लता किमु सखे भवता समवेक्षिता ॥ ५२ ॥
सुरुचिरान् रुचिराजसमद्युते कुरबकान् जननाथ कुरंटकान्
समवलोकय ते पुरतः स्थितान् सकलिकान् कलिकालभयापहन् ॥५३॥
सिततरैः कुसुमैरभिभूषिता हरितपत्रचयैः परिवारिताः
जलधरा उडुसंहतिभिर्युता इव विभांति पुरो हयमारकाः ॥ ५४ ॥
बंधुजीवनृप बंधुजीवकं यद्विभाति पुरतस्तव प्रभो
भालजस्तिलक एष कौंकुमो वर्तुलः कुसुमकालजश्रियः ॥ ५५ ॥

कुसमितेति । हे सखे कुसुमानि संजातानि यस्याः सा कुसमिता । सपुष्पा अन्यत्र सरजस्का अतः जनवल्लभतां इता प्राप्ता अतः सुतरां पिहिता आवृता मधुपैः भ्रमरैः अन्यत्र मद्यपैः परिवारिता वेष्टिता अवनता नम्रा वितता विस्तृता अन्यत्र पुष्टा गणिका नाम लता । गणिका युथिकांबष्ठा सा पीता हेमपुष्पिकेत्यमरः । अन्यत्र गणिका वेश्या समवेक्षिता किमु ॥ ५२ ॥

सुरुचिरानिति । रुचीनां राजा इति रुचिराजः सूर्यः । रुचः प्रभा रुग् रुचिस्त्विट् भेत्यमरः । तेन समा द्युतिः कांतिर्यस्य तत्संबुद्धौ हे रुचिराजसमद्युते । यद्वा । रुचिराज समद्युते इति पदद्वयं । रुचिरं अजति गच्छतीति रुचिराजस्तत्संबुद्धौ हे रुचिराज । मया लक्ष्म्या सहितः समो विष्णुः तस्य द्युते प्रकाश हे विष्ण्वंश इत्यर्थः । यद्वा । रुचिरा अजा मा यस्य स रुचिराजः मया सहितः समरुचिराजश्चासौ समश्च रुचिराजसमो विष्णुः तस्य द्युते प्रकाश । यद्वा । रुचिरः अजो मेषो यस्य स रुचिराजो बन्हिस्तेन समा द्युतिर्यस्य तत्संबुद्धौ । हे जननाथ लोकपते कलिसंज्ञो यः कालः कलिकालः तस्माद्भयं कलिकालभयं तदपहंतीति कलिकालभयापहा तत्संबुद्धौ हे कलिकालभयापहन् । क्विप् । ते पुरतः स्थितान् सकलिकान् कुरबकान् । अरुणकुरंटकान् सैरेयकस्तु झिंटी स्यात्तस्मिन् कुरबकोऽरुणे इत्यमरः । कुरंटकांश्च पीतपुष्पान् । पीता कुरंटको झिंटी तस्मिन् सहचरी द्वयोरित्यमरः । समवलोकय पश्य ॥५३॥

सितेति । सिततरैः अतिशुभ्रैः कुसुमैः अभिभूषिताः अभितः शोभिताः । हरितानि यानि पत्राणि तेषां चयैः परिवारिताः । हयमारकाः करवीराः । प्रतिहासशत प्रासचंडातहयमारकाः ॥ करवीरे करीरेत्वित्यमरः । उडूनां नक्षत्राणां संहतिभिर्युताः । जलधराः सजलमेघा इव पुरतः अग्रे विभांति शोभंते । अभूतोपमेयं ॥५४॥

बंधुजीवेति । बंधून् जीवयतीति बंधजीवः तत्संबुद्धौ हे बधुर्जीव नृप तव पुरः यत्बंधुजीवकं बंधुजीवस्य कुसुमं बंधुजीवकं बंधूकपुष्पं । बंधूको बंधुजीवकः इत्य-

२ ध्रुव इति वा पाठः

किमिह तप्तमतीव तपोमुना पनसनामभृता तरुणा ह्ययं
फलभरं विदधात्यखिलांगकैः सकलवृक्षफलेषु महत्तरं ॥ ५६ ॥
कृशतनुः परिणाहिफलद्वयस्तनभरेण नतोदितकंटका
परभृताविरुतैरिह दाडिमी नृप समाह्वयतीव विभाव्यते ॥ ५७ ॥
पुरत एष रसालसमुच्चयः फलभरानतपूर्वकलेवरः
फलदलादिभिरत्र समर्चयन् सुजनतां प्रगतः पथिकं नरं ॥ ५८॥
इह रसालमुखानि फलान्यलं स्वसमये मधुराणि न चान्यदा
अविरतं रुचिरैव हि गोस्तनी नरहिता रहिता न रसेन या ॥ ५९ ॥

मरः । पुष्यमूलेषु बहुलमिति लुक् । विभाति शोभते । सः एषः कुसुमकालः वसंतः तस्य या श्रीः तस्याः कुंकुमस्य अयं कौंकुमः । वर्तुलः भालजः भालस्थितः तिलकः ध्रुवं ॥ ५५ ॥

किमिति । पनस इति नाम पनसनाम पनसनाम बिभर्तीति पनसनामभृत् तेन । पनसः कंटकिफल इत्यमरः । तरुणा वृक्षेण इह अस्मिन् लोके किं तपः अतीव अत्यंत तप्तं तन्न जाने इत्यर्थः । हि यस्मात् अयं पनसः सकलवृक्षफलेषु महत्तरं फलभरं अखिलांगकैः सर्वावयवैः विदधाति धारयति ॥ ५६ ॥

कृशेति । हे नृप कृशा नातिपुष्टा तनुः यस्याः सा परिणाहो विशालता अस्या-स्तीति परिणाहि । परिणाहो विशालतेत्यमरः । यत्फलद्वयं तावेव स्तनौ तयोः भरेण नता नम्रा उदिताः कंटकाः यस्याः सा दाडिमी परभृतानां कोकिलानां विरुतैः शब्दैः त्वामिति शेषः समाह्वयतीं आकारयतीव विभाव्यते ॥ ५७ ॥

पुरत इति । अत्र उपवने पुरतः अग्रे एषः । कलेवरस्य पूर्वो भागः पूर्वकलेवरं । पूर्वापरेत्यादिना समासः । उत्तरपदार्थस्य प्राधान्यान्नपुंसकत्वं । फलभरेण । आनतं पूर्वकलेवरं यस्य तथोक्तः । पंथानं गच्छतीति पथिकः तं पथिकं नरं फलदला-दिभिः समर्चयन् सन् सुजनस्य भावः सुजनता तां साधुत्वं प्रगतः । यथा साधुः स्वगृहं आगतमतिथिं शिरसा नमन् अतिभक्त्या फलदलादिभिरर्चयति तथायमपि इति भावः ॥ ५८ ॥

इहेति । रसालस्य आम्रस्य फलं रसालं । फले लुगिति लुक् । रसालं मुखं मुख्यं एषां तानि रसालमुखानि फलानि स्वसमये स्वपरिपाकावस्थायां अलं अत्यंतं मधुराणि अन्यस्मिन् काले अन्यदा । सर्वैकान्यकियत्तदः काले दा इति दा प्रत्ययः । न मधुराणि । गोस्तनी द्राक्षा तु । मृद्वीका गोस्तनी द्राक्षेत्यमरः ॥ अविरतं निरंतरं परि-पाकावस्थानांतरमपीत्यर्थः ॥ रुचिरैव उत्तमैव हि यस्मात् कारणात् या रसेन रहिता न सर्वदा रसयुक्तैवेत्यर्थः । अतः नराणां हिता नरहिता । पित्तादिविकारपरिहारेण सुखप्रदेत्यर्थः ॥ तदुक्तं वैद्यके । द्राक्षया त्रिफलया त्रिवृता च स्रंसनेन रुधिरस्रुति-

उपवने रहितेऽपि घनांबुना दिनकरेण करैरभितापिते
विरचितां मधुना रुचिरां श्रियां स समवेक्ष्य विहर्तुमना अभूत् ॥ ६० ॥
युवतयोऽपि ययुस्तडिदंबराः सुवदना मदनाहृतचेतसः
जलजजातदलायतलोचनाः कनककुंभकुचा मधुलिट्कचाः ॥ ६१ ॥
स तरुणस्तरुणीस्तरुशोभया विततयोपहितोपवनस्थले
मनसिजं जनयन् जनवंदितः समवदद्वदतां धुरि संस्थितः ॥ ६२ ॥
पुष्पार्थं समुपागताः किमथवा याताः फलार्थं वने
नाथास्मद्गृह एव पुष्पनिचयो याताः फलार्थं वयं
पुष्पाण्येव फलंति हे प्रियतमा वांछंति पाथः परं
तन्नास्ति स्वगृहे बुधातिजरठा दातुं न शक्ता जलं ॥ ६३ ॥

मिश्र । सर्पिषा च पयसा सितया च स्वादुना भवति पित्तनिवृत्तिः ॥ ५९ ॥

उपवनेति । सः बल्लालः मधुना वसंतेन दिनकरेण सूर्येण करैः किरणैः अभितापिते सर्वतः शोषितेपि घनांबुना मेघोदकेन रहितेपि उपवने विरचितां उत्पादितां रुचिरां श्रियं समवेक्ष्य अतिकरालरविकराकलितेपि जीवनप्रदोदकलेशरहितेपि उपवने वसंतेन कल्पितां फलदलपुष्पादिसंपदमवेक्ष्येत्यर्थः विहर्तुं मनो यस्येति विहर्तुमनाः । तुं काममनसोरपीति मकारलोपः । अभूत् ॥ ६० ॥

विहर्तुमना अभूदित्युक्तं तत्र विहारस्य मुख्यं साधनमाह युवतय इति । तडित इव अंबराणि यासां ताः तडिदंबराः । शोभनानि वदनानि यासां ताः । मदनेन आहृतं चेतो यासां ताः । जले जातं जलजं तस्य पत्राणीव आयतानि लोचनानि यासां ताः । कनककुंभौ सुवर्णकलशौ ताविव कुचौ यासां ताः । मधुलिह इव कचाः यासां ताः युवतयोपि ययुः ॥ ६१ ॥

स इति । जनैः वंदितः वदतां वक्तॄणां धुरि अग्रभागे स्थितः विततया विस्तृतया तरूणां शोभया उपहितं आच्छादितं यत् उपवनं स्थलं अतिनिबिडच्छायं इत्यर्थः तस्मिन् स्थितः तरुणः सः बल्लाळः मनसिजं कामं जनयन् सन् तरुणीः समवदत् ॥ ६२ ॥

परकीयानां दुःसाध्यत्वात् तदाशयं जिज्ञासुः पूर्वं वास्तवं एवाह । पुष्पार्थमिति । एताः पुष्पार्थं पुष्पत्रोटनार्थं समुपागताः अथवा फलार्थं वने उपवने याताः समुपागताः । इति तरुणस्य तरुणीः उद्दिश्य स्वसखं प्रत्युक्तिः । तासामाशयाज्ञाने साक्षाद्वक्तुमयुक्तत्वात् । तास्तु इति श्रुत्वा धाष्टर्येन कामिनमेवाहुः । हे नाथेति चरणेन । हे नाथ अस्मद्गृह एव पुष्पनिचयः अस्तीति शेषः अस्मद्गृहपुष्पवाटिकायां बहूनि पुष्पाणि सन्तीत्यर्थः । अतः फलान्येव अर्थः प्रयोजनं यासां ताः वयं याताः प्राप्ताः । अस्मद्गृहे अस्मद्देहे पुष्पनिचयः रजःसंचयः प्रतिमासं

सुकुसुमं किमु लब्धमितः प्रिये किमिह तेन फलार्थमुपागता
फलयुगं नु पुरः परिदृश्यते तदुपयुक्तमलं रसिकस्य ते ॥ ६४ ॥
किमबले पुरतः परिदृश्यते शृणु पुमानबलो युवती न यत्
जयति नित्यममुं युवती रतौ न पुरुषो युवतीं तु कदाचन ॥ ६५ ॥
हे नाथ ते यशसि चावयवे धने च नित्यं गुरुत्वमभिवांछति मानसं मे
कांतऽखिलेष्ववयवेषु च ते गुरुत्वं मध्यं विनाहमपि संस्पृहयामि नित्यं॥६६

दृश्यते अतस्त्वत्तः अपत्यरूपफलार्थाः याताः इति वास्तवोर्थः । तासामाशयं ज्ञात्वा कामी ता एवाह । हे प्रियतमाः पुष्पाण्येव फलंति फलानि ददतीत्यर्थः । कुसुमेभ्य एव फलानि उत्पद्यंते किमागमनप्रयोजनमिति भावः । ता ऊचुः । पुष्पाणि फलंति सत्यं परंतु परं अमोघं पाथः उदकं। पाथोर्णः सलिलं जलमित्यमरः। वाञ्छंति इच्छंति वीर्योत्सर्गं विना फलाभाव इति भावः । कामी प्रत्याह स्वगृहे तत्पाथः नास्ति किं भवद्गृहेषु वीर्यदाः न संति किं इति भावः । ता ऊचुः । हे बुध अतिजरठाः अतिवृद्धाः अस्मत्पतयः इत्यर्थः । जलं उदकं दातुं न शक्ताः । अस्मत्पतीनामतिवार्ध्यात् त्वया सह रंतुमागता इति भावः । अत्र प्रकृतफलावचयमिषेण प्रकृतापत्यलब्धिकामनाबोधेन प्रकृतांकुरः । तदुक्तं कुवलयानंदे । प्रस्तुतेन प्रस्तुतस्य ज्ञापने प्रस्तुतांकुरः ॥ ६३ ॥

अतिरमणीयां एकां दृष्ट्वाह । सुकुसुममिति । हे प्रिये इतः उपवनात् सुकुसुमं उत्तमं पुष्पं लब्धं किमु । कामिन्याह । इह अस्मिन् उपवने तेन कुसुमेन किं न किंचित् प्रयोजनमित्यर्थः । फलार्थं उपगता प्राप्तास्मीति शेषः वास्तवार्थः पूर्ववत् । कामी आह फलयोर्युगं फलयुगं स्तनद्वयमित्यर्थः । त्वदुरसीत्यर्थः परिदृश्यते । कामिन्याह तत् फलद्वयं रसिकस्य ते अलं उपयुक्तमित्यर्थः ॥ ६४ ॥

तदुपयुक्तमिति चरणगतार्थावबोधेन तस्याः स्वस्मिन् अधिकतरं भावं विज्ञाय कामी प्रत्याह । किमिति । हे अबले पुरतः अग्रभागे किं परिदृश्यते अतिसौकुमार्यबाधकाऽबले इति संबुद्धिः । कामिनी तु तस्याः अर्थांतरं प्रकल्प्यातिकामोद्दीपनार्थमाह । शृणु । पुमान् पुरुषः अबलः युवती तरुणी अबला न । अत्रार्थे साधकमाह । युवती तरुणी अमुं तरुणं रतौ रतिसंगरे जयति अभिभवति । जि जि अभिभवे इत्यस्य रूपं न तु जि जये इत्यस्य तस्याकर्मकत्वात् । पुरुषः युवतीं तु कदाचन कदापि न जयति नाभिभवति । युद्धात् यस्तावत् अपसृत्य गच्छति स पराजितो भवतीति लोके प्रसिद्धं तद्वत् अत्रापीति भावः ॥ ६५ ॥

कामिन्याहार्धेन हे नाथेति । हे नाथ स्वामिन् मे मानसं ते यशसि कीर्तौ धने च अवयवे च एकवचनं जात्यभिप्रायेण अवयवेष्वित्यर्थः । गुरुत्वं पुष्टतां नित्यं वांछति

१ पुरतः इति वा पाठः

यत्र पुष्पं फलं तत्र लतासु सकलास्वियं
अधःपुष्पोपरिफला दृष्टा किं वल्लरी त्वया ॥ ६७ ॥
कोकद्वंद्वमिदं सरोजमुकुले हैमौ शिवौ वा किमु
किंवा कंदुकयुग्ममेतदमलं कामस्य लीलाफलं
गोलौ कामिजनं निहंतुमथवा तस्यैव किं पर्वता-
वुत्पन्नौ युवतीभुवि प्रविततौ किंवा घटौ हाटकौ ॥ ६८ ॥
बाले तवाधरसुधारसपानकाले चेतो मदीयमिह वांछति शेषभावं
आलिंगने तव विरोचनपौत्रभावं आखंडलत्वमखिलांगनिरीक्षणे च ॥६९॥
शीर्षे पाणितलं निधाय युवते रेमे युवा कामिनी
मुष्टावस्य शिखां विगृह्य सुरतव्यापारदक्षाभवत्

अवयवे चेत्यकवचनान्तप्रयोगात् गुह्यस्य नित्यं पुष्टतामिच्छामीति तात्पर्यं ॥ कामी तदुत्तरमाहार्धेन । हे कांते ते अखिलेषु अवयवेषु गुरुत्वं मध्यं कटिप्रदेशं विना नित्यं स्पृहयामि इच्छामि मध्यं विना गुह्यं विना इति तात्पर्यं । त्वं तु मदवयवे गुरुत्वं इच्छसि अहं तु त्वदवयवे लघुत्वमिच्छामीति तात्पर्यं ॥ ६६ ॥

अन्यां उद्दिश्यान्यां प्रत्याह यत्रेति । सकलासु लतासु यत्र यस्मिन् प्रदेशे पुष्पं तत्रैव तस्मिन्नेव प्रदेशे फलं भवतीति शेषः । अधः पुष्पं यस्याः सा अधःपुष्पा । उपरि फलं यस्याः सा उपरिफला वल्लरी त्वया दृष्टा किं ॥ ६७ ॥

अन्यस्याः स्तनौ अतिरमणीयौ दृष्ट्वा अन्यां प्रत्याह । कोकेति । इदं कोकयोश्च-क्रवाकयोर्द्वंद्वं कोकद्वंद्वं किमु । कोकश्चके चक्रवाके इति विश्वः । वा सरोजयोः कमलयोः मुकुले कलिके किमु । यद्वा हेम्नः इमौ हैमौ शिवौ सांबलिंगे किमु । हेमशब्दादिदमर्थेऽणि टिलोपः । यद्वा कामस्य लीलैव फलं यस्य लीलाफलं अमलं स्वच्छं कंदुकयोर्युग्मं किं । अथवा तस्यैव कामस्यैव कामिजनं निहंतुं उत्पन्नौ गोलौ यंत्रगोलकौ किमु । यद्वा युवती तरुणी सैव भूः तस्यां उत्पन्नौ पर्वतौ किमु । यद्वा प्रविततौ विस्तृतौ हाटकस्य सुवर्णस्य इमौ हाटकौ तस्येदमित्यण् घटौ कुंभौ किमु ॥ ६८ ॥

एवं तां युक्त्या वश्यां विधाय तस्यां प्रेमातिशयं द्योतयन्नाह । बाले इति । हे बाले तवाधरसुधा अधरामृतं तस्य यो रसः तस्य पानं प्राशनं तस्य यः कालः तस्मिन् ममेदं मदीयं । वृद्धाच्छः । चेतः शेषस्य भावो भावना शेषत्वमित्यर्थः वांच्छति । तव लोकोत्तरस्य अस्य अधरामृतस्य एकेन पानं न स्याद्यदि सहस्राननः शेषः स्यां तर्हि यथेष्टं पास्यामीति भावः । एवमग्रेपि ज्ञेयं । तवालिंगने विरोचनस्य पौत्रः बाणासुरः तस्य भावं सहस्रकरत्वं इत्यर्थः । वांच्छति । अखिलांगनिरीक्षणे च आ-खंडलत्वं सहस्राक्षत्वं वांच्छति ॥ ६९ ॥

शीर्षे पाणितलं कुतो विनिहितं रक्षाविधेस्तालुनो
मुष्टौ किं शिखया प्रिये विधृतया वीरोधृतेरंततः ॥ ७० ॥
इत्थं विहृत्य हरिणीनयनाभिराभिः पाथो विवेश शमितारिरयं गजीभिः
युक्तो द्विपेंद्र इव पंकजधूलिजालसद्गंधगंधितमधःसितशीतमच्छं ॥ ७१ ॥
ताः क्लिन्नवस्त्रविवृतोरुकुचप्रदेशाः पंकेरुहाणि वदनैः परितो हसंत्यः
रत्या चिराय शयितं हृदये तदीये प्राबोधयन् स्मरमिवाधिपतिं प्रभाते ७२
पयोधरैर्वारिपराहतैर्यत् पयोधरं तत्कृतमेव तासां
पयोधराख्यां प्रययुर्यथार्थां पयोधरत्वं तु तदा न तेषु ॥ ७३ ॥

शीर्षे इति । युवा तरुणः युवतेः शीर्षे पाणितलं हस्ततलं निधाय दत्वा रेमे कामिनी अस्य तरुणस्य शिखां मुष्टौ विगृह्य धृत्वा सुरतव्यापारदक्षा अभवत् । अतिचातुर्यवती तरुणी प्रियस्याशयं मनसि विचार्य स्वयमपि तदुत्तरभूतं शिखाव-लंबनं कृत्वा अरीरमत इति भावः । रतिसमाप्तौ प्रियैव पूर्वमाह । शीर्षे इति । शीर्षे पाणितलं कुतः विनिहितं दत्तं । प्रियः तदुत्तरं आह । तालुनः तालुप्रदेशस्य रक्षाविधेः रक्षणविधानार्थं । तदनंतरं प्रियः आह । हे प्रिये मुष्टौ विधृतया शिखया किं । प्रिया उत्तरमाह । हे वीर अंततः अंतप्रदेशात् उद्धृतेः उद्धरणार्थं । संबं-धातिशयोक्तिरलंकारः ॥ ७० ॥

इत्थमिति । शमितारिः प्रशमित-रिपुः अयं प्रियः हरिणीनयनाभिः आभिः युवतीभिः विहृत्य गजीभिः युक्तः द्विपेंद्र इव पंकजानां धूलिः परागः तस्य जालं समूहः तस्य सन् यो गंधः तेन गंधितं संजातगंधं । तारकादित्वादितच् । अधः अंतः सिता शर्करा यस्येति अधस्सितं अधःसितं च तत् शीतं च अधःसितशीतं । अनेन विहार-काले मलक्षोभाभावो दर्शितः । अच्छं स्वच्छं पाथः उदकं विवेश प्रविष्टवान् ॥७१॥

इतःपरं जलक्रीडामाह ता इति । वदनैः मुखैः पंकेरुहाणि कमलानि हसंत्यः । स्वमुखशोभया कमलानि निरस्कुर्वत्य इत्यर्थः । क्लिन्नानि आर्द्राणि यानि वस्त्राणि तैः विवृताः दृग्गोचराः ऊरुकुचप्रदेशाः जंघास्तनप्रदेशाः यासां ताः रमण्यः तदीये हृदये चिराय चिरकालं रत्या रमणेन शयितं लुप्तं स्मरं कामं प्रभाते अधिपतिमिव राजा-नमिव प्राबोधयन् ॥ ७२ ॥

पयोधरैरिति । वारिणा पराहतैः ताडितैः तासां पयोधरैः स्तनैः यत् यस्मात् पयः उदकं अधरं नीचं स्वस्मात् अधः स्थितमित्यर्थः कृतं तत्तस्मात् यथार्थं पयः अधरं नीतं येभ्यस्ते पयोधराः पयोधरा इति आख्या तां प्रययुः प्रापुः । तस्मिन् काले पूर्वं संकेतितायाः यौगिक्याः पयोधरसंज्ञायाः यथार्थत्वाभावादितिभावः । तदेवाह तेषु स्तनेषु धरंति ते धराः पचाद्यच पयसां दुग्धानां धराः तेषां भावः तत्वं तदा तस्मि-

१ हतं इति वा पाठः

उत्तुंगपीनकुचकुंभयुगोपगूढा अप्यंगना न विमले सलिलेऽतरंस्ताः
भारेण या जघनजेन निपीड्यमानाः कामांबुधौ निपतितं जनमुद्धरंति ७४
अश्लेषि शोभाजितमंजुघोषा योषा सुभूषा महनीयवेषा
निमज्जनोद्भीतिमिषाददोषा दोषाकरास्या विदुषा प्रतोषा ॥ ७५ ॥
तिमिघट्टनसाध्वसान्विता नृपतेः प्रेत्य भुजौ गले न्यधात्
सकुचप्रतिपीडनं युवा स चुचुंबानतियत्नतस्तु तां ॥ ७६ ॥
एकस्यां दयितेन सादरतरं संलक्षितायां बलात्
भ्रूचापे परया विकृष्य नयनद्वंद्वाशुगाभ्यां हतः
धीरो वीर्यवियोजितः समभवत्किं चित्रमेकः शरोऽ
सह्यः सा तु शरद्वयेन युगपद्विव्याध वीरोत्तमं ॥ ७७ ॥

न् काले तेषु पयोधरेषु नासीत् तासां अप्रसूतत्वात् इति भावः ॥ ७३ ॥

उत्तुंगेति । जघनजेन नितंबसंभवेन भारेण कर्त्रा निपीड्यमाना अपि याः अंगनाः कामांबुधौ निपतितं जनं उद्धरंति रक्षंति ताः उत्तुंगौ उच्चौ पीनौ पुष्टौ यौ कुचौ तावेव कुंभौ तयोर्युगं तेन उपगूढाः युक्ता अपि विमले सलिले न अतरन् ॥ ७४ ॥

अश्लेषीति । वेत्तीति विद्वान् तेन विदुषा शृंगाररसाभिज्ञेन विदेर्वसुः शोभया शरीरकांत्या जिता मंजुघोषानामाप्सरा यया सा । सुकेशीमंजुघोषाद्याः कथ्यंते अप्सरसो बुधैरित्यमरः । शोभनाः भूषाः यस्याः सा सुभूषा । महनीयः रमणीयः वेषो यस्याः सा महनीयवेषा । नास्ति दोषो दुर्गुणो यस्याः सा अदोषा दोषाकर इव चंद्र इव आस्यं मुखं यस्याः सा दोषाकरास्या प्रकृष्टः तोषो यस्याः सा प्रतोषा । योषा तरुणी निमज्जनोद्भीतिमिषात् मज्जनोत्कृष्टभयव्याजात् अश्लेषि आलिंगिता । आलिंगनार्थात् श्लिष्यतेः कर्मणि लुंङि च्लेश्चिणि ततः परस्य लुक् ॥ ७५ ॥

तिमीति । तिमेः झषस्य । रोहितो मद्गुरः शालो राजीवः शकुलस्तिमिः इत्यमरः । घट्टनं आघातः तस्मात् यत्साध्वसं भयं । भीतिर्भीः साध्वसं भयं इत्यमरः ॥ तेन अन्विता युक्ता काचित् प्रेत्य आगत्य नृपतेः यूनः गले भुजौ न्यधात् स्थापितवती । सः युवा तरुणः तां कुचयोः स्तनयोः प्रतिपीडनं कुचप्रतिपीडनं कुचप्रतिपीडनेन सह यथा भवति तथा सकुचप्रतिपीडनं अनतियत्नतः अप्रयासेन चुचुंब यद्वा सकुचप्रतिपीडनं यथा भवति तथा गले भुजौ न्यधात् ॥ ७६ ॥

एकस्यामिति । दयितेन प्रियेण एकस्यां तरुण्यां सादरतरं यथा भवति तथा संलक्षितायां दृष्टायां सत्यां परया अन्यांगनया सपत्न्यवलोकनमसहमानयेत्यर्थः भ्रुवावेव चापे धनुषी बलात् विकृष्य नयनयोः द्वंद्वं तावेवाशुगौ बाणौ ताभ्यां हतः सः वीरः वीर्येण शक्त्या रेतसा वा वियोजितः समभवत् इदं किं चित्रं नेत्यर्थः । आश्चर्याऽ

---

१ प्रतेरुः इति पाठः २ झटिति प्राप्य इति वा पाठः ३ प्रचुचुंबा इति वा पाठः

किमिहेश रविर्जगत्पतिः सलिलांतः प्रतिभाति मत्प्रभो
बहिरंगमवेक्षते सदा तव संद्रष्टुमिवांतरंगकं ॥ ७८ ॥
सलिलमप्यलमंबुजलोचने तव कुचोच्चगिरी व्यतिलंघ्य वै
सुतनु ते तनुते तनुमत्प्रिये अधररसं रसितुं विविधोद्यमं ॥ ७९ ॥
जलचरैरचलोपि विचालितः प्रियतमाभिरलं जलसेचितः
पृथुकुचप्रतिघट्टनवारितः स युवतीभिरहासि गतांबरः ॥ ८० ॥
युवतयो बत योऽवति ताः सदा मदनतोऽदनतोपि च भूमिपः
गुरुतरं रुतरंजितभूतलं तमहसन् महसंवृतचेतसः ॥ ८१ ॥
जलव्यालभीता विलोलालकाली समीपे स्थितामालिमेवालिलिंग

भावे हेतुमाह एकः शरः असह्यः सातु वीरोत्तमं शरद्वयेन युगपद्विव्याध ॥ ७७ ॥

एका सलिलस्यातिवैमल्यात् प्रतिबिंबितं भानुं विलोक्य पृच्छति । किमिहेति । हे मत्प्रभो जगत्पतिः रविः सूर्यः इहास्मिन् जलाशये सलिलस्यांतः अंतःप्रदेशे किं किमर्थं प्रतिभाति शोभते । आकाशं परित्यज्य उदकस्यांतः किमर्थं आगत इति मौग्ध्यात् प्रश्नः । सः उत्तरमाह बहिरिति । रविः सदा सर्वकालं तव बहिरंगं बाह्याव-यवं अवेक्षते । अज्ञातं अंतरंगं अंतरंगकं अंतरांगावयवं गुह्यावयवमिति यावत् सन्द्रष्टुं प्रतिभातीवेत्युत्प्रेक्षा ॥ ७८ ॥

सलिलमिति । हे अंबुजलोचने हे सुतनु शोभनशरीरे अत एव तनुमतां पुरु-षाणां प्रिये अथवा अतनुमान् कामी तस्य प्रिये इष्टे सलिलमपि नपुंसकमपीति भावः । तव कुचावेव उच्चौ गिरी पर्वतौ व्यतिलंघ्य अतिक्रम्य अधरस्य ओष्ठस्य रसं रसितुं आदातुं विविधोद्यमं तनुते करोति । वै इत्युत्प्रेक्षा । स्वसमीपमागतस्य तरंगैराक्रमणं सलिलस्य स्वभावः स च तरुण्यधरचुंबनोद्योगत्वेनोत्प्रेक्षितः ॥ ७९ ॥

जलचरैरिति । अचलोपि उदके दृढं स्थितोपि अधः जलचरैः मत्स्यैः विचा-लितः स्थानात् प्रच्यावितः । उपरि प्रियतमाभिः अलं अत्यंतं जलेन सेचितः पृथवः ये कुचाः तैः प्रतिघट्टनेन वारितः अपसारितः अतः वैकल्यात् गतांबरः नग्नः सः तरुणः युवतीभिः अहासि उपहसितः । हसेः कर्मणि लुङि चिणः परस्य लुक् ॥८०॥

युवतय इति । यः भूमिपः । सदा सर्वकालं मदनात् इति मदनतः मदनकृत् पीडाया इत्यर्थः । अद्यते भक्ष्यते इति अदनं अन्नं तेन अदनेनेत्यदनतः इदमुपल-क्षणं वस्त्रभूषणादिभिश्च सार्वविभक्तिकस्तसिः याः अवति ताः युवतयः बत इति खेदे महेन शृंगारोत्सवेन । महस्तूत्सवतेजसोरिति विश्वः । संवृतं चेतो यासां ताः सत्यः अतिशयेन गुरुरिति गुरुतरः तं श्रेष्ठं पूज्यमिति यावत् । रुतेन भाषितेन रंजितं भूतलं येन तं अहसन् उपहसितवत्यः ८१ ॥

---

१. किमिहात्र इति वा पाठः २. मिवांतरंगकं इति वा पाठः ।

सखी सस्वजे तां सकामं प्रगाढं कुचाभ्यां गिरिभ्यामधायंतरालं ॥ ८२ ॥
जलप्रवेगाद्विगतांबरापि नितंबिनी सांबरसंवृतासीत्*
सदंबराभ्यः शुशुभेऽतिमात्रं न सुंदरी किंचिदभीप्सतीह ॥ ८३ ॥
कामिनीशतयुतो जललीलां संविधाय विविधां धुततापः
तीरमाशु समुपेत्य वधूनां निर्गमं समवलोकयति स्म ॥ ८४ ॥
विवृतमूलभुजोत्परिरंभितौ स्तनघटौ दधती स्रवदंबरौ
तटमगाद्विवृतोरुयुगांगना नलिनतः सृजती शरसंहतीः ॥ ८५ ॥
कुचावन्या पीनौ विगतवसनौ नीलवदनौ
नितांतं पश्यंती गतिविजितदंतावलशिशुः

जलेति । विलोलाः चंचलाः अलकाः यस्याः सा जले व्यालः सर्पः तस्माद्भीता आली सखी । वयस्यालिः सहचरी सध्रीची सवयाः सखीत्यमरः । यद्वा विलोला चंचला अलकानां आलिः पंक्तिः यस्याः सा जलव्यालभीता काचित् समीपे स्थिता आलिमेव सखीमेव आलिलिंग सस्वजे । सखी तां सकामं यथा तथा प्रगाढं अत्यंतं सस्वजे आलिंगितवती कुचाभ्यां गिरिभ्यां अंतरालं अवकाशः अधारि धृतं । गाढालिंगने स्तनपर्वतौ प्रतिबंधकौ जातावित्यर्थः ॥ ८२ ॥

जलप्रवेगादिति । किंच जलस्य प्रवेगात् प्रकृष्टवेगात् विगतं अंबरं यस्याः सा विगतांबरापि काचित् नितंबिनी अंबरेण वस्त्रेण संवृता वेष्टिता आसीदिति विरोधः अंबरेण आकाशेन संवृता नग्नेत्यर्थः इति परिहारः । सा नग्ना सदंबराभ्यः सवस्त्राभ्यः अतिमात्रं अत्यंतं । अतिवेलभृशात्यर्थातिमात्रोद्गाढनिर्भरं इत्यमरः । शुशुभे एतत् युक्तमित्याह । सुंदरी अतिरमणीयावयवा किंचिदपि वस्त्रादिकमपि इह जलक्रीडायां नाभीप्सति नेच्छति । विरोधाभासार्थान्तरन्यासयोः संसृष्टिः ॥ ८३ ॥

कामिनीति ॥ कामिनीनां शतानि तैः युतः धुतः दूरीकृतः तापः रतिक्लेशः येन सः विविधां अनेकप्रकारां जललीलां जलक्रीडां विधाय कृत्वा आशु शीघ्रं तीरं तटं समुपेत्य वधूनां युवतीनां निर्गमं जलादुत्तरणं समवलोकयति स्म दृष्टवान् ॥ ८४ ॥

विवृतेति । विवृते प्रकाशिते मूले कक्षाप्रदेशौ ययोः तौ भुजौ बाहू ताभ्यां उत् ऊर्ध्वं परिरंभितौ आश्लिष्टौ स्रवत् अधोगच्छत् अंबरं वस्त्रं याभ्यां तौ स्तनावेव घटौ कुंभौ दधती धारयंती उर्वोः जंघयोः युगं युग्मं । सक्थि क्लीबे पुमानूरुरित्यमरः । विवृतं निरावरणं ऊरुयुगं यस्याः सा अंगना काचित् स्त्री नलिनाभ्यामिति नलिनतः । नीलोत्पलद्वयात् लोचनद्वयादित्यर्थः । शराणां बाणानां कटाक्षाणामित्यर्थः संहतिं संघं सृजति मोचयति सति तटं तीरं अगात् । इण गतावित्यस्माल्लुङि गोदशे सिचो लुक् ॥ ८५ ॥

---

* संवृताभवत् इति वा पाठः

कराभ्यामाक्रम्य स्रवदमलवासः पृथुचल-
न्नितंबा बिंबोष्ठव्रणविगतचित्ता निरगमत् ॥ ८६ ॥

एकेकेन भुजेन पीवरकुचावालिंग्य मुक्तालका
लोलाक्षी वसनं परेण दधती जंघोर्ध्वमीषत्त्रपा
वक्त्रश्रीजितचंदिराच्छकनकप्रोतप्रदीपप्रभ-
श्रीमद्रत्नविभूषिता निरगमद्वारां निधेरंततः ॥ ८७ ॥

एका वै कबरीनिपीडनमिषेणादर्शयंती भुजो-
न्मूलं चापि कुचौ सुवर्णगिरिपश्रीहारिणौ हारिणौ
हेमाभोरुयुगोद्धृताच्छवसना कामातपत्रं वरं
किंचित्किंचिदभीक्ष्णमिंदुवदना संदर्शयंती ययौ ॥ ८८ ॥

कुचाविति । पीनौ पुष्टौ विगतं वसनं वस्त्रं ययोस्तौ जलक्रीडार्थं निष्कासित-कंचुकावित्यर्थः । नीलं वदनं मुखं ययोस्तौ कुचौ पश्यंती सर्वांगनाकुचापेक्षया स्वकुचावतिरमणीयाविति बुध्येति भावः । गत्या विजितः दंतावलस्य गजस्य शिशुः बालो यया सा । दंती दंतावलो हस्तीत्यमरः । दंतशिखात् संज्ञायामिति वलच् पृथुश्चलन्नितंबः यस्याः सा बिंबमिव ओष्ठो बिंबोष्ठः तत्र व्रणं दंतक्षतं तत्र विगतं चित्तं यस्याः सा काचित् स्रवत् अमलं यद्वासस्तत् कराभ्यां आक्रम्य अवलंब्य निरगमत् । गम्लृगतावित्यस्मात् लुङि पुषादीत्यादिना च्लेरङ् ॥ ८६ ॥

एकेति ॥ मुक्ताः अलकाः केशाः यया सा मुक्तालका लोले चंचले अक्षिणी यस्या सा लोलाक्षी ईषत् अल्पा त्रपा यस्याः सा ईषत्त्रपा वक्त्रस्य मुखस्य या श्रीः तया जितः चंदिरश्चंद्रो यया सा वक्त्रश्रीजितचंदिरा। चंदिरोनेकपे चंद्रे इति मेदिनी अच्छं निर्मलं यत्कनकं तस्मिन् प्रोतानि खचितानि यानि प्रदीपप्रभाणि श्रीमंति रत्नानि तैः विभूषिता एका नायिकाएकेन भुजेन पीवरौ पीनौ कुचौ आलिंग्य परेण भुजेन वस्त्रं जंघोर्ध्वम् ऊरुप्रदेशादुपरीत्यर्थः दधती धारयंती सती वारां उदकानां निधेः सरसः अंततः मध्यात् निरगमत् ॥ ८७ ॥

एकेति । कबरी केशपाशः तस्य निपीडनं तस्य मिषेण छलेन भुजयोः उच्चं यन्मूलं कक्षाप्रदेशः तं स्वर्णगिरिर्यो मेरुः तस्य या श्रीः शोभा तां हरतः तौ तयोक्तौ । ताच्छील्ये णिनिः । हारिणौ मनोहारिणौ । यद्वा हारवंतौ कुचावपि आदर्शयंती । दृशिर्प्रेक्षणे इत्यस्माण्णिजंतात् शतरि शप्श्यनोर्नित्यमिति नुमि ङीप् । हेमाभं सुवर्णतुल्यं यत् ऊरुयुगं जंघायुगं तस्मात् उद्धृतं तं ऊर्ध्वं धृतं अच्छं निर्मलं वसनं यया सा अत एव वरं रमणीयं कामातपत्रं गुह्यं किंचित् किंचित् दर्शयंती इंदुवदना एका वै एकैव नायिका ययौ निर्गता ॥ ८८ ॥

करे दधाना कमलं वसाना पीतांबरं नाथमभीक्षमाणा
मुक्तालका श्रीरिव निर्जगाम कामप्रसूर्वारिनिधेस्तथैका ॥ ८९ ॥
इत्थं सलीलं जनपो विहृत्य वासांसि ताभिः सह संप्रधार्य
आरुह्य यानं युवतीर्नृयानैः प्रासादमीशो गमयां बभूव ॥ ९० ॥
तापत्रयत्रातजनोऽवनीशः सदातपत्रैर्विलसत्तनुत्रैः
करात्तशस्त्रैर्विविधोपयंत्रैर्वृतः पुरं स्वं प्रययौ सपत्रैः ॥ ९१ ॥
शिवप्रसादाधिगतं प्रासादं समुपेत्य सः
प्रसादं वर्धयन् स्वेषु सपत्नेष्वप्यरीरमत् ॥ ९२ ॥
इति श्रीशिवकाव्ये पुरुषोत्तमपंडितविरचिते द्वादशश्चमत्कारः ॥

करेति । करे हस्ते कमलं दधाना पीतांबरं पीतकौशेयं वस्ते परिधत्ते सा वसाना । वस आच्छादने इत्यस्मात् कर्तरि लिटि शानजादेशः । नाथं स्वप्रियं अन्यत्र श्रीविष्णुं अभितः ईक्षते सा ईक्षमाणा । ईक्षतेर्लटः शानजादेशे मुगागमः । मुक्ताः अलकाः यया सा आर्द्रत्वादिति भावः । यद्वा मुक्ताः मुक्ताफलानि अलकेषु यस्याः सा । कामं मदनं प्रसूते उत्पादयतीति कामप्रसूः । दर्शनमात्रक्षणे कामोद्दीपिकेत्यर्थः । अन्यत्र कामजननी एका नायिका श्रीरिव लक्ष्मीरिव वारिनिधेः सरसः अन्यत्र समुद्रात् । निर्जगाम । अत्रोपमानोपमेययोः लक्ष्मीनायिकयोः उपादानात् जलनिधेर्निर्गमस्य साधारणधर्मस्य उपमानवाचके इव शब्दस्य चोपादानात् पूर्णोपमेयं । तदुक्तं कुवलयानंदे । उपमा यत्र सादृश्यलक्ष्मीरुल्लसति द्वयोः । हंसीव कृष्ण ते कीर्तिः स्वर्गंगामवगाहते ॥ ८९ ॥

इत्थमिति । ईशः जनपः नृपतिः इत्थं पूर्वोक्तप्रकारेण ताभिस्सह लीलया सहितं सलीलं विहृत्य वासांसि ताभिःसह संप्रधार्य धृत्वा यानं अश्वं आरुह्य युवतीः नृयानैः प्रासादं स्वगेहं गमयां बभूव प्रापयामास ॥ ९० ॥

पूर्वं युवतीप्रयाणं विधाय स्वयमनंतरं जगाम इत्याह । तापानां त्रयं तापत्रयं तापत्रयात् त्रातः जनो येन सः अवनीशः राजा संति आतपत्राणि येषां ते सदातपत्राः तैः विलसंति तनुत्राणि कवचानि येषां तैः करेषु आत्तानि गृहीतानि शस्त्राणि यैः तैः विविधानि अनेकानि उपयंत्राणि लोके " पिस्तोल " इति प्रसिद्धानि एषां तैः पत्रैः वाहनैः सहिताः सपत्राः तैः अश्वारोहैः वृतः सन् स्वं स्वकीयं पुरं नगरं ययौ जगाम ॥ ९१ ॥

शिवेति । सः शिवस्य सांबस्य प्रसादः तस्मात् अधिगतः प्राप्तः तं प्रासादं राजभवनं । प्रासादो देवभूभुजामित्यमरः । अधिगम्य प्राप्य स्वेषु स्वकीयेषु प्रसादं कृपां सपत्नेषु शत्रुषु प्रसादं तापं नर्धयन् सन् अरीरमत् । स्वार्थे णिजंताच्चङि द्वित्वे रूपं ॥ ९२ ॥

इति श्रीशिवकाव्यव्याख्यायां प्रकाशिका-संज्ञायां स्वकृतायां द्वादशश्चमत्कारः ॥१२॥

## त्रयोदशश्चमत्कारः

अतोषयन् पुण्यफलैस्स्वकीयैर्मध्वादयः स्वे समये नृपालम्
भीतस्तपो वक्त्रमपि स्वकीयं नादर्शयच्छाखिसमावृतेऽत्र ॥ १ ॥
पंचर्तवः स्वे समये द्विजेशं सिषेविरे तापकरस्तपस्तु
पष्ठोस्य शत्रुं परितापयन् सन् सदा कृतित्वं समगात् प्रभीतः ॥ २ ॥
वनमुचो नमुचिद्विपदाज्ञया स्वसमये समया नगरं स्थिताः
अनुवनं सलिलं मुमुचुर्भृशं सुकृतशृंखलबंधनसुस्थिराः ॥ ३ ॥
कादंबिनीभिश्चपलाविलासैर्वातैः प्रयातैरलकानगर्याः
कलापिमाला †सततं ननर्त ननर्तुरीदृग्विपिनं च तुष्टा ॥ ४ ॥

एवं तावत् वसंतं संवर्ण्य ग्रीष्मादीन् वर्णयति तत्रादौ ग्रीष्मं द्वाभ्यां वर्णयति अतोषयन्निति । मध्वादयो वसंतादयः स्वे स्वकीये समये काले नृपालं स्वकीयैः पुण्यफलैरतोषयन् । तपो ग्रीष्मः । निदाघ उष्णोपगमो उष्ण उष्मागमस्तपः इत्यमरः । शाखिभिर्वृक्षैः समावृते अत्र अस्मिन् पुण्यनगरे स्वकीयं मुखमपि नादर्शयत् नगरस्य बहुवृक्षव्याप्तत्वाच्छायाबाहुल्येन ग्रीष्मकालोपि वसंत इव लक्षित इति भावः ॥ १॥

पंचेति । पंच वसंतादयः ऋतवः स्वे स्वकीये काले द्विजेशं सिषेविरे । फलपुष्पादिसमर्पणेनेति भावः । तापस्य दुःखस्य करः कर्ता प्रभीतः । फलपुष्पादिसमर्पणासामर्थ्यात् इति भावः । तपःग्रीष्मस्तु अस्य द्विजेशस्य शत्रुं सदा सर्वकालं परितापयन् सन् कृतित्वं कृतमनेनेति कृती तस्य भावस्तत्त्वं कुशलत्वं समगात् प्राप्तवान्॥२॥

अथ वर्षाकालं वर्णयति वनमुच इति । नमुचिं नमुचिनामानं दैत्यं द्वेष्टीति नमुचिद्विट् इंद्रः तस्याज्ञया स्वसमये वर्षाकाले नगरं समया नगरस्य समीपे इत्यर्थः । अभितः परितः समया निकषा हा प्रतियोगेपीति द्वितीया । स्थिताः । सुकृतं पुण्यं तदेव शृंखलं निगडं तेन यद्बंधनं तेन सुस्थिराः वनं उदकं मुंचंति ते वनमुचः मेघाः । जीवनं भुवनं वनं इत्यमरः । वने वने इत्यनुवनं सलिलं उदकं भृशं अत्यंतं मुमुचुः ॥ ३ ॥

कादंबिनीभिरिति । कलापाः बर्हाणि संति येषां ते कलापिनः मयूराः । कलापो भूषणे बर्हे इत्यमरः । तेषां माला पंक्तिः । कादंबिनीभिः मेघमालाभिः । कादंबिनी मेघमालेत्यमरः । चपलानां विद्युतां । चंचला चपला अपीत्यमरः । विलासैः स्फुरणैः । अलकासंज्ञायाः नगर्याः प्रयातैः प्राप्तैः वातैः तुष्टा सती ईदृक् ऋतुः अन्यः न विपिनं वनं च ईदृक् न इति ननर्त अस्मिन् ऋतावस्माकमेतादृशं वनं आनंदजनकं नान्य-

१ "नरेश" इति वा पाठः २ "नरेश" इति वा पाठः † "सकला" इति वा पाठः

घनो घनौघश्चपला पलेन दिशं दिशोऽयादपरां परोऽथ
वायुश्च झंझाभिध एक एव केका अनेका अभवन् शिखिभ्यः ॥ ५ ॥
अहर्दिवं यज्ञवरैर्यदीजुर्द्विजाः पृथिव्यामिह शक्र ईशः
रक्षन् कृतज्ञत्वमलं निजं तत् ववर्ष वर्षासु सदानुकूलं ॥ ६ ॥

आस्ते कल्पतरुर्ददाति स धनं यत्प्रार्थितं तज्जनै
र्वार्तेत्थं भुवि देवता तु बहुभिर्वर्षैः समाराध्यते ।
सा चैकं फलति क्वचिन्नरपतिः सेवादिना‡दृष्टतः
मेघोऽप्रार्थित एव भूतलमिदं संतोषयत्यंभसा ॥ ७ ॥

सर्वोपकारचतुरो मुदिरोर्धरात्रे सुप्ते जने सकलभूवलयं पिपर्ति
अप्रार्थितोऽपि सलिलैर्वद तेन तुल्यः स्वर्गेऽथवा भुवि रसातलगोथवास्ते ॥ ८ ॥

त्रोति तोषात् पुनः पुनः नृत्यति स्म इत्यर्थः ॥ ४ ॥

घन इति । घनः सांद्रः । घनं स्यात् कांस्यतालादिवाद्यमध्यमनृत्ययोः । ना मुस्ताब्दांबुदानेषु विस्तारे लोहमुद्गरे ॥ त्रिषु सांद्रे दृढे चाथेति मेदिनी । घनानां मेघानां ओघः चपला विद्युत् पलेन पलप्रमाणेन कालेन दिशः सकाशात् स्वाधिष्ठितायाः इत्यर्थः अपरां दिशं अयात् अगच्छत् । यातेर्लङ् । अथ परः महान् । झंझावातः सवृष्टिकः वायुः । झंझावातः सवृष्टिक इत्यमरः । एक एव अभवत् नान्यः निर्वृष्टिक इत्यर्थ । शिखिभ्यः मयूरेभ्यः अनेकाः केकाः शब्दाः अभवन् विनिर्गताः ॥५॥

अहर्दिवमिति । द्विजाः ब्राह्मणाः यत् यस्मात् इह पृथिव्यां अस्यां भूमौ यज्ञवरैः अहनि च दिवा च अहर्दिवं। दिवसे दिवसे इति भावः । अचतुरेत्यादिना निपातः। ईजुः यागं चक्रुः तस्मात् ईशः शक्रः निजं स्वकीयं कृतं जानातीति कृतज्ञः तस्य भावः तत्त्वं रक्षतीति रक्षन् सन् वर्षासु वर्षाकाले । वर्षा अथ शरत्समा इत्यमरः । सदा सर्वकालं अनुकूलं ववर्ष ॥ ६ ॥

आस्ते इति । कल्पतरुः आस्ते वर्तते सः कल्पतरुः । जनैः यत् प्रार्थितं तद्दाति इत्थं वार्ता न केनाप्यनुभूतमित्यर्थः । देव एव देवता । देवात्तल्प्रत्ययः । बहुभिः वर्षैः संवत्सरैः समाराध्यते । बहुकालसाध्यं देवतासाधनं इत्यर्थः । सा च देवता एकं सेवकमेव फलति प्रसीदति नान्यं इत्यर्थः । नरपतिः सेवादिना क्वचित् कस्मिंश्चित् काले सेवादिना अदृष्टत एव एकं फलति । मेघस्तु अप्रार्थित एव इदं भूतलं अंभसा जलेन संतोषयति अतः सर्वाधिकोयं इति भावः ॥ ७ ॥

सर्वेति। सर्वेषु यः उपकारः तस्मिन् चतुरः मुदिरः मेघः । घनजीमूतमुदिरजलमुग्धूमयोनय इत्यमरः । अर्धरात्रे निशीथे । अर्धरात्रं निशीथो द्वावित्यमरः। अप्रार्थितोऽपि

‡" दिष्टतः " इति वा पाठः

गर्जंतं बहुशो विवेकविकलं कृष्णांगमत्युन्नतं
चापाढ्यं चपलासहायमुदितं यातं प्रयातं क्षणात्
दृष्ट्वा जीवनदं परं क्षितितले नंदंति नृत्यंति च
पश्यंति प्रसभं द्विजा अथ स तै रिक्तस्तु नालोक्यते ॥ ९ ॥
सिक्त्वा जलैर्भूवलयं तथोप्त्वा बीजानि लोकान् मुदितान् स कृत्वा
संवर्ध्य संपोष्य विनंद्य वृक्षान् अस्तं गतः साधुवराग्रगण्यः ॥ १० ॥
भानुः प्रतापं स्वमलं जलानि सस्यानि चामत्वमगाधतां च
नद्या नभोऽनच्छतरत्वमिंदुर्जहौ शनैस्तद्वचनं च भेकः ॥ ११ ॥

सलिलैः पिपर्ति पालयति पूरयति वा । पॄपालनपूरणयोरित्यस्मात् लटि श्लौ द्वित्वे । अर्तिपिपर्त्योश्चेत्यभ्यासस्य इत्वे गुणः । अतः स्वर्गेऽथवा भुवि अथवा रसातलगः तेन तुल्य अस्ति चेद्वद नास्तीत्यर्थः ॥ ८ ॥

गर्जतमिति । द्विजाः मयूराः अन्यत्र ब्राह्मणाः क्षितितले बहुशः वारंवारं गर्जंतं स्तनंतं अन्यत्र रटंतं विवेकेन विचारेण रहितं विकलं । कृष्णांगं कृष्णशरीरं एकत्र सजलत्वात् अन्यत्र तादृशवर्णत्वात् । अत्युन्नतं आकाशे स्थितत्वात् अन्यत्र मत्तत्वात् । चापेन इंद्रधनुषा अन्यत्र आयुधेन आढ्यं युक्तं चपला विद्युत् अन्यत्र चपला युवती सहायो यस्य तं उदितं उदयं प्राप्तं क्षणात् क्षणमात्रेण यातं प्राप्तं समीपे स्थितमित्यर्थः । प्रयातं दूरे गतं एकत्र पवनाधीनत्वात् अन्यत्र अनवस्थितत्वात् जीवयतीति जीवनं उदकं अन्यत्र धनं तद्ददातीति जीवनदः तं मेघं अन्यत्र धनिनं दृष्ट्वा नंदंति हृष्यंति परं अत्यंतं नृत्यंति तं प्रसभं पश्यति अथ रिक्तः निर्जलः अन्यत्र निर्धनः सः मेघः धनवांश्च तैर्द्विजैः नालोक्यते । प्रस्तुतांकुरोयं । प्रस्तुतेन प्रस्तुतस्य ज्ञापने प्रस्तुतांकुरः ॥ ९ ॥

सिक्त्वेति । साधुवराणां सत्पुरुषश्रेष्ठानां अग्रगण्यः मुख्यः मेघः भूवलयं भूमंडलं जलैः सिक्त्वा तथा बीजानि धान्यानि उप्त्वा वापयित्वा । टुवप् बीजसंताने अस्मात् अंतर्भावितणिजंतात् क्त्वा । यद्वा कर्षकैरिति शेषः । लोकान् कर्षकादीन् मुदितान् हृष्टान् कृत्वा वृक्षान् संवर्ध्य संपोष्य विनंद्य अस्तं गतः । एतादृशः परोपकारकर्ता नान्योस्तीत्यर्थः ॥ १० ॥

अथ शरदं त्रिभिर्वर्णयति भानुरिति । भानुः सूर्यः प्रकृष्टस्तापः प्रतापः तं जलानि उदकानि स्वस्य मलः स्वमलः तं स्वमलं पंकिलत्वं सस्यानि धान्यानि आमत्वं अ-

---

३ "जना भुवि परं" इति वा पाठः ४ "तं" इति वा पाठः ५ अस्य पद्यस्यानन्तरमेकमधिकं पद्यं केषुचित् पुस्तकेषु वर्तते:—

प्रावृड्वधूपयोधरदर्शनसजाततापतप्ततः ।
धन्यो नमस्तपस्वी रविशशिनेत्रे निमीलयांचक्रे ॥ १ ॥

**महीसुराणां हि शतैरधारि धनुर्धरत्वं भुवनावनाय**
**मदीयचापेन किमित्यतो नु दिवः सुरः संहृतवान् धनुः स्वं ॥ १२ ॥**
**असंख्याः स्त्रियश्चंचला गौरदेहं नरेंद्रं श्रिताः सर्वदा संस्फुरंति**
**अहं त्वेकिका संश्रिता वारिवाहं घनांते विलीना हि* येनाशु विद्युत् १३**
**दादा दधद्धनुररिप्रहतिप्रवीणो वीणादिवादनपराग्रसरः स राजा**
**विप्रव्रजस्य व्रजति स्म धनाधिपस्य काष्ठामकुंठितगतिः प्रथमं कुतश्चित्**
**॥ १४ ॥**

परिपक्वत्वं नद्यः अगाधतां दुस्तरत्वं नभः आकाशं न अच्छं अनच्छं अतिशयेन अनच्छमिति अनच्छतरं तस्य भावस्तत्वं अनच्छतरत्वं मेघयुक्तत्वं इंदुश्चंद्रः भेकः मंडूकः वचनं भाषितं जहौ ॥ ११ ॥

शरत्काले स्वाभाविकमिंद्रधनुर्लोपं कारणांतरेण उत्प्रेक्षते महीसुराणामिति । महीसुराणांब्राह्मणानां शतैः भुवनस्य भूलोकस्य अवनाय रक्षणाय धनुर्धरत्वं धानुष्कत्वं अधारि धृतं धृञ् धारणे अस्मात्कर्मणि लुङि. च्लेश्चिण् ततः परस्य लुक् । मदीयेन चापेन किं इत्यतः हेतोः दिवः सुरःइंद्रः स्वं स्वकीयं धनुः संहृतवान् । नु इत्युत्प्रेक्षा । पांडवीये समये ब्राह्मणाः क्षात्रधर्मरतास्त्रिचतुरा आसन् इदानीं तु बहवः क्षात्रं कर्मावलंबिरे इति भावः ॥ १२ ॥

अथ स्वाभाविकं विद्युतो लयं कारणांतरेणोत्प्रेक्षते असंख्या इति । गौरः देहो यस्य तं नराणां इंद्रं नरपतिं श्रिताः असंख्याः स्त्रिय एव चंचलाः विद्युतः । तडित् सौदामनी विद्युत् चंचला चपला अपीत्यमरः । सर्वदा सर्वकालं न तु वर्षास्वेवेति भावः स्फुरंति विलसंति । अहं तु एकिकैव अपि च वारि वहतीति वारिवाहस्तं मेघं श्रिता ततस्तस्माद्धेतोः लज्जयेति भावः घनांते शरदि सा चंचला विद्युत् विलीना अभवत् इति शेषः । असंख्याः मत्समाः स्त्रियः सर्वोत्तमं नरपतिमाश्रित्य विलसंति अहं तु एका वारिवाहं उदकहारकमतिनीचमाश्रित्य वर्ते तन्न युक्तं इति मनसि निधार्यैव विलीना किमिति भावः ॥ १३ ॥

अथ त्रयाणां भ्रातृणां मध्ये दादाख्यस्य शरत्काले जैत्रयात्रां आह दादेति । अरीणां शत्रूणां प्रहतिः हननं तत्र प्रवीणाः चतुराः । वीणा आदिर्येषां तेषां वादने पराः गायकास्ते अग्रसराः यस्य सः । कुतश्चित् कस्मादपि शत्रोः हेतुभूतात् । अकुंठिता गतिर्यस्य सः विप्रव्रजस्य ब्राह्मणसमूहस्य राजा स दादा राघवः इदमव्ययं स्वरादिवत् अव्ययादाप् सुपः इति सुपो लुक् । धनुः दधत् धारयन् सन् प्रथमं धनाधिपस्य कुबेरस्य काष्ठां दिशं उत्तरां दिशं । दिशस्तुककुभः काष्ठा इत्यमरः । व्रजति स्म जगाम । वजव्रजगतावित्यस्येदं रूपं ॥ १४ ॥

---

६ "नरेश्वराणां" इति वा पाठः * "ततश्चंचला किम्" इति वा पाठः

उत्तरा तूत्तरा दिग्भ्यः सर्वाभ्यो धनदा नृपाः
धनदेन समा यस्मात्तस्मात्तां पूर्वमन्वगात् ॥ १५ ॥
तुरंगाः सुरंगाः कुरंगा इवाग्रे प्लवंतो नटंतो नदंतोऽभ्यगच्छन्
खलीनैः खलीनैः खलीनैर्विकृष्टा गरिष्ठाः स्थविष्ठा लघिष्ठाश्च केचित् ॥१६॥
पृष्ठास्तरणपक्षाभ्यां सपक्षा इव वाजिनः
श्येनसंघा इवाकाशमाक्रमंत इवाययुः ॥ १७ ॥
वारणा वारणायास्य सपत्नानां पुरः पुरः
पुरः पुरो विनिर्याता मार्गेऽगच्छन् यथायथं ॥ १८ ॥
वाहैः प्रवाहैरिव निम्नगानां पुरः प्रसस्रे स्वजमादधानैः
कंठे मणीनामनणीयसां तत्तुरंगमैश्चापि यथार्थताप्ता ॥ १९ ॥

प्रथममुत्तरदिग्गमने हेतुमाह उत्तरेति । यस्माद्धेतोः उत्तरा दिक् सर्वाभ्य दिग्भ्यः अतिशयेन उत् उत्कृष्टा इति उत्तरा धनेन विस्तारेण च श्रेष्ठेत्यर्थः किं च धनं ददति ते धनदाः नृपाः धनदेन कुबेरेण समाः । तस्माद्धेतोः तां उत्तरां पूर्वं अन्वगात् गतवान् ॥ १५ ॥

तुरंगा इति । शोभनः रंगो येषां ते सुरंगाः नदंति ते नदंतः हेषितवंतः नटंतः नृत्यंतः तुरंगाः अश्वाः कुरंगा इव हरिणा इव प्लवंतः उड्डीय गच्छंतः संतः अग्रे अगच्छन् । खलं धान्यमर्दनस्थानं तत् अस्ति येषां ते खलिनः कृषीवलाः तेषां मध्ये इनाः श्रेष्ठाः । खलीनाः अश्वनियामकाः लोके 'मोतातदार'इति प्रसिद्धाः तैः कर्तृभिः । खे मुखावकाशे लीनैः गुप्तैः खलीनैः मुखबंधनरज्जुभिः लोके ' लगाम, इति प्रसिद्धैः करणभूतैर्विकृष्टाः आकर्षिताः अतिचापलानिवृत्त्यर्थमिति भावः । अतिशयेन गुरवः इति गरिष्ठाः उच्चाः गुरुशब्दादिष्ठनि ।प्रियस्थिरेत्यादिना गरादेशः । अतिशयेन स्थूलाः इति स्थविष्ठाः स्थूलशब्दादिष्ठनि स्थूलदूरेत्यादिना लकार लोपे उकारस्य गुणे अवादेशः। अतिशयेन लघवः इति लघिष्ठाः ह्रस्वदेहाश्च केचित् अग्रे अभ्यगच्छन् ।१६।

पृष्ठास्तरण इति । पृष्ठास्तरणं लोके ' जीन ' इति प्रसिद्धं तस्य पक्षौ दक्षिणोत्तर प्रदेशौ ताभ्यां सपक्षा इव स्थिताः अत एव श्येनसंघा इव स्थिताः वाजिनः अश्वाः आकाशं आक्रमंत इवेत्युत्प्रेक्षा । आययुः जग्मुः ॥ १७ ॥

अथ गजानां यानमाह वारणा इति । पुरः पुरः नगर्या नगर्याः । रेफांतस्त्रीलिंगस्य पूरिति शब्दस्य वीप्सायां द्विर्वचनं । विनिर्याताः निर्गताः वारणाः गजाः अस्य राघवस्य सपत्नानां वारणाय दूरीकरणाय पुरः पुरः अग्रे अग्रे यथायथं असंकीर्णं । यथास्वं तु यथायथं इत्यमरः । मार्गे अगच्छन् ॥ १८ ॥

अथ सामान्यतः सर्वेषां वाहनानां यानवर्णनपूर्वकं तुरंगशब्दनिरुक्तिपूर्वकं तद्यानमाह वाहैरिति । वाहैः गजादिभिः निम्नगानां नदीनां प्रवाहैरिव पुर एव प्रसस्रे

**सेनां षडंगां प्रवहन् हयस्थः सेनापतिभ्यां सहितोऽयुताभ्यां**
**अक्षौहिणीभ्यां प्रययौ स यत्र तत्रावृत श्रीरमुमेव वीरं ॥ २० ॥**
**नारोशंकरनामैकः शत्रुकक्षतनूनपात्**
**रामचंद्रोऽपरस्तस्य सेनानीर्बुद्धिमद्वरः ॥ २१ ॥**
**नारायणस्य तनयस्त्र्यंबकाख्य उदारधीः**
**भैयानामास्य तनयो जनस्थानेऽद्य वर्तते ॥ २२ ॥**
**नीतिमान् धृतिमान्-ह्रीमान् श्रीमान् धीमान् स कीर्तिमान्**
**दयावान् बलवान् विद्वान् क्षमावान् गुणवानपि ॥ २३ ॥**
**तद्वाजिपादोद्धतधूलिर्जातं यातं दिवं शत्रुजनः स मेने**

गतं न तु परावृत्य पश्चात् गतं । अयं तु शुभसूचकः शकुनः । सृगताावित्यस्मात् कर्मणि लिट् । अतिशयेन अणव इति अणीयांसः न अणीयांसः अनणीयांसः तेषां महतां । अणुशब्दादीयसुन् प्रत्ययः । मणीनां स्रजः मालाः आदधानैः धारयद्भिः तुरंगैरपि पुरः प्रसस्रे गतं । अतः यथाभूतः अर्थो येषां ते यथार्थाः यथार्थानां भावः यथार्थता अन्वर्थता च आप्ता प्राप्ता । तुरं त्वरितं गच्छंति ते तुरंगमाः इत्यव यवार्थं चक्रुः इत्यर्थः ॥ १९ ॥

सेनामिति । अक्षौहिणीभ्यां युताभ्यां सेनापतिभ्यां सहितः युक्तः । अक्षौहिणीप्रमाणं पूर्वमुक्तं । षट् अंगानि यस्याः सा षडंगा तां सेनां । षडंगानि भारते उक्तानि । गजाः रथाः अश्वाः पदातयः उष्ट्राः शकटानीति । प्रवहतीति प्रवहन् । हये तिष्ठतीति हयस्थः सः राघवः यत्र यस्मिन् देशे ययौ गतवान् । अधिकरणत्वविवक्षायां सप्तमी । तत्र तस्मिन् देशे श्रीः जयलक्ष्मीः । अमुमेव राघवमेव वीरं अवृत न तु शत्रुमित्यर्थः । वृञ्वरणे अस्माल्लुङि ह्रस्वादंगादिति सिचो लुक् ॥ २० ॥

सेनापतिभ्यां सहितः इत्युक्तं तौ सेनापती निर्दिशति नारोशंकर इति । शत्रव एव कक्षः तृणं तस्य तनूनपात् अग्निः । कक्षौ च तृणवीरुधौ इत्यमरः । कृपीटयोनिर्ज्वलनो जातवेदास्तनूनपात् इत्यमरः । नारोशंकरनामा नारोशंकराख्यः तस्य एकः सेनानीरासीत् । बुद्धिमतां वरः रामचंद्रः तस्य अपरः सेनानीरासीत् एकः शत्रुकक्ष तनूनपात् । अपरः बुद्धिमद्वरः इत्यनेन द्वयोर्द्वौ गुणौ लोकोत्तरौ आस्तामिति तात्पर्यं ॥ २१ ॥

नारायणस्येति । नारायणस्य नारोशंकराख्यस्य तनयः त्र्यंबकाख्यः उदारधीः आसीदिति शेषः अस्य त्र्यंबकस्य भैय्या नाम तनयः अद्य अस्मिन् काले जनस्थाने गोदावरीतीरस्थे नासिकाख्ये नगरे वर्तते आस्ते ॥ २२ ॥

तमेव विशिनष्टि नीतिमानिति । प्रशस्ता नीतिर्यस्य सः नीतिमान् । प्रशंसायां मतु.

---

७ " मत्सरः " इति वा पाठः ८ " जालं " इति वा पाठः

तं धूमकेतुं निजनाशहेतुं गजं तदीयं शमनस्य यानं ॥ २४ ॥
करेणुं विलोक्यास्य शत्रुः करेऽणुं पुरः सर्वथामंस्त कोशं विकोशं
विधातुं कृपाणं न शक्तः कृपाणी कृपाणीयसी चेद्वरं हेत्यवादीत् ॥२५॥
मित्रं स मित्रं विदधेऽर्चनेन यतस्ततो मित्रतराण्यमित्राः
स तापनिं तापनिवारणेन द्विजव्रजस्यानुययौ द्विजेशः ॥ २६ ॥
समुल्लंघ्य विंध्यं प्रयाते *क्षितीशे रिपूणां गृहेऽमंगलस्योदयोऽभूत्
स्त्रियः कंकणानां स्थितिः कं कणानां कथं हा भवेदित्थमूचुः समेताः२७
यवनपा वनपा अपि ये पुरो युयुधिरे युधि रेणुसमावृताः
सुरसदो रसदो व्यनयत् स तान् बहुतमान् हुतमानधनान् नरान् ॥२८॥

पूर्वे एवमग्रे। धृतिर्धैर्यं यस्यास्तीति धृतिमान्। धृतिर्योगांतरे धैर्ये धारणाध्वरतुष्टिषु इति विश्वः। शेषं स्पष्टं ॥ २३ ॥

प्रासंगिकं समाप्य प्रसक्तमेवाह तदिति। सः उदीचीस्थः शत्रुजनः तस्य राघवस्य ये वाजिनः तेषां पादास्तैः उद्धृतं यत् धूलिजातं धूलिसमूहः दिवं आकाशं यातं गतं तं निजनाशहेतुं धूमकेतुं मेने। तस्यायं तदीयस्तं तदीयं। त्यदादीनि चेति वृद्धसंज्ञायां च्छ प्रत्ययः। गजं सेनाग्रसरं शमनस्य यमस्य। शमनो यमराट् यमः इत्यमरः। यानं वाहनं महिषमिति यावत् मेने स्वप्राणहारकत्वादिति भावः॥२४॥

करेणुमिति। कृपाणं खड्गं। कौक्षेयको मंडलाग्रः करवालः कृपाणवदित्यमरः। विकोशं कोशरहितं विधातुं न शक्तः असमर्थः नञर्थस्य न शब्दस्य सुप्सुपेति समासः कृपाणोस्यास्तीति कृपाणी कृपाणधारको वीर इति यावत् अस्य राघवस्य शत्रुः अस्य करेणुं गजं। करेणुरिभ्यां स्त्री नेभे इत्यमरः। अग्रे विलोक्य करे बलौ विषये। बलिहस्तांशवः करा इत्यमरः। कोशं अर्थराशिं। कोशोस्त्री कुड्मले खड्गपिधानेर्थौघदिव्ययोः इत्यमरः। अणुं अल्पं अमंस्त। मन्यंतेस्म अस्येत्यस्यावृत्तिः। अस्य नृपस्य अतिशयेन अणुरिति अणीयसी अत्यल्पा कृपा चेत् वरं इत्यवादीत् उक्तवान् हा इति खेदे ॥ २५ ॥

मित्रमिति। सः राघवः यतः हेतोः मित्रं सूर्यं अर्चनेन पूजनेन मित्रं सखायं विदधे कृतवान् अतः अमित्राः शत्रवः अतिशयेन मित्राणीति मित्रतराणि। अथ मित्रं सखा सुहृत् इत्यमरः। अभूवन् इति शेषः। भक्त्या प्रसादितस्य भगवतः सूर्यस्य कृपया सर्वे शत्रवोपि सुहृद इवाभवन् इत्यर्थः। द्विजेशः सः राघवः द्विजव्रजस्य ब्राह्मणवृंदस्य तापनिवारणेन तपनस्यापत्यं तापनिस्तं तापनिं कर्णं। तपनः सविता रविः इत्यमरः। तपनशब्दादतइञ् इति अपत्ये इञ्। अनुययौ अनुचकार ॥ २६ ॥

समुल्लंघ्येति। क्षितीशे विंध्यं विंध्याचलं समुल्लंघ्य प्रयाते सति रिपूणां शत्रूणां

---

१ "दुर्गे" इति वा पाठः * "द्विजेशे" इति वा पाठः

**जयति शत्रुचयं यददः पुरं जयपुरं विजये हरिवन्नृपः**
**इति पुरा जयसिंह इतीरितो नरवरेण जिते तु निरूढभाक् ॥ २९ ॥**
**ज्योतिःपुरेशोपि यदर्जितं तत् धनं स्वकीयं विनिवेद्य तस्मै**
**कृपां ययाचे स तु तत्र विद्वान् अणं कृपाणं विनिधाय यातः ॥ ३० ॥**
**दिल्लीमुपेत्येप्सितकल्पवल्लीं पल्लीमिवायासविहीनमल्पां**
**मल्ली स भल्ली स्ववशं तदीशं कृत्वा प्रयातः पुरतः पुराणि ॥ ३१ ॥**
**स पारसीकान् विशिखाननेकान् विजित्य जेता जययूपमुच्चैः**
**निधाय कीर्तिं स च तत्र तत्र ययौ पुरं स्वं सधनः ससेनः ॥ ३२ ॥**

गृहे अमंगलस्य रोदनोदकस्य उदयः अभूत् किं च स्त्रियः समेताः सत्यः हा इति खेदे कंकणानां करवलयानां स्थितिः कथं भवेत् कणानां धान्यानां च कं सुखं तस्य सुस्थिरतेत्यर्थः कथं भवेत् इत्थं ऊचुः ॥ २७ ॥

यवनपा इति । रसं वीर्यं अर्थात् शत्रूणां द्यति खंडयतीति रसदः । शत्रुवीर्यनाशक इत्यर्थः । शृंगारादौ रसे वीर्ये गुणे रागे द्रवे रसः इत्यमरः । सः राघवः रेणुभिः धूलिसमूहैः समावृताः व्याप्ताः ये यवनपाः यवनाधीशाः । वनं पांति ते वनपाः वनवासिनः भिल्लादयोपि पुरः अग्रे युधि युद्धे । समुदायः स्त्रियः संयत् समित्याजिसमिद्युधः इत्यमरः । युयुधिरे । मान एव धनं मानधनं हुतं मानधनं यैस्तान् अतिशयेन बहव इति बहुतमास्तान् नरान् सुराणां सदः सुरसदः देवसभां ।स्त्रीनपुंसकयोः सद इत्यमरः । व्यनयत् प्रापितवान् ॥ २८ ॥

अथास्य जयपुरविजयं तन्नामानिरुक्तिं तदधिपनामनिरुक्तिं चैकेनाह जयतीति । यत् अदः पुरं इदं नगरं शत्रुचयं जयति अभिभवति दुर्गस्थापित यंत्रद्वारेति भावः । यद्वा प्रस्थिताः वीराः जयंति स जयो नगरे लाक्षणिकः मंचाः क्रोशंतीतिवत् तत् तस्मात् जयपुरं जयति अभिभवति इति जयं जयं च तत् पुरं च जयपुरं । जिजि अभिभवे अस्मात् कर्तरि अच् प्रत्ययः । इति पुरा ईरितं नृपः तदधिपः विजये शत्रुपराजये हरिवत् सिंहवत् इति पुरा पूर्वं जयसिंह इति ईरितः जनैरिति शेषः नरवरेण राघवेण तस्मिन् जयपुरे जयसिंहे च जिते च निरूढं नाम भजतीति निरूढभाक् अभूदिति शेषः । पूर्वं उभयोः यौगिकी संज्ञा आसीद्राघवादाभिभवे तु डित्थकपित्थादिसंज्ञावत् रूढा संज्ञा जाता यौगिकस्यार्थस्य बाधादिति भावः॥ २९॥

अथ ज्योतिःपुरेशजयमेकेनाह ज्योतिरिति । ज्योतिःपुरेशोपि यत् अर्जितं तत् स्वस्येदं स्वकीयं धनं तस्मै राघवाय समर्प्य कृपां दयां ययाचे । विद्वान् सः राघवस्तु तत्र ज्योतिःपुरेशे नास्ति णः णकारो यस्मिन् तं अणं कृपाणं कृपां इत्यर्थः विनिधाय स्थापयित्वा यातः अग्रे गतः इत्यर्थः ॥ ३० ॥

अथ इंद्रप्रस्थजयमाह दिल्लीमिति । मल्लाः नियुद्धकुशलाः संति यस्येति मल्ली

एवं दिशश्च विदिशः प्रविजित्य जेता कुप्येतरद्वसु समानयाति स्म भूरि
प्रत्यब्दमंघ्रिपतितावनिपालसंघैः प्रत्यर्पितं युधि जितैर्जयशब्दपूर्वं ॥३३॥
या गोपिकेति विदिता भुवि भर्तृदेवा बल्लाळरायमहिषी विदुषी द्विजाय
कन्यार्थिने प्रतिदिनं प्रददावनेना मुद्राश्चतुःशतमिताः कनकप्रक्लृप्ताः॥३४॥

साऽसूत पूर्वमतुलं तनयं नयाढ्यं विश्वासरायमथ माधवरायमन्यं
नारायणं च चरितं विततं क्रमेण तेषामहं स्फुटतरं पुरतोऽभिधास्ये॥३५॥
अत्रेस्त्रयः समभवन् जगदीश्वरा ये ते राघवादपि पुनर्जगतो हिताय
जाता अमीष्वमृतराय इति प्रसिद्धो ज्येष्ठः स दत्त इति सर्वगुणाळयत्वात्

मल्लवान् । भल्लाः बाणाः संति अस्येति भल्ली सः ईप्सितस्य अर्थस्य कल्पवल्लीं सकलपदार्थपूर्णामित्यर्थः । दिल्लीं इंद्रप्रस्थं अल्पां पल्लीमिव घोषमिव । घोष आभीर पल्ली स्यादित्यमरः । आयासेन श्रमेण विहीनं यथा स्यात्तथा । उपेत्य दिल्लीत्याधुनिको निरूढः शब्दः । तस्याः ईशः तदीशः तं स्ववशं स्वाधीनं कृत्वा पुरतः अग्रे पुराणि प्रयातः ॥ ३१ ॥

स इति । जेता जयनशीलः सः राघवः अनेकान् बहून् विशिखान् यवनान् पारसीकान् तेषामेव भेदान् विजित्य तत्र तत्र उच्चैः जययूपं कीर्तिं च निधाय धनेन सहितः सधनः ससेनश्च सन् स्वं स्वकीयं पुरं पुण्याख्यं नगरं प्रययौ ॥ ३२ ॥

एवमिति । जेता सः दिशः पूर्वाद्याः विदिशः आग्नेयाद्याः प्रविजित्य । युधि संग्रामे जितैः अत एव अंघ्रौ पतिताः ये अवनिपालाः राजानस्तेषां संघैः । जयं उत्कर्षं आविष्कुरु इति यः शब्दः स जयशब्दः सः पूर्वो भवति यथा स्यात् तथा प्रत्यर्पितं कुप्यात् ताम्रादेः इतरत् हेमरूप्यात्मकं वसु धनं । स्यात्कोशश्च हिरण्यं च हेमरूप्ये कृताकृते ताभ्यां यदन्यत्तत्कुप्यं इत्यमरः । वसु स्वदेग्नौ रश्मौ च वसु तोये धने मणाविति विश्वः । प्रत्यब्दं प्रतिवत्सरं समानयाति स्म आनीतवान् ॥ ३३ ॥

अथ बल्लाळादीनां त्रयाणां संततिं तच्चारित्रं च षड्भिः श्लोकैराह । तत्रादौ बल्लाळस्य पत्नीं तदौदार्यं तत्पुत्रांश्च युग्मेनाह येति । भर्तैव देवो यस्याः सा भर्तृदेवा पतिव्रता विदुषी ज्ञात्री विदेर्वसुः उगितश्चेति ङीप् । भुवि पृथिव्यां गोपिकेति विदिता प्रसिद्धा नास्ति एनः पातकं यस्याः सा अनेनाः । एनः पापे विपत्तौ चेति विश्वः । या गोपिका कनकेन सुवर्णेन प्रक्लृप्ताः कृताः चतुर्भिः शतैः मिताः मुद्राः कन्यां अर्थयतेऽसौ कन्यार्थी तस्मै द्विजाय दिने दिने इति प्रतिदिनं प्रददौ सा पूर्वं तनयमसूतेति उत्तरेणान्वयः ॥ ३४ ॥

---

* " बवापा " इति वा पाठः १० " बनाय " इति वा पाठः

**यो बाजिराय इति भूमितले प्रसिद्धिं यातो नराधिपविवर्धितकीर्ति[†]मालः**
**तं मध्यमं बुधजनाः प्रवदंति तस्य सर्वं चरित्रममितं पुरतः प्रवक्ष्ये ॥३७॥**
**कनिष्ठत्वमत्रेः सुतत्वे पुरासीत् तथा राघवात् पुत्रतायां तदेव**
**तथाप्येष रम्यैर्गुणैरग्रजाभ्यां वरिष्ठः कनिष्ठोपि नाम्ना चिमाजी ॥ ३८ ॥**
**कलिक्रांतमेतज्जगत् संविलक्ष्य जनं पापदीनं विरक्तोचिरात् सः**
**तटिन्यास्तटे विष्णुपद्या वसन् सन् विधत्ते तपः काशिकायाः समीपे॥३९**

सेति । सा गोपिका पूर्वं प्रथमं नास्ति तुला उपमा यस्येति अतुलस्तं नयेन नीत्या आद्यं विश्वासरायनामानं तनयं । अथ अनंतरं माधवरायं अन्यं तृतीयं नारायणं च असूत । अहं तेषां चरितं क्रमेण ज्येष्ठादिक्रमेण पुरतः अग्रभागे विततं विस्तृतं अभिधास्ये वक्ष्यामि ॥ ३५ ॥

ज्येष्ठस्य बल्लाळस्य संततिमुक्त्वा मध्यमस्य राघवस्य संततिमाह अत्रेरिति । ये त्रयः जगदीश्वराः ब्रह्मविष्णुमहेश्वराः । अत्रेः सकाशात् जगतः हिताय समभवन् । दत्तदुर्वासश्चंद्ररूपेण उत्पन्ना इत्यर्थः ते जगदीश्वराः पुनः राघवादपि जगतः हिताय जाताः अमीषु त्रिषु यः अमृतराय इति प्रसिद्धः सः दत्तः दत्तात्रेयावतारः । अत्र हेतुमाह सर्वे च ते गुणाश्च सर्वगुणाः शमदमादयः तेषां आलयः स्थानं तस्य भावः तत्त्वं तस्मात् । अत्र व्यंग्यं अयं राघवस्य दत्तः पुत्रः औरसो नेति ॥ ३६ ॥

य इति । नराधिपैः विवर्धिता वर्णिता कीर्त्तिमाला यस्य । निंदापक्षे तु । नराधिपः पदातिपो हूणेश्वरो राजा तेन विवर्धिता कीर्त्तिमाला यस्य । शत्रुभिराक्रांते महीमंडले हूणाधिपमानीय तद्द्वारैव शत्रुहननपूर्वकं राज्यस्य कृतत्वादिति भावः । यः बाजि-राय इति भूमितले प्रसिद्धिं यातस्तं बुधजनाः मध्यमं पुत्रमिति शेषः । अत्र व्यंग्यं मध्यमं दुर्वाससोवतारं प्रवदंति । तस्य अमितं विस्तृतं चरित्रं पुरतः अग्रे प्रवक्ष्ये कथयिष्यामि । ब्रूञो वच्यादेशे लृट् ॥ ३७ ॥

तृतीयं पुत्रमाह कनिष्ठत्वमिति । यद्यपि पुरा पूर्वं अत्रेः ऋषेः सकाशात् सुतत्वे पुत्रत्वे यथा येन प्रकारेण अतिशयेन अल्प इति कनिष्ठः तस्य भावस्तत्त्वं दत्तदुर्वाससो-रनुजत्वं अल्पशब्दात् अतिशयार्थे इष्टनि युवाल्पयोः कनन्यतरस्यामिति कनादेशः । यथा आसीत् तथा तेन प्रकारेण राघवात् पुत्रतायां पुत्रत्वे सति तदेव कनिष्ठत्वमेव आसीत् तथापि एवं सत्यपि अग्रजाभ्यां अमृतबाजिराजाभ्यां कनिष्ठोपि नाम्नापि चिमाजी अपि शब्दोत्र योज्यः । महाराष्ट्र-भाषया चिमाजीति संज्ञा लघोर्बालस्य । वयसा बालः नाम्नापि बालः । एषः गुणैः दयादाक्षिण्यादिभिः अतिशयेन वर इति वरिष्ठः आस्ते इति शेषः ॥ ३८ ॥

कलिक्रांतमिति । एतत् जगत् भूलोकं कलिना आक्रांतं व्याप्तं विलक्ष्य दृष्ट्वा

---

† " जालः " इति वा पाठः

सदाशिवः शिव इव पार्वतीवास्य पार्वती
पत्नी या पतिदेवा तामनपत्यां व्यधात् कलिः ॥ ४० ॥
यथा यथा राज्यमिदं विवृद्धं तथा तथा ब्राह्मणदक्षिणापि
विवर्धनीयेत्यविचारयंस्ते द्विजेषु सर्वेषु समागतेषु ॥ ४१ ॥
हैमीस्तथा रौप्यमयीश्च मुद्राः करैक ( १२ ) माषप्रमिता विधाय
एकत्र तां खिचडिकां द्विजेभ्यो मासे ददुः श्रावणिके त्रयस्ते ॥ ४२ ॥
द्विजातिमेघा द्विजराजवार्धेर्वस्वंबु सर्वे प्रचुरं प्रगृह्य
गृहं ययुः स्वं स्वमतीव हर्षात् कलिर्न सेहे धनदानमेतत् ॥ ४३ ॥
धनं गृहीत्वा प्रचुरं द्विजेषु रात्रौ निवृत्तेषु गृहागमाय

अत एव जनं पापेन कर्मणा दीनं विलक्ष्य अचिरात् शीघ्रं विरक्तः। दीनस्य शासनं अयुक्तमिति मत्वेत्यर्थः। सः विमानी काशिकायाः समीपे वर्तमानाया इति शेषः विष्णोःपदं विष्णुपदं विष्णुपदस्यापत्यं स्त्री विष्णुपदी तस्या विष्णुपद्याः भागीरथ्याः। पुंयोगादाख्यायां इति ङीप्। अत्र दांपत्यरूप एव संबंध इति न नियमः किंतु जन्यजनकभावोपीति मनोरमा अतः न्यायशास्त्रीयाः भवानंदीगदाधरीमथुरानाथीत्याद्याः संज्ञाः संगच्छंते तटे तीरे वसन् सन् तपः विधत्ते करोति ॥ ३९ ॥

सदाशिव इति। सदाशिवः सदाशिवसंज्ञः तृतीयो भ्राता शिव इव सांब इव आसीत् इति शेषः अस्य सदाशिवस्य पतिदेवा पतिव्रता पार्वतीव गौरीव स्थिता या पार्वतीसंज्ञा पत्नी तां कलिः अनपत्यां व्यधात् सदाशिवस्य एकपत्नीव्रतत्वात् संतत्यभाव एव आसीदिति भावः ॥ ४० ॥

एवं त्रयाणां अन्वयं उक्त्वा कलेः प्रसंगात् चरित्रांतरमाह यथेति। ते त्रयः द्विजेषु ब्राह्मणेषु समागतेषु सत्सु इदं राज्यं यथा यथा विवृद्धं तथा तथा ब्राह्मण दक्षिणापि विवर्धनीया इति अविचारयन् अचिंतयन् ॥ ४१ ॥

हैमीरिति। त्रयस्ते भ्रातरः करी च एकश्च करैकाः द्वादश अंकानां वामतो गतिः इति ज्योतिःशास्त्रे प्रसिद्धं तत्संख्याः ये माषाः माषोत्र अष्टगुंजाप्रमाणः तत्प्रमिताः हेम्नः इमाः हैम्यः हैमीः सुवर्णमयीः। अण्णंतत्वात् ङीप्। रौप्यप्रचुरा रौप्यमय्यः ताः रौप्यमयीः। टित्वात् ङीप्। एकत्र विधाय हैमीनां राजतीनां च मुद्राणां मेलनं कृत्वेत्यर्थः। तां खिचडिकां द्विजेभ्यः श्रावणिके मासे। आषाढे श्रावणे तु स्यान्नभाः श्रावणिकश्च सः इत्यमरः। ददुः ॥ ४२ ॥

द्विजातीति। द्विजातयः एव मेघाः द्विजराजास्त्रयो भ्रातरः स एव वार्धिः समुद्रः तस्माद्वसु धनं तदेव अंबु प्रचुरं यथेष्टं प्रगृह्य गृहीत्वा अतीव अत्यंतं हर्षात् स्वं स्वं गृहं प्रययुः। कलिः एतत् धनदानं न सेहे लिट्। मदीये कलियुगे एतत् धनदानमयुक्तमिति असहमान आसीत् इत्यर्थः ॥ ४३ ॥

नद्योस्तडागस्य च भूरि वारि समुद्रतुल्यं ववृधे कदाचित्[11] ॥ ४४ ॥
सहस्रशो विप्रवराः प्रमग्ना जलेऽब्धितुल्ये कलिराजनुन्ने
पुरो गतो यः स न वै निवृत्तः कृतिं समाख्यातुमहो जलस्य ॥ ४५ ॥
मग्नेषु भर्तृषु जले सलिलं तदेव तद्योषिदक्षिजलपूरनदीन्हृदत्त्वम्
अभ्येत्य तत्र विनिमज्जयति स्म योषास्ता उद्धृता नु कलिना वलयादि मग्नं ॥ ४६ ॥

इति श्रीशिवकाव्ये कलिविलासे पुरुषोत्तमपंडितविरचिते
त्रयोदशश्चमत्कारः

धनमिति । द्विजेषु प्रचुरं यथेष्ट धनं गृहीत्वा गृहं प्रति आगमः गृहागमः तस्मै रात्रौ निवृत्तेषु सत्सु नद्योस्तत्रत्ययोः तडागस्य च सरसश्च भूरि प्रभूतं वारि उदकं समुद्रेण तुल्यं कदाचित् ववृधे ॥ ४४ ॥

सहस्रश इति । सहस्रशः । बाहुल्याच्छस्कारकादन्यतरस्यामिति शस् । विप्रवराः अब्धितुल्ये कलिराजनुन्ने प्रेरिते जले प्रमग्नाः यः पुरः अग्रे गतः सः जलस्य कृतिं समाख्यातुं अहो इत्याश्चर्ये न वै निवृत्तः नैव निवृत्तः । एवार्थे वै शब्दः ॥ ४५ ॥

मग्नेष्विति । तदेव सलिलं तत्रत्यतडागगतं भर्तृषु पतिषु जले मग्नेषु सत्सु तेषां या योषितः स्त्रियः तासां अक्षीणि नेत्राणि तत्संबंधि यज्जलं तस्य यः पूरः तस्य या नदी तस्याः यो न्हदः तत्त्वं अभ्येत्य तत्र न्हदे ताः योषा विनिमज्जयति स्म कलिना ताः योषाः न्हदात् उद्धृताः नु इति वितर्के यथा तत्पतयो न पुनरागताः एवं योषितोऽपि रोदनोदकन्हदे मग्नाः अतः ताभिरपि पतिलोकं गंतव्यमेवं सति कलिना जलात्तासामुद्धारः कृतः इत्युत्प्रेक्षा । जलमज्जनोत्प्रेक्षायां प्रमाणमाह । यतः तासां वलयादि कंकणादि पदार्थजातं मग्नं गतं उदके निलीनमिति यावत् नु इत्युत्प्रेक्षा । लोके हि जलमग्नस्य वस्त्रादि किंचित् जले मज्जति किंचित् तिष्ठति तद्वदिति भावः ॥ ४६ ॥

इति श्रीशिवकाव्यव्याख्यायां काव्यप्रकाशिकायां स्वकृतायां त्रयोदशश्चमत्कारः॥१३॥

---

## चतुर्दशश्चमत्कारः

गोपिका कलिनियोजिता पतिं प्राह वंचयति ते धनेऽनुजः
मत्सुतः समवने धनार्जने शासने च विनियोज्यतामसौ ॥ १ ॥

श्रीगणेशाय नमः । गोपिकेति । कलिना नियोजिता प्रेरिता गोपिका बल्लाळपत्नी ते अनुजः राघवः धने विषये वंचयति प्रतारयत्यतः असौ मत्सुतः विश्वासरायः प्रजानामिति शेषः समवने रक्षणे शासने धनार्जने च विनियोज्यताम् । कर्मणि

---

११ "नद्यास्त" इति वा पाठः १२ "तदानीम्" इति वा पाठः

विश्वं यदासयति नित्यमयं स्वधर्मे विश्वास इत्यभिधया भुवने प्रसिद्धः
विश्वासहेतुरपि विश्वजनीनकर्मा विश्वास एव मम बाह्यपदप्रचारी ॥ २ ॥

युक्तमेतदिति सर्वथा वदन् भावुना सह तदाग्रजं सुतं
सैन्यपालसंचिवैरनुद्रुतं राजराजदिशमाश्वयापयत् ॥ ३ ॥

भावुरप्यखिलसैन्यपैर्युतः प्रस्थितः परशुराम एव वै
इत्थमूचुरवनीतले जनास्तं द्विजातिपतिपालकाधिपं ॥ ४ ॥

ऱ्हस्वाः स्थूलाश्च तोफा विततरमुखा दुर्गसंस्था अनेकाः
सिंदूरारक्तवक्त्राः पितृपतिसदनाव्हानदूत्यः प्रगल्भाः
उत्तार्यारोप्य यंत्रेषु च मदकरिभिर्नोदिताः पृष्ठतस्ताः
प्रस्थाप्यागात् स पश्चान्निखिलभटयुतो वीरवर्याग्रगण्यः ॥ ५ ॥

लोट्। इति पतिं प्राह ॥ १ ॥

विश्वाससंज्ञानिरुक्तिपूर्वकं तद्गुणानाहैकेन विश्वमिति। अयं विश्वासनामा यत् विश्वं लोकं स्वधर्मे आसयति स्थापयति अतः विश्वास इत्यभिधया नाम्ना भुवने प्रसिद्धः। यथार्थनामायमिति भावः। विश्वोपपदादास उपवेशने इत्यस्माण्णिजंतात् कर्मण्यण् इति अण् प्रत्ययः। विश्वस्मै जनाय हितं विश्वजनीनं विश्वजनीनं कर्म यस्य सः विश्वजनीनकर्मा। आत्मन् विश्वजनेत्यादिना ख प्रत्ययः। एषः बहिर्भवं बाह्यं बाह्यं च तत्पदं च बाह्यपदं बाह्यप्रदेशः तत्र प्रचरतीति बाह्यपदप्रचारी। पदं व्यवसितत्राणस्थानलक्ष्मांघ्रिवस्तुष्विति अमरः। बहिःषाट्टिलोपो यञ् चेति यन्। मम विश्वासः प्राणः। बहिश्चरः प्राण इत्यर्थः। विश्वासस्य लोके प्रसिद्धस्य हेतुः अस्तीति शेषः। अतः राघवकार्ये अयमेव योजनीयः इति भावः ॥ २ ॥

युक्तमिति। तदा तत्र तस्मिन् काले स इति शेषः। एतत्त्वयोक्तं सर्वथा सर्वप्रकारेण युक्तम्। प्रकारवचने थाल्। इति वदन् सन् सैन्यपालैः सेनापतिभिः अनुद्रुतं अनुधावितं अग्रजं सुतं विश्वासाख्यं भावुना सदाशिवेन सह राजराजो धनाधिपः कुबेरः इति यावत् तस्य या दिक् उदीची तां आशु शीघ्रं अयापयत् प्रेषितवान्। यातेर्णिजंताल्लङ् ॥ ३ ॥

भावुरिति। भावुः सदाशिवोऽपि अखिलैः सैन्यपैः सेनापतिभिः युतः सन् प्रस्थितः प्रस्थानं कृतवान्। अवनीतले वर्तमाना इति शेषः। द्विजातीनां पतयः तेषां पालकाः सेनापतयः तेषां आधिपं तं सदाशिवं एषः परशुरामः वै निश्चये परशुरामावतार एव इत्थं ऊचुः जगदुः ॥ ४ ॥

ऱ्हस्वा इति। निखिलैः भटैः युतः वीरेषु ये वर्याः तेषु अग्रगण्यः। सः

---

१ "सचिवैः" इति वा पाठः २ "वक्त्राः" इति वा पाठः ३ "यंत्राणि" इति वा पाठः

**यावंतः शस्त्रजीवा युधि विजितरिपुव्रातलब्धातिमाना-**
**स्ते सर्वे बालपुत्रा अपि निजयुवतीर्गेह एवापहाय**
**अश्वारूढा नदंतो हरिहयपृतनामप्यलं जेतुकामाः**
**कामं लब्ध्वा प्रकामं मनसि विनिहितं प्रस्थिता उत्तराशाम् ॥६॥**
**सिंधोरंतः स्थिता भूर्निखिलहितकृता सा जिता राघवेण**
**लोकः स्वर्गोवशिष्टस्तमपि नरवरो भावुनामा हि गंता**
**यास्यामस्तत्र सर्वे वयमिति तनयानन्यलोकोपकर्तॄन्**
**उत्पाद्य प्रस्थितास्ते रणजितरिपवो वीरवर्या असंख्याः ॥ ७ ॥ ॥**
**सेनानीर्दंतिसंस्थो निजभुजविजितारिव्रजो वीज्यमानो**
**वीराढ्यश्चामरेण प्रसृततरयशोमंडपो भूमिलोके**

सदाशिवः । अतिशयेन विततं इति विततरं मुखं यासां ताः अनेकाः बह्व्यः सिंदूरेण आरक्तं वक्त्रं यासां ताः प्रगल्भाः प्रौढाः पितृपतिर्यमः तस्य सदनं गृहं तस्मै यत् आव्हानं तत्संबंधिन्यः दूत्यः दुर्गेषु संस्थाः दुर्गसंस्थाः ऱ्हस्वाः अल्पाः स्थूलाश्च तोफाः उत्तार्य भूमाविति शेषः । यंत्रेषु शकटेषु आरोप्य स्थापयित्वा पृष्ठतः पृष्ठभागे करिरदनैः नोदिताः प्रेरिताः ताः प्रस्थाप्य पश्चात् स्वयं अगात् ॥ ५ ॥

यावंत इति । युधि युद्धे । समुदायः स्त्रियां संयत्सामित्यानिसमिद्युध इत्यमरः । विजिताः रिपुव्राताः यैस्ते विजितारिपुव्राताः अत एव लब्धः अतिमानो यैस्ते तथोक्ताः युधीत्यनेन सापेक्षत्वेऽपि गमकत्वात् समासः हरयः हयाः यस्य सः इंद्रः । जंभभेदी हरिहयः स्वाराण्नमुचिसूदनः इत्यमरः । तस्य पृतनां सेनां । पृतनाऽनीकिनी चमूः इत्यमरः । अलं अत्यंतं जेतुं कामो येषां ते जेतुकामाः । तुं काममनसोरपीति मकारलोपः । अश्वारूढाः नदंतः यावंतः शस्त्रैः जीवंति ते शस्त्रजीवाः तावंतः ते सर्वे वीराः निजयुवतीः गेह एव अपहाय मनसि विनिहितं चिंतितं कामं मनोरथं धनगजादि प्रकामं अत्यंतं लब्ध्वा उत्तराशां उदीचीं प्रस्थिताः प्रस्थानं चक्रुः ॥६॥

सिंधोरिति । असंख्याः रणे जिताः रिपवः यैस्ते तथोक्ताः वीरवर्याः सिंधोः समुद्रस्य अन्ततः मध्ये स्थिता या भूः सा निखिलानां लोकानां हितं करोतीति निखिलहितकृत् तेन राघवेण जिता । स्वर्गो लोकोऽवशिष्टः । अतः भावुनामा सदाशिवः नरवरः तं स्वर्गं गंता गमिष्यति । हीति निश्चयेन वयं सर्वेऽपि तत्र स्वर्गे यास्यामः । तत्सेवकत्वादिति भावः इति हेतोः । अन्यः लोकः अन्यलोकः स्वर्गलोकः तस्मिन् ये उपकुर्वंति ते अन्यलोकोपकर्तारः तान् यद्वा अन्यः लोकः येषां ते अन्यलोकाः स्वर्गस्था इत्यर्थः । तेषु ये उपकुर्वंति ते अन्यलोकोपकर्तारः तान् पुत्रान् उत्पाद्य । परलोकं गतानामन्नवस्त्रादिसमर्पणेन तर्पणेन तापहारकत्वं पुत्रातिरिक्तैः कर्तुमशक्यमिति भावः । प्रस्थिताः ॥ ७ ॥

मल्लारिर्नाम जेता जवनहयवेगतैर्वीरसंघैरुपेत-
श्चित्रं केतुं वहन् सन् सितवसनधरः सर्वमान्यः प्रतस्थे ॥ ८ ॥
सिंदे नाम्ना प्रसिद्धो जगति जनहितो दत्त इत्याख्ययापि
सेनानीर्नागकेतुश्चपलहयगतैर्लक्षसंख्यैः सुवीरैः
युक्तः पूर्वं प्रतस्थे रणभुवि निहतद्वेषणो दीनपालो
दाता विद्वत्सुरद्रुः स्मरहरचरणाम्भोरुहद्वंद्वभृंगः ॥ ९ ॥
धर्मो भीमार्जुनाभ्यां कुरुपतितनयो द्रोणभीष्माभिधाभ्यां
कृष्णो रामोद्धवाभ्यां दशरथतनयो वानराभ्यामुभाभ्यां
भाल्लाग्निर्लोचनाभ्यामिव मदनरिपोर्गार्हपत्योऽनलाभ्यां
पक्षाभ्यां पक्षिराजो भुवि किल शुशुभे सैन्यपाभ्यां स ताभ्यां॥१०॥
यं देशं वै स यातस्तदधिपतिरथ प्रांजलिः सन् धनस्य
कृत्वा राशिं पुरस्तात् सकरुणसदयालोकनाशं ययाचे

अथास्य सेनापतिद्वयप्रस्थानं श्लोकद्वयेनाह सेनानीरिति । दंतिनि सम्यक् तिष्ठतीति दंतिसंस्थः । निजौ यौ भुजौ ताभ्यां विजितः अरिजनो येन सः । वीरेषु अग्र्यः श्रेष्ठः चामरेण वीज्यमानः भूमिलोके प्रसृततरयशोमंडपः । चित्रं अनेकवर्णपटोद्भवं केतुं ध्वजं वहन् जयतीति जेता । सितानां वसनानां धरो धर्ता सर्वेषां मान्यः सर्वमान्यः मल्लारिर्नाम मल्लारिसंज्ञः सेनानीः जवनाः वेगवत्तराः ये हयाः तेषु गतैः वीरसंघैः उपेतः सन् प्रतस्थे ॥ ८ ॥

सिंदे इति । जनानां हितः रणभुवि युद्धभूमौ निहताः द्वेषणाः शत्रवो येन सः रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः इत्यमरः । दीनान् पालयतीति दीनपालः, विदुषां पंडितानां सुरद्रुः कल्पवृक्षः स्मरहरः शिवः तस्य चरणाम्भोरुहयोः यद् द्वंद्वं तस्य भृंगः । नागः फणी तद्युक्तः केतुर्ध्वजो यस्येति नागकेतुः जगति सिंदे इति नाम्ना उपनाम्ना प्रसिद्धः । दत्त इति आख्यया मुख्यया प्रसिद्धः सेनानीः चपलहयगतैर्लक्षसंख्यैः सुवीरैः युक्तः सन् पूर्वं मल्लारिसेनापतेः पूर्वं प्रतस्थे ॥ ९ ॥

धर्म इति । स विश्वासराजः ताभ्यां सैन्यपाभ्यां । भीमार्जुनाभ्यां धर्म इव युधिष्ठिर इव । द्रोणभीष्माभिधाभ्यां सेनानीभ्यां कुरुपतिर्धृतराष्ट्रस्तस्य तनय इव दुर्योधन इव । रामोद्धवाभ्यां कृष्ण इव । उभाभ्यां वानराभ्यां सुग्रीवहनुमद्भ्यां दशरथतनयो राम इव । लोचनाभ्यां नेत्राभ्यां मदनरिपोः शिवस्य भालाग्निरिव । गृहपतिर्यजमानस्तेन संयुक्तः गार्हपत्यः अग्निः । गृहपतिना संयुक्तेत्य इतित्य प्रत्ययः ॥ अनलाभ्यां आहवनीयदाक्षिणाग्निभ्यामिव पक्षाभ्यां पक्षिराज इव गरुड इव शुशुभे ॥ १० ॥

यमिति । अथ सः यं देशं वै पादपूरणे यातः गतः तदधिपतिः प्रांजलिः

---

४ "वीरो" इति वा पाठः ५ "गतगतैः" इति वा पाठः

कर्षन् सेनासमुद्रं नरवरमहितोऽगात् सपुत्रः स दिल्लीं
तत्रत्यं म्लेच्छनाथं नृपवरमहितं चाग्रे सत्कृत्य यातः ॥ ११ ॥
सत्पुष्पाण्यर्हणेन श्रुतिशतपठनं याजनाद्यैर्विहीनं
कांता भर्त्रा विहीना बुधकृतकविता तज्ज्ञपुंसा विहीना
व्यर्थैवं मे समग्रं बलमिदमतुलं योधसंघा असंख्या
युद्धं नो चेत् किमेतैरिति मनसि कलिप्रेरितोऽचिंतयत् सः ॥१२॥
सोनपात्रं पानपात्रमिति यन्नगरद्वयं
इंद्रप्रस्थस्य निकटे संस्थितास्तत्र दुर्मदाः ॥ १३ ॥
मद्यपा रणदुर्धर्षा म्लेच्छपाला महौजसः
असंख्यातबला आसन् गिल्चे इत्यभिधाधराः ॥ १४ ॥
अयाचत धनं तेषामधिपं कोटियुग्मकं
करः प्रदत्तो नास्माभिः कदाचिदिति सोऽब्रवीत् ॥ १५ ॥

सन् धनस्य पुरस्तात् अग्रे राशिं कृत्वा सकरुणं सदयं यत् आलोकनं तस्य अंशं लेशं ययाचे प्रार्थितवान् । पुत्रेण विश्वासेन सहितः सपुत्रः स सदाशिवः सेनासमुद्रं कर्षन् सन् दिल्लीं इंद्रप्रस्थं अगात् गतः । नरवरैः राजभिः महितः पूजितः सः तत्र भवः तत्रत्यः तं । अव्ययात्त्यबिति त्रल प्रत्ययांतात् त्यप् । नृपवरैः राजश्रेष्ठैः । महितं पूजितं म्लेच्छनाथं दिल्लीपतिं सत्कृत्य यातः अग्रे गतः ॥ ११ ॥

सत्पुष्पाणीति । अर्हणेन पूजनेन विहीनानि सत्पुष्पाणि कमलादीनि यथा व्यर्थानि । याजनाद्यैः विहीनं रहितं श्रुतिशतपठनं व्यर्थं भर्त्रा विहीना कांता व्यर्था तां जानातीति तज्ज्ञः तज्ज्ञश्चासौ पुमांश्च तेन विहीना बुधकृतकविता व्यर्थाः एवं मे समग्रं बलं चतुरंगसेना । युद्धं नो चेत् व्यर्थं । असंख्याः योधसंघाः व्यर्थाः । बल-ग्रहणेनैव योधग्रहणे ब्राह्मणवशिष्ठन्यायेन पुनर्ग्रहणं । यद्वा । इदं समग्रं मे बलं मदीया शरीरसंपत्तिः व्यर्था एतैः किं न किंचित् प्रयोजनमित्यर्थः इति कालिना प्रेरितः सः इति मनसि व्यचिंतयत् ॥ १२ ॥

सोनपात्रमिति । इंद्रप्रस्थस्य दिल्लीनगरस्य निकटे सोनपात्रं पानपात्रमिति यन्नग-रद्वयं तत्र नगरद्वये स्थिताः वर्तमानाः । दुर्मदाः[१] म्लेच्छपालाः आसन्निति उत्तरेणान्वयः ॥ १३ ॥

तानेव विशिनष्टि मद्यपा इति । मद्यपाः रणे दुर्धर्षाः दुःसहाः महौजसः महाबलाः असंख्यातं बलं सैन्यं येषा ते असंख्यातबलाः । गिल्चे इत्यभिधां संज्ञां बिभ्रति ते-अभिधाभृतः म्लेच्छपालाः आसन् ॥ १४ ॥

अयाचतेति । स तेषां म्लेच्छानां अधिपं तत्स्वामिनं कोटियुग्मकं धनं

१ "त्यभिधाभृतः" इति पा पाठः

कोटिरेका प्रदत्तेयं गृह्यतां यदि रोचते ॥
नो चेद्युद्धाय सन्नद्धा यूयं भवत वाडवाः ॥ १६ ॥
मल्लारिरत्रद्धीमान् सत्कृत्य स्वं द्विजाधिपं ॥
यशःक्लेशो वरं लोके नापकीर्तेर्महत् फलं ॥ १७ ॥
साम्ना दानेन भेदेन समस्तैरथवा पृथक् ॥
विजेतुं प्रयतेतारीन्न युद्धेन कदाचन ॥ १८ ॥
इति वाक्यमनुस्मृत्य युद्धं मे नैव रोचते ॥
अस्माकं जय एव स्यादिति नैव विनिश्चयः ॥ १९ ॥
उदग्दिक्प्रस्थितेर्लब्धो जय एव सदा त्वया ॥
पराजयो यदि भवेत् किमार्यं प्रति वक्ष्यसि ॥ २० ॥
संस्थाप्य गेहे दादाख्यं वयमत्र समागताः ॥

अयाचत । सः म्लेच्छाधिपः अस्माभिः कदाचिदपि करः न प्रदत्तः इति अब्रवीत् ॥ १५ ॥

कोटिरिति । इयं पुरोवर्तिनी एका कोटिः प्रदत्ता यदि रोचते तर्हि गृह्यताम् । हे वाडवाः ब्राह्मणाः अनेन भवतां युद्धं धर्मो न भवतीति सूचितं । नो चेत् स्वीकाराभावे यूयं युद्धाय सन्नद्धाः सिद्धाः भवत ॥ १६ ॥

तदा मल्लारिः सेनापतिः पंचभिराह मल्लारिरिति । धीमान् मल्लारिः सेनापतिः । स्वं स्वकीयं स्वामिनमित्यर्थः द्विजाधिपं सदाशिवं सत्कृत्य वाचा अभिनंद्य स्ववाक्य-स्वीकारार्थमिति भावः लोके यशःसंबंधी क्लेशोऽपि वरं मनाक् प्रियः । दैवाद्वृत्ते वरः श्रेष्ठ त्रिषु क्लीबे मनाक् प्रिये इत्यमरः । अपकीर्तेः अपकीर्तिसंबंधि महत् फलं अलाब्वादि न वरं इयं लोकोक्तिः । यशःसंरक्षणपूर्वकोऽल्पोऽपि लाभो युक्तः । न तु यशोहानिपूर्वको महतो धनस्य लाभः इत्यर्थः । अप्रस्तुतप्रशंसालंकारः । अप्रस्तुतप्रशंसा स्यात् सा यत्र प्रस्तुताश्रया । एकः कृती शकुंतेषु योऽन्यं शक्रान्न याचते । इति कुवलयानंदे चंद्रालोकः ॥ १७ ॥

युद्धाकरणे मनुस्मृतिं स्मारयति साम्ना दानेनेति ॥ १८ ॥

इतीति । इति वाक्यं मनुवाक्यं अनुस्मृत्य मे मह्यं युद्धं नैव रोचते । यतः अस्माकं जय एव स्यात् इति निश्चयः न ॥ १९ ॥

उदगिति । त्वया उदग्दिशं उत्तरां दिशं प्रति या प्रस्थितिः प्रस्थानं तस्मात् प्रस्थानकालादित्यर्थः । सदा सर्वकालं जय एव लब्धः । यदि पराजयो भवेत् तर्हि आर्यं बल्लाळं प्रति किं वक्ष्यसि ॥ २० ॥

संस्थाप्येति । किं च वयं सर्वे दादाख्यं गेहे संस्थाप्य । उदग्दिग्यात्रा तस्यैव

* " भो द्विजाः " इति वा पाठः.

पराजयो यदि भवेत् तस्य हास्यास्पदं वयं ॥ २१ ॥
भावुस्तदावदद्वाचं बलगर्वसमान्वितः ॥
हे सेनाधिपते काका शत्रुकक्षहुताशन ॥ २२ ॥
क्षुण्णास्त्वया रणभुवः सह वीरवर्यैर्भूपालपालकनृपालगणैर्नितांतं ॥
वृद्धोऽसि सांप्रतमतो वचनं तवेदं युक्तं वयं प्रथममेव विनिर्गताः स्म॥२३॥
सेनां निजां समवलंब्य इतो विदूरे स्थित्वा विलोकय रणो भवितात्र यस्तम् ॥
धक्ष्यामि शत्रुचयकक्षमहं क्षणेन कल्पांतवन्हिरहमास्मि कृपाणपाणे ॥२४॥
कुरुक्षेत्रमेतत् पुरा पांडवानां कुरुणामभूत् संगरः संघहंता ॥

नियता तां यात्रामभिमानेन स्वीकृत्येति भावः। अत्र अस्मिन् देशे समागताः। एवं सति पराजयो यदि भवेत् तर्हि तस्य दादाख्यस्य हासस्य उपहासस्य आस्पदं स्थानं वयम् । आस्पदं प्रतिष्ठायामिति निपातनात् साधुः। वयमिति पुनरुक्तिर्भिन्नान्वयत्वान्न दोषाय ॥ २१ ॥

भावुरिति। बलं सैन्यं शरीरशक्तिर्वा तया समन्वितः भावुः सदाशिवः तदा तस्मिन् काले शत्रव एव कक्षः तृणं तस्य हुताशन दाहक। स्पर्धापदे च दोर्मूले कक्षो वीरतृणेषु चेति मेदिनी। हे सेनाधिपते हे काका हे पितृव्य महाराष्ट्र भाषया पितृव्यपर्यायभूतं काका इति संबोधनं। पितृव्यत्वं स्वापितुर्मित्रत्वेन। इति संबोध्य वक्ष्यमाणां वाचमवदत् ॥ २२ ॥

क्षुण्णाइति। त्वया वीरेषु वर्याः श्रेष्ठाः तैः भूपालपालकनृपालगणैः मांडलिकाधिपराजवृंदैः। यद्वा हे भूपालपालक। सह रणभुवः नितांतं अत्यंतं क्षुण्णाः अभ्यस्ताः। सांप्रतं अधुना वृद्धोऽसि अतस्तव इदं वचनं पूर्वोक्तं युद्धाकरणरूपं युक्तं। वयं तु प्रथममेव विनिर्गताः। स्म पादपूरणे। स्म पादपूरणे भूतार्थे इत्यमरः ॥ २३ ॥

सेनामिति। त्वमिति शेषः निजां स्वकीयां त्वदधीनामित्यर्थः सेनां समवलंब्य गृहीत्वा इतः अस्मात् प्रदेशात् विदूरे समीपे असंधिः वाक्यत्वात् वैत्राक्षिकः। तदुक्तम्। संहितैकपदे नित्या नित्या धातूपसर्गयोः। नित्या समासे वाक्ये तु सा विवक्षामपेक्षते। इति। अत एव। हे रोहिणी त्वमसि शीलवतीषु धन्या एनं निवारय पतिं सखि दुर्विनीतं। इत्यादिप्रयोगाः संगच्छंते। स्थित्वा अत्र यः रणः भविता तं विलोकय। अहं शत्रुचयकक्षं क्षणेन धक्ष्यामि। कृपाणः पाणौ यस्य सः कृपाणपाणिः तत्संबुधौ हे कृपाणपाणे अनेन त्वं मद्वीर्यज्ञोऽसीति सूचितं। अहं कल्पांतवन्हिः अस्मि ॥ २४ ॥

कुरुक्षेत्रमिति। हे सदाशिव। एतत् त्वयाऽधिष्ठितं कुरुक्षेत्रमस्ति। अत्र पुरा

---

८ " वाक्यमिदं प्रोवाच बलगर्वितः " इति वा पाठः.

पिशाचास्तदा तर्पिता भूतसंघा बुभुक्षाकुलास्तेऽधुना तर्पिताः स्युः॥२५॥
स एवं वचस्तथ्यमुक्त्वा बलेन निजेनान्वितो दूरतो हंत तस्थौ ॥
स भावुस्तदान्येऽपि गच्छेयुरेवं विचिंत्याग्रतः कार्यमेतच्चकार ॥ २६ ॥
ध्वजिन्याः समंताच्च खानाखुभक्षैर्नरैर्गर्तमेकं सुविस्तीर्णमेषः ॥
अगाधानलस्पर्शमेकैव यद्वा रिपुभ्योभिभूतिर्भवेन्नेति जल्पन् ॥ २७ ॥
घनोद्गर्जिता जिष्णुशब्दाः स तोफाः सहस्रं पुरस्कृत्य तस्थौ ससेनः ॥
अनेकानि वाद्यानि नेदुस्तदानीं नदंतो भटाश्चापि तस्थुः प्रहृष्टाः॥२८॥
तथा ''तेपि वीराः स्वसेनासमुद्रं वितत्यातिहृष्टाः पुरः सम्मुरीपत् ॥

पूर्वं पांडवानां कुरूणां संघस्य स्त्रीपुत्रादिसंघस्य हंता संगरः संग्रामः अभूत्। तदा पिशाचाः तैः पांडवकौरवैः तर्पिताः। अधुना अस्मिन् काले भोक्तुमिच्छा बुभुक्षा तया आकुलाः व्याप्ताः। भुजपालनाभ्यवहारयोरित्यस्मात् सनि द्वित्वे टाप्। ते पिशाचाः तर्पिताः स्युः। अत्र पूर्वं यथा पांडवकौरवसेनाया विनाशोभूत् तथा तवाऽपि सेनाया इति भावः। इदं वाक्यं सदाशिवं प्रति मल्लारिः। अग्रिमश्लोके स एवं वचः तथ्यमुक्त्वेत्युक्तेः॥ २५ ॥

स इति। स मल्लारिः एवं अनेन प्रकारेण तथ्यं सत्यं वचः उक्त्वा निजेन बलेन सैन्येन अन्वितः सन् हंत इति खेदे दूरे इति दूरतः। सार्वविभक्तिकस्तसिः। तस्थौ। तदा स भावुः एवं अन्येऽपि सेनापतयः गच्छेयुरिति विचिंत्य अग्रतः अग्रे एतत् वक्ष्यमाणं कार्यं कृत्यं चकार ॥ २६ ॥

ध्वजिन्या इति। एषः सदाशिवः रिपुभ्यः शत्रुभ्यः अभिभूतिः अभिभवः न भवेत् इति जल्पन् सन् स्वसैनिकान् वेदयन् सन् इत्यर्थः। आखून् भक्षयंति ते आखुभक्षाः तैः नरैः खनकैः। कर्मण्यण्। कृत्वा ध्वजिन्याः सेनायाः समंतात्। तलस्य स्पर्शोऽस्यास्तीति तलस्पर्शी न तलस्पर्शी अतलस्पर्शी अतलस्पर्शी अगाधं दुस्तरं च तत् अतलस्पर्शी च अगाधातलस्पर्शी दुःप्रवेशामित्यर्थः सुतरां विस्तीर्णं अश्वैः उल्लुत्य गंतुमशक्यमित्यर्थः। एकं गर्तं अवटं कुंडलाकारमित्यर्थः। गर्तः त्रिगर्तदेशे स्यादवटे च कुकुंदरे इति विश्वः। चकार। यद्वा। यस्य द्वारं एकैव आसीदिति शेषः॥ २७ ॥

घनेति। सः सदाशिवः घनानां उद्गर्जितं घनोद्गर्जितं तस्य आसमंतात् जिष्णुर्जयशीलः शब्दः यासां ताः तोफाः यंत्राणि सहस्रं सहस्रसंख्याः पुरस्कृत्य अग्रतः कृत्वा ससेनः तस्थौ योद्धुमिति भावः। तदानीं अनेकानि वाद्यानि नेदुः भटाः प्रहृष्टाः सन्तः तस्थुः॥ २८ ॥

एवं सदाशिवसेनां व्यूहरचनामुक्त्वा तच्छत्रूणां व्यूहरचनामाह तथेति। तथा

---

९ "अनेकाः" इति वा पाठः १० "हृष्टाः प्रतुष्टाः" इति वा पाठः. ११ "सम" इति वा पाठः

रिपोः शस्त्रसंघागमं वीक्षमाणाः प्लवंतो नदंतो हसंतोत्र तस्थुः ॥ २९ ॥
तदा मल्लहंताप्तदूतैर्द्विजेशं स्फुटं वेदयामास युद्धस्य कालः ॥
न चास्तीति तत्रोत्तरं प्राह भावुर्न वृद्धस्य वाक्यं जिगीषोर्मतं मे ॥ ३० ॥
युगांतोदिता मेघसंघा नदंतो यथा वारिधारा विमुंचंति शश्वत् ॥
तथैवायसीं गोलवृष्टिं प्रतेभ्यो अ[13]खंडं व्यमुंचन् सुतोफाः परेषु ॥ ३१ ॥
तदा शत्रवस्तेपि वीरा अनल्पाः सुरापा यथा राक्षसा हेम[14]पुर्याः ॥
असृक्पानमत्ता नदंतो व्यमुंचन् द्विजेशस्य सैन्ये च गोलाग्निराशीन् ॥३२
अहोरात्रमेवं रणे संप्रवृत्ते द्वितीयेऽन्हि वीरः स विश्वासरायः ॥
करींद्रं समारुह्य संग्राममध्यं ययौ वीरसंघैस्तुरंगाधिरूढः ॥ ३३ ॥

तेऽपि वीराः यवनाः स्वसेनासमुद्रं वितत्य विस्तार्य अतिहृष्टाः सन्तः ईषत् किंचित् पुरः अग्रे सस्तुः प्लवंतः उड्डानं कुर्वंतः नदंतः हसंतः ते रिपोः शस्त्रसंघस्य आगमं वीक्षमाणाः संतः । अनेन अतिवीरत्वं धीरत्वं सूचितं । अत्र संग्रामभूमौ तस्थुः ॥२९॥

तदेति । मल्लहंता मल्लारिनामा सेनापतिः द्विजेशं सदाशिवं आप्तैः दूतैः युद्धस्य कालः न चास्ति नैवास्तीति अस्मदपेक्षया शत्रोः प्राबल्यादिति भावः । स्फुटं स्पष्टं वेदयामास ज्ञापयामास । भावुः सदाशिवः तत्र मल्लारिवचने जिगीषोर्मे वृद्धस्य नरठस्य वाक्यं न मतं न मान्यमित्युत्तरं प्राह । प्रारब्धाकर्षिताः स्वकीयानां हितकारिणां हितमपि वाक्यं नाद्रियंते इति भावः ॥ ३० ॥

एवं उत्तरमुक्त्वा अग्रिमं कृत्यमाह युगांतेति । युगानां अंतः युगांतः प्रलयः तत्र उदिताः मेघानां संघाः यथा शश्वत् निरंतरं वारिधाराः विमुचंति तथैव सुतोफाः परेषु यवनेषु अयसः इयमायसी तां । तस्येदमित्यण् ङीप् च । गोलानां वृष्टिं अखंडं अविच्छिन्नं व्यमुंचन् ससृजुः । अत्र काष्ठानि पचंतीतिवत् सौकर्यज्ञापनार्थं करणीभूतानां तोफानां कर्तृत्वम् ॥ ३१ ॥

अथ शत्रूणां कृत्यमाह तदेति । अनल्पाः बहवः सुरां पिबंति ते सुरापाः ते वीराः यवनाः अपि तदा । आतोनुपसर्गे कः । नदंतः सन्तः यथा हेमपुर्याः लंकायाः संबंधिनो राक्षसाः असृक्पानेन मत्ताः संतः द्विजेशस्य दाशरथेः सैन्ये गोलाग्निराशीन् व्यमुंचन् तथा द्विजेशस्य सदाशिवस्य सैन्ये गोलाग्निराशीन् व्यमुंचन् ॥३२॥

अहोरात्रमिति । वीरः स विश्वासरायः एवं रणे संग्रामे अहश्च रात्रिश्च अहोरात्रः तमहोरात्रं अहर्निशं । अहः सर्वैकदेशपुण्याच्च रात्रेरिति समासांतोऽच् । रात्राह्नाहाः पुंसीति पुंस्त्वं । कालाध्वनोरत्यंतसंयोगे इति द्वितीया । संप्रवृत्ते सति द्वितीयेन्हि करींद्रं समारुह्य तुरंगाधिरूढैः वीरसंघैः सहेति शेषः संग्राममध्यं ययौ ॥ ३३ ॥

---

१२ " नृपेण " इति वा पाठः १३ " नियुक्ता अमुंचन् " इति वा पाठः १४ " पुर्यां " इति वा पाठः.

तथा वारणे वारबाणं वसानो दधानः करे खड्गरत्नं स्थितः सन् ॥
ययौ भानुनामापि भुक्त्वातितुष्टः जयोऽद्यैव नः स्यादिति व्याहरन् सः॥३४
पुरस्तात् पुरस्तात् स्वयंत्राणि कुर्वन् करीन्द्रे स्थितो वाजिवाहैरुपेतः ॥
असंख्यातगोलैर्ववर्षातिमात्रं सपत्नाः सुरापा अपि प्राद्रवंस्ते ॥ ३५ ॥
प्रलब्धे जये तत्क्षणे कश्चिदेकः सुरापो निवृत्तोऽतिरोषेण युक्तः ॥
सदा बंदुकोत्थेन गोलीद्वयेन विभेदाभयस्तत्र विश्वासवक्षः ॥ ३६ ॥

विश्वासो विगतश्वासः पपात धरणीतले ॥
यथार्थं नाम कुर्वाणः सर्वश्वासमपाहरन् ॥ ३७ ॥
अविश्वासाः सविश्वासा अपि विश्वासवर्जिताः ॥
व्यदृश्यंत भटाः सर्वे चित्रक्लृप्तभटा इव ॥ ३८ ॥
भानुस्तद्वृत्तमाकर्ण्य कर्णतुल्यो मुमोह सः ॥
तद्दुःखवर्णने शक्तो न ब्रह्मा का कथा मम ॥ ३९ ॥

तथेति । वारबाणं कवचं । कंचुको वारबाणोऽस्त्रीत्यमरः । वस्तेसौ वसानः परिदधत् । वस् आच्छादने अस्माल्लट् शानच् । करे खड्ग एव रत्नं खड्गरत्नं दधानः धारयन् नः अद्यैव जयः स्यादिति व्याहरन् उच्चारयन् सः भानुनामाऽपि भुक्त्वा वारणे गजे । वारणं प्रतिषेधे स्यात् वारणश्च मतंगज इति विश्वः । स्थितः सन् ययौ ॥ ३४ ॥

पुरस्तादिति । करींद्रे गजोत्तमे स्थितः । वाजिवाहैः अश्वसादिभिः उपेतः सः भानुः स्वयंत्राणि पुरस्तात् पुरस्तात् कुर्वन् सन् असंख्यातगोलैः अतिमात्रं निर्भरं ववर्ष । सुरापाः सपत्ना अपि ते यवनाः प्राद्रवन् ॥ ३५ ॥

प्रलब्धेति । सदाशिवेनेति शेषः। जये प्रलब्धे तत्क्षणे निवृत्तः अतिरोषेण युक्तः कश्चित् अप्रसिद्धः एकः असहायः ॥ ३६ ॥

विश्वास इति । विगतः श्वासो प्राणो यस्येति विश्वासः । अतः नाम विश्वास इत्यभिधां यथार्थां कुर्वाणः पूर्वं संज्ञाशब्द आसीदधुना योगरूढः संपन्न इति भावः। सर्वेषां स्वकीयानां श्वासं प्राणं अपाहरन् विश्वासः विश्वासरायः । धरणीतले गजोपरिगतवाहनमध्ये इत्यर्थः पपात ॥ ३७ ॥

अविश्वासा इति । नास्ति विश्वासो विश्वासरायो येषु ते अविश्वासाः विश्वासरायरहिताः इत्यर्थः भटाः वीराः विश्वासेन प्राणेन सहिताः अपि सप्राणाः अपि । चित्रक्लृप्तभटाः इव विश्वासवर्जिताः प्राणरहिताः व्यदृश्यंत जनैः इति शेषः ॥ ३८ ॥

भानुरिति । सः भानुः सदाशिवः तस्य विश्वासराजस्य वृत्तं आकर्ण्य कर्णतुल्योऽपि

---

१५ " हृष्टो " इति वा पाठः १६ " प्रतप्तापसेनाशु " इति वा पाठः १७ " द्वास्य " इति वा पाठः

श्रुत्वा विश्वासवृत्तं तद्विशिखास्ते पराजिताः ॥
अपि सर्वे सुसंरब्धा आययुर्भावुवाहिनीं ॥ ४० ॥
सदाशिवो वाजिवाहो वीरवर्यः कृपाणवान् ॥
इति संचिंतयंश्चित्ते सपत्नाग्निमुपाविशत् ॥ ४१ ॥
अबालबुद्धिर्बालोऽयं बलवान् बलसंयुतः ॥
अभिमन्युरिव श्रीमान् दिवं यात इतो यतः ॥ ४२ ॥
नाना च गोपिका चापि तद्वृत्तश्रवणक्षणे ॥
दिवं गमिष्यतस्तस्मान्ममापि गमनं वरं ॥ ४३ ॥
रंभोरुर्मंजुघोषा भुवि किल महिला सैव योषा सुकेशी ।
रंभाद्यास्तत्र भिन्ना द्विरदगजगतिर्वार्धिदंतेन तत्र ॥
भीतिस्तत्रागदात्स्यादिह तु गदभवा मर्त्यपत्वं नृलोके ।
तत्रामर्त्याधिपत्वं सकलमधिकमित्यत्र युक्तं प्रयाणं ॥ ४४ ॥

अतिधीरोऽपि मुमोह वैचित्यं प्राप्तवान् । तस्य सदाशिवस्य यद्दुःखं । तस्य दुःखस्य वर्णने ब्रह्मा चतुर्मुखोऽपाति भावः । न शक्तः मम का कथेति कवेरुक्तिः ॥ ३९ ॥

श्रुत्वेति । पराजिता अपि ते सर्वे विशिखाः यवनाः विश्वासस्य विश्वासरायस्य वृत्तं श्रुत्वा सुतरां संरब्धाः आवेशवंतः संतः भावुवाहिनीं सदाशिवसेनां आययुः ॥ ४० ॥

सदाशिव इति । इति वक्ष्यमाणप्रकारकं अन्यत् सुगमं ॥ ४१ ॥

अबालबुद्धिरिति । यतः दिवं यातस्तस्मात् नाना च गोपिका च दिवं गमिष्यतः ममापि गमनं वरमिति द्वयोरन्वयः ॥ ४२ ॥ ४३ ॥

भूलोकापेक्षया स्वर्गे अधिकं सुखमित्याह रंभोरुरिति । भुवि या मम महिला पत्नी पार्वतीनाम्नी । महिला मानिनी पत्नीति धनंजयः । सैव रंभे इव ऊरू जंघे यस्याः सा रंभोरुः । उरूत्तरपदादौपम्ये इति ऊङ् प्रत्ययः । रंभोरुनाम्नी काचित् अप्सरा रंभासदृशोरुत्वादस्यामेव महिलायां रंभोर्वारोपः । एवमग्रेऽपि । सैव योषा पत्नी मंजुघोषा मंजुघोषानाम्नी अप्सरा । सैव योषा सुकेशी सुकेशीनाम्नी । तत्र स्वर्गे रंभाद्याः रंभोर्वाद्याः भिन्नाः युद्धे त्यक्तदेशं मां ताः सर्वा अपि पृथक् पृथक् आलिंगिष्यंतीति भावः । विनाऽपि प्रत्ययं पूर्वोत्तरपदयोर्लोपो वक्तव्य इति । भामासत्येतिवत् रंभाशब्दप्रयोगः । अत्र भुवि द्वौ रदौ यस्येति द्विरदः द्विदंतो यः गजः तेन गतिः । गमनं तत्र स्वर्गे वार्धिदंतेन चतुर्दंतेन ऐरावतकुलोत्पन्नेन गतिः । तत्र स्वर्गे अगान् पर्वतान् द्यतीति अगदः इंद्रः तस्मात् भीतिः तस्य स्वर्गाधिपत्वात् इह तु गदभवा रोगजन्या भीतिः नृलोके मर्त्यपत्वं तत्र अमर्त्यानामधिपत्वं इति नृलोकापेक्षया सकलं स्वर्गे अधिकं इति हेतोः अत्र द्विव्यदृष्टित्वात् पुरोदृश्यमाने

१८ "भुक्" भुत्" इति वा पाठः.

त्रिक्रमं युधि विधाय त्रिक्रमे त्रिक्रमेण सदृशः स त्रिक्रमे ॥
चिंतयन् हृदि सदा त्रिविक्रमं स्वः प्रयातुममुना प्रचक्रमे ॥ ४५ ॥
श्रीमान् वीराग्रयायी तुरगवरगतः खड्गपाणिः स कृंतन् ।
शत्रून् यातोऽरिसेनां जलधिमिव महामीननाथः स धीरः ॥
सार्धं देहेन यातो दिवमयमिति यत्तद्वचस्तथ्यमेव ।
नो चेद्देहो रणस्थैस्तदनुगतभटैः किं न दृष्टस्तदानीं ॥ ४६ ॥
यातौ दृष्ट्वा दिवं तौ नरवरमहितौ सैन्यपालौ सपत्नाः ।
सर्वे हृष्टा नदंतः समरभुवि तदा भावुसेनासु पेतुः ॥
गोषु व्याघ्रा इवैते गजतुरगगता मर्दयंतोऽङ्घ्रिपातैः ।
खड्गैः शूलैश्च भल्लैः शितविशिखचयैर्जघ्नुरेकेऽतितुष्टाः ॥ ४७ ॥
यावान् गर्तः स पूर्णो निहतभटचयैर्वारणैर्वाजिसंघै- ।
र्यंत्रैर्गोभिः क्रमेलैरपि शकटगणैः सर्वतो भूसमोऽभूत् ॥

स्वर्गे प्रयाणं युक्तं । घृताची मेनका रंभा उर्वशी च तिलोत्तमा । सुकेशी मंजुघोषाद्याः कथ्यंतेऽप्सरसो बुधैः । इत्यमरादाद्यपदाद्भेदोर्वा संग्रहः ॥४४ ॥

त्रिक्रममिति । त्रिक्रमे पराक्रमे विषये त्रिक्रमेण राज्ञा सदृशः तुल्यः सः भावुः त्रिक्रमे संवत्सरे युधि युद्धे त्रिक्रमं पराक्रमं विधाय कृत्वा सदा सर्वकालं हृदि हृदये त्रिविक्रमं वामनं चिंतयन् सन् अमुना देहेन स्वः स्वर्गं गंतुं प्रचक्रमे उद्युक्तवान् ॥ ४५ ॥

श्रीमानिति । श्रीमान् । वीराणां अग्रे यातीति वीराग्रयायी । तुरगवरे अश्वश्रेष्ठे गतः विद्यमानः खड्गपाणिः धीरः सः भावुः शत्रून् कृंतन् छिंदन् सन् मीननाथः महामत्स्यः जलधिमिव अरिसेनां यातः गतः । अयं देहेन सार्धं दिवं यातः इति यत् लोकानां वचः तत् तथ्यमेव सत्यमेव । नो चेत् रणस्थैः तदनुगतभटैः तदानीं तस्मिन् काले किं न दृष्टः ॥ ४६ ॥

याताविति । नरवरमहितौ राजपूजितौ सैन्यपालौ सेनारक्षकौ तौ पितापुत्रौ दिवं स्वर्गं यातौ दृष्ट्वा हृष्टाः समरभुवि नदंतः गर्जंतः गजतुरगगताः ते एते सर्वे सपत्नाः शत्रवः यवनाः अंघ्रिपातैः चरणप्रक्षेपैः मर्दयंतः संतः भावुसेनासु भावुसैन्येषु गोषु व्याघ्रा इव पेतुः । एके अतितुष्टाः सन्तः खड्गैः शूलैः भल्लैः शितविशिखचयैः तीक्ष्णबाणसंघैः जघ्नुः ॥ ४७ ॥

यावान् यावत्प्रमाणः गर्तः सः निहतैः भटचयैः वारणैः गजैः वाजिसंघैः अश्वसमूहैः यंत्रैः तोफाभिः गोभिः वृषभैः । गौः स्वर्गे वृषभेरश्मौ इति विश्वः । क्रमेलैः

---

१९ "स्वर्गमाप सपुतः" इति वा पाठः. २० "इत्थ संचित्य भानुसुरग" इति वा पाठः. २१ "सवस्त्रान्" इति वा पाठः २२ "कृंतन्" इति वा पाठः २३ "मत्स्यवर्यः" इति वा पाठः २४ "समिवृत्ता निपेतुः" इति वा पाठः

मन्ये विप्रव्रजेशो निजगमनमितः पूर्वमेवाखिलेभ्यः ।
तस्मात् खातं विधेयं मृतजनभरणे तत्तदासौ स[२५] चक्रे ॥ ४८ ॥
लेखाधीशाधिनाथः शमदमविमलः सत्यवाग् दीननाथो ।
नानानाम्ना प्रसिद्धो भुवि विततयशा भानुरित्याख्यया च ॥
जीवन् वन्येन मार्गे निजवसतिमगात् तच्चरित्रं [२६] विचित्रं ।
वक्ष्याम्यग्रे महीं यः सकलजनहितो बालभूपः शशास ॥ ४९ ॥
नग्नाः केचित् प्रभग्ना मुखधृतयवसाः पाहि पाहीति वाचं ।
वारं वारं ब्रुवाणाः करकलितघटीखर्परा निर्ययुर्वै ॥
ये वा दंतींद्रसंस्थाः सकलजनहिताश्चामरैर्वीज्यमानाः ।
स्वस्माद्देशात् प्रयातास्त इह झटिति हा पादचाराः प्रजग्मुः ॥ ५० ॥
ये बाला ये च वृद्धा अपि युवतिजनास्तेवशिष्टा दिशायां ।
याम्यायां येर्थकामाद्धनददिशमितास्ते धनेशस्य गेहं ॥
याता मल्लारिसेनापतिसकलचमूयातलोकं विनान्ये ।
वीरास्ते भूमिमेतां पुनरपि न ययुस्तत्सुखासक्तचित्ताः ॥ ५१ ॥
मणिद्रव्यं हृतं चौरैर्हट्टमध्याद्बलाधिकैः ॥
हैमीनां राजतीनां च मुद्राणां का कथा परं ॥ ५२ ॥

उष्ट्रैः शकटगणैरपि सर्वतः सर्वप्रदेशे पूर्णः अत एव भूसमः अभूत् । खातविधाने हेतुं उत्प्रेक्षते। विप्रव्रजेशः भावुः अस्मादिति इतः । अस्मात् सैन्यात् अखिलेभ्यः सैनिकेभ्यः पूर्वं निजगमनं स्यात् स्वर्गलोकमिति शेषः । तत्तस्मात् मृतजनमरणे खातं विधेयं अतः सः असौ भावुः तत् खातं पूर्वमेव चक्रे ॥ ४८ ॥

लेखेति । लेखाधीशानां अधिनाथः स्वामी नाना इति नाम्ना प्रसिद्धः भानुरित्युपनाम्ना च प्रसिद्धः । वन्येन फलमूलादिना जीवन् सन् निजवसतिं पुण्यनगरं अगात् । यः बालः लघीयान् भूपः स्वामी माधवाख्यः यस्य सः अतः महीं शशास ४९

नग्ना इति । यवसं तृणं । यवसं तृणमर्जुनमित्यमरः । अन्यत् स्पष्टं ॥ ५० ॥

य इति । ये बालाः ये वृद्धाः युवतिजना अपि ते याम्यायां दिशायां अवशिष्टाः । ये अर्थरूपात् कामात् धनहेतोरित्यर्थः धनददिशं याताः । मल्लारिसेनापतिसकलचमूयातलोकं विना अन्ये ते धनेशस्य गेहं याताः । अंते मतिः सा गतिः इति वचनात् कुबेरगृहं याताः तत्सुखासक्तचित्तास्ते पुनरपि एतां भूमिं न ययुः । मृता इति भावः ॥ ५१ ॥

मणिद्रव्यमिति । अप्रस्तुतप्रशंसालंकारः ॥ ५२ ॥

---

२५ " प्रचक्रे " इति वा पाठः २६ " प्रशस्तं " इति वा पाठः

इति लेखः समायातः पूर्वमेव गृहे गृहे ।
धनिनामष्टमे वारे नवमे च तथा क्वचित् ॥ ५३ ॥
अशुभाशंसिदुःस्वप्नौ गात्रस्पंदनकं तथा ।
नाना च गोपिका चापि विवेदानुदिनं तदा ॥ ५४ ॥
अंतर्गृहे जनाः सर्वे रुरुदुर्दुःखिता भृशं ।
दूता अपि समायाता बल्लाळस्य त्वराकुलाः ॥ ५५ ॥
निशम्य वृत्तं तद्दीना प्रारुदद् गोपिका भृशं ।
उन्मुच्य केशान् हस्ताभ्यां ताडयंती तदा शिरः ॥ ५६ ॥
हा तात नः किमु विहाय दिवं गतोऽसि ।
तत्रत्यसौख्यमतुलं स्वयमेव भुंक्षे ॥
या ते कृपा मयि तथा जनकेऽपि यासीत् ।
सा ते गता क्व बत दर्शय ते मुखेंदुं ॥ ५७ ॥
भ्रातर्यतीव जनकस्य रतिर्यतस्ते तातं च मामपि विहाय गतोसि तेन ।
सार्धं दिवं स सततं परिरक्षतु त्वां क्षुत्तस्तृषोपि सदयः सदयोधुनासौ ॥५८॥
ब्राह्मण्यमेतदपहाय तवार्य पूर्वैः क्षात्रं दुरंतमवलंबितमत्र तत् ।
संग्राममूर्धदहने हि तवावदानं दातुं यथार्जुनसुतः प्रहुतोऽखिलैः सः॥५९
तस्मिन् हुते स भगवान् यदुदेवदेवो दुःस्वप्नशांतिकः षोडशराजवृत्तं ।
सम्यग्निशम्य समशीशमदाशु दुःखं मत्तापवारणविधौ पटुतास्ति कस्य॥६०

इति लेख इति ॥ ५३ ॥ अशुभेति ॥ ५४ ॥ अंतर्गृहे इति ॥ ५५ ॥ निशम्येति ॥ ५६ ॥

हा तातेति । हा इति खेदे । तात बाल । तातस्तु जनके बाले इति मेदिनी ५७

भ्रातरीति । यतः ते जनकस्य भ्रातरि पितृव्ये रतिः आसीत् ततः तातं पितरं मां च विहाय तेन पितृव्येण सार्धं दिवं गतोऽसि सः सततं त्वां क्षुधः इति क्षुत्तः तृषः पिपासायाः सकाशात् परिरक्षतु । अधुना सदयः दयालुः सः तव पितृव्यः सन् अयः दैवः यस्य सः सदयः अस्तीति शेषः । अयः शुभावहो विधिरित्यमरः ५८

ब्राह्मण्यमिति । हे आर्य मान्य । यद्वा । अत्र अस्मिन् लोके तव आर्याश्चते पूर्वे च आर्यपूर्वाः तैः एतत् ब्राह्मण्यं अपहाय त्यक्त्वा दुरंतं क्षात्रं अवलंबितं तत्संग्रामे संग्राममूर्धनि दहने यथा अखिलैः युधिष्ठिरादिभिः सः अर्जुनसुतः अभिमन्युः प्रहुतः । तथा तव अवदानं दातुं अवलंबितं किं इति निश्चयेन ॥ ५९ ॥

तस्मिन्निति । तस्मिन् अभिमन्यौ हुते सति । यदुदेवदेवः श्रीकृष्णः षोडश-

२० " स्वप्न " इति वा पाठः २८ " वाय " इति पा पाठः २९ " दुःस्वप्न-शांति " इति पा पाठः

कीनाश ते हृदयमायसमेव यन्नो ।
वृद्धान् विहाय तनयान् विनयोपपन्नान् ॥
बालान् क्षिणोषि तव नास्ति सुतादि किंस्विद् ।
यन्निर्दयोऽसि बत बालतमांश्च हंसि ॥ ६१ ॥
इंद्रादयः सकलदिक्पतयः प्रपांति ।
लोकांस्त्वमेव खलु मारयसि प्रकामं ॥
नीचोऽधिकार इह तेन कुटुंबपोषः ।
शास्ता तवापि विधिना बलवान् कृतः स्यात् ॥ ६२ ॥

बल्लाळराजमहिषी विललाप चैवं नानाऽपि भावुरयमागत एष सूनुः ।
विश्वास एव समुपागत इत्थमाराद् भ्रांतः समागतमभाषत मानवं सः॥६३
नार्यो नराश्च पशवो रुरुदुः पुरस्थास्तन्नेत्रवारिभवपूरनदी प्रवृत्ता ।
सा पूर्वमेव यदि चेन्नगरे जलौघं दूरादुपानयदयं स कुतः पुरेशः ॥ ६४ ॥

राजानां महाभारते प्रसिद्धानां सम्यक् वृत्तं निशाम्य श्रावयित्वा दुःखं आशु अशीशमत् निवारितवान् । शमेर्णिजंताल्लुङि चङि द्वित्वम् ॥ ६० ॥

अथ यमं द्वाभ्यां निंदति । हे कीनाश यम । कृतांते पुंसि कीनाशः इत्यमरः । ते हृदयं अयसः इदं आयसं एव लोहमयमेव । यत् वृद्धान् नः विहाय बालान् लघून् विनयोपपन्नान् तनयान् क्षिणोसि संहरासि । तव सुतादि नास्ति किंस्वित् । यत् निर्दयः असि । अतिशयेन बाला इति बालतमाः तान् हंसि मारयसि ॥ ६१ ॥

ननु मम जगन्निवासस्य आज्ञाधारकत्वात् तदाज्ञयैव संहरामीत्यत आह इंद्रादय इति । इंद्रादयः सकलदिक्पतयः प्रपांति त्वमेव लोकान् मारयसि । ननु भगवतस्तवैवाज्ञा किंकरोमीत्यत आह । अयं नीचाधिकारः तेन कुटुंबस्य पोषः । न युक्तः इत्यर्थः । विधिना ब्रह्मणा तवाऽपि बलवान् शास्ता कृतः स्यात् ॥ ६२ ॥

बल्लाळेति । एवं उक्तप्रकारेण बल्लाळरायमहिषी विललाप । नानाऽपि बल्लाळोऽपि भ्रांतः सन् आरात् दूरदेशे । आराद्दूरसमीपयोः इत्यमरः । समुपागतं मानवं दृष्ट्वेति शेषः । अयं भावुः आगतः । अयं विश्वासस्सूनुरेव समुपागतः एवं अभाषत ॥ ६३ ॥

नार्य इति । पुरस्थाः नार्यः नराः पशवोऽपि यद्वा पशवः पशुतुल्याः अज्ञा इत्यर्थः रुरुदुः । तन्नेत्रवारिभवपूरनदी प्रवृत्ता । इदानीं नगराद्बहिर्वहति या तस्याः उद्गमस्थानम् । नराः नार्यश्चैताः । अत्र प्रमाणमाह । सा नदी पूर्वमेव रोदनोदकात् पूर्वमेव यदि चेत् तर्हि तन्नगरे तस्मिन् पुरे । सः अयं पुरेशः दूरात् दूरदेशात् जलौघं कुतः उपानयत् ॥ ६४ ॥

---

३० " कथं " इति वा पाठः

किं ब्रूमहे यमदिशि प्रसभं पुरेषु नारीविलोचनजलैर्यमुना असंख्याः ।
तत्केशपाशनिचया इह शैवलानि तत्कंकणौघशकलानि च शर्करास्ताः६५
उन्मत्तवद्धतमतिः स बभूव यर्हि तन्मंत्रिणः सुमतयो जगतीमरक्षन् ।
मल्लारिनामपृतनापतिभीतितस्ते म्लेच्छाधिपाः समशकन्न पुरः प्रयातुं ६६
नानापि सत्वरमथो दिवमेव यातः सद्बंधुदर्शनसुखोद्यतचित्तवृत्तिः ।
तत्रामरीभिरमरो विजहार नित्यं यः पुण्यशील इह तत्र च तुल्य एव॥६७॥

कॅाले पाणिगजर्तुभूमितॆशके ( १६८२ ) संवत्सरे विक्रमे ।
पौषे मासि सिताष्टमीतिथिदिने यानेन दैवेन सः ॥
विश्वासः सुरलोकमेव गतवान् भावुश्च पश्चात् ततो ।
मासैः पंचभिरेकपक्षसहितैर्नानापि यातो दिवं ॥ ६८ ॥

इति श्रीशिवकाव्ये कलिविलासे पुरुषोमत्तपंडितविरचिते चर्तुदशश्चमत्कारः

---

## पंचदशश्चमत्कारः

किञ्चिन्न्यूनसहस्रपञ्चकमिताः संवत्सरा मे गता
नाद्यापीह जना मम प्रियतमान् धर्मान् चरन्ति स्फुटम् ।
इत्थं चेतसि चिन्तयन् कलिनृपः पादेन भूमिं स्पृश-
न्नेकेनैव चचार दुश्चरतपो गङ्गातटे संवसन् ॥
पूर्णे वर्षशते हरिः स भगवान् विप्राढ्यरूपोवद-
च्छीघ्रं ब्रूहि वरं विभो नृपभयाद् धर्मा विलुप्ता मम ।

किमिति । यमदिशि पुरेषु नारीविलोचनजलैः असंख्याः यमुनाः प्रवृत्ताः इति शेषः । कज्जलदिग्धजलोत्पन्नत्वाद्यमुनात्वं । तासां केशनिचयाः इह शैवलानि । तासां कंकणौघशकलानि ताः प्रसिद्धाः शर्कराः सिकताः ॥ ६५ ॥

उन्मत्तवदिति । यर्हि यस्मिन् काले सः नानाख्यः उन्मत्तवत् हतमतिः बभूव तदा सुमतयः तन्मंत्रिणः जगतीं अरक्षन् । ते म्लेच्छाधिपाः मल्लारिनामपृतनापति-भीतितः पुरः प्रयातुं न समशकन् ॥ ६६ ॥

नानेति । सद्‌बंधुदर्शनसुखोद्यतचित्तवृत्तिः नानाऽपि सत्वरं दिवमेव यातः। सः तत्र दिवि अमरः सन् अमरीभिः नित्यं विजहार । यः पुण्यशीलः स इह भुवि तत्र स्वर्गे तुल्य एव ॥ ६७ ॥

काले इति । सः विश्वासः भावुश्च एतद्विशिष्टे काले दिवमेव गतवान् । ततः पश्चा-न्नानाऽपि एकपक्षसहितैः पंचमासैः सार्धपंचमासैः दिवं यातः ॥ ६८ ॥

इति श्रीशिवकाव्यव्याख्यायां प्रकाशिकायां स्वयंकृतायां चतुर्दशश्चमत्कारः ॥ १४

---

११ " शाके " इति वा पाठः १२ " परिमिते " इति वा पाठः.

के धर्मास्तत्र सन्ति तद्वद कले धर्मा असंख्या मतान् ।
कांश्चिच्च प्रवदामि विस्तरभयाद् भीतो हरे त्वं शृणु ॥
हित्वा स्वां युवतीं सतीं परवधूप्रीतिश्च पित्रोः परि-
त्यागो वञ्चनया धनादिहरणं नित्यं मृषा भाषणम्
वेदस्यापि च विक्रयः किमपरं शूद्रादिसंयाजनं
भर्तुश्चापि वधः स्त्रियाः स्वपुरुषात् पत्न्याश्च घातस्तथा ॥
गर्भिण्यो द्विजयोषितो गतधवाः शूद्रादिरत्या परं
वृद्धे भर्तरि शूद्रनिर्मितसुता नार्यः सुतादौ रताः ।
जारे यत्र रते तदिन्द्रियसमुच्छेदः क्रुधा वृद्धता
जाता चेत् स्वस्नुषासुतादिषु निजोन्मार्गस्य बोधः स्फुटम् ॥
आ बाल्यात् परिपालितोऽन्नवसनैर्हत्वा निजं स्वामिनं
हृत्वा तद्धनभूषणादि सकलं पत्न्यां रमेतास्य चेत् ।
भृत्यः पापमतिर्विपन्नमपि तत्स्वामी त्यजेत् तत्क्षणे
गां हीनां पयसा कदापि न नरो वैश्यधर्म्यतः पालयेत् ॥
कन्याया रमणाद्धृतिर्दृढतनोः पुंसः सुरापा द्विजाः
संन्यासी कुलटारतः पुनरसौ गार्हस्थ्यमालम्बते ।
या पूर्वं परिमुण्डिता गतधवा सा केशपाशाकुला
काश्चित् कृत्रिमकेशपाशनिचयं धृत्वा रमन्ते निशि ॥
एका काकिणिकापि चेदपहृता प्राणग्रहस्तत्क्षणे
हीना अन्नमुखैः पिशाचसदृशा भ्राम्यन्ति भूमौ नराः ।
स्नानं भोजनहेतुकं किमपरं मौञ्जी विवाहार्थिनो
स्यादित्यादि यदा हरे प्रवितते तन्मद्युगं सद् भवेत् ॥

चक्रं यथा भ्रमति कुम्भकृतस्तथैव
कालाख्यचक्रमिदमस्य युगानि मध्ये ।
पर्वाणि मद्युगमिदं शतधापयातं
विप्रा नराधिपतयो न कदापि दृष्टाः ॥
म्लेच्छा नराधिपतयो भुवि चेद् भवेयुः
सिध्येन्मदीयमनसि स्थितमाशु सर्वम् ।
श्रुत्वा हरिः स भगवानवदत् तदानी-
मत्रास्ति युक्तिरधुना प्रवदामि गूढा ॥

बल्लाळस्य सुतो बालो माधवाख्योऽस्ति भूतले ।
मन्त्रिणस्तस्य धीमन्तो विश तेषां मनः पुरा ॥

ततस्त्वं राघवस्यापि कले विश मनः स्वयम् ।
मनोगतं ते निखिलं संसत्स्यति तदाचिरात् ॥
अथारद् वासुदेवं यस्तिस्रभिर्म्लेच्छकोटिभिः ।
स कालयवनो नाम तद्वंश्या म्लेच्छपालकाः ॥
अब्धिवासा बुद्धिमन्तो महाकाया महाबलाः ।
इङ्ग्रजाख्यां गता वीरा गौगङ्गा यन्नयोधिनः ॥
राघवस्तान् शूरतरानानयेदविचारयन् ।
तस्य पुत्राद् भूमिमिमां हृत्वा पास्यन्ति तेऽखिलाम् ॥
परस्परं वर्धमाने विरोधे तव वाञ्छितम् ।
सेत्स्यत्यचिरतः सर्वं गुह्यमेतन्मयोदितम् ॥
माधवाख्ये दिवं याते द्वितीये माधवे तथा ।
पञ्चविंशतिवर्षेभ्य ऊर्ध्वं सिध्येत् तवेप्सितम् ॥
श्रुत्वा कलिस्तथा चक्रे हरिणा यन्निवेदितम् ।
विरोधः समभूत् तेषां परस्परमनर्गलः ॥ *
शिखाहीनशिखास्त्वं प्राग्गादिग्भवपुरस्थितः ॥
अपालयदिमां भूमिं शतं वर्षाण्यखंडितं ॥ १ ॥
शतद्वयमितास्तस्य भार्या आसन् सुमध्यमाः ॥
बलवान् नीतिमान् धीमान् प्रजा यः समपालयत् ॥ २ ॥
सहायाः संपदः सेना युद्धं चास्य महत्तरं ॥
वक्ष्यतेऽग्रे विस्तरतः संक्षिप्तं वर्ण्यतेऽधुना ॥ ३ ॥
केनचित् कारणेनासौ ससेनो यवनाधिपः ॥
पुण्यां पुरीं समागत्य दग्ध्वा गोदावरीमगान् ॥ ४ ॥
दिवं यातौ भ्रातरौ मे बालोयं मंत्रिणां वशे ॥
जन्मप्रभृति या कीर्तिः सापयाताधुना मम ॥ ५ ॥
इति संचिंत्य सहसा सेनया सह राघवः ॥
सिंहवद्विनदन् यातो राक्षसे भुवने तदा ॥ ६ ॥

श्रीगणेशाय नमः । अथ बल्लाळरायस्य मध्यमस्य माधवाख्यस्य सूनोश्चरितं वर्णयितुं तावत् प्रथमं तद्रिपोर्यवनाधिपतेः प्राचीभवस्य चरितं संक्षेपतो वर्णयति शिखाहीनेति ॥ १ ॥

भ्रातरौ बल्लाळसदाशिवौ । बालः माधवः ॥ ५ ॥

---

* केषुचित् पुस्तकेष्विमानि पद्यान्यधिकानि वर्तन्ते.

१ "यवनानामधिपतिः पूर्वस्यां दिशि संस्थितः" इति वा पाठः.

यवनेशो निजामात्यं विठ्ठलं सेनयान्वितं ॥
स्थापयित्वारिपुरतो गंगामुत्तीर्य तस्थिवान् ॥ ७ ॥
राघवो विठ्ठलाख्यश्च युयुधाते परस्परं ॥
माधवोपि सहामात्यः ससेनः समुपागतः ॥ ८ ॥
आसारैः पर्वतं मेघा यथा वर्षंति सर्वतः ॥
राघवं विशिखैस्तीक्ष्णैर्ववृषुर्विशिखास्तथा ॥ ९ ॥
कुंतायुधैर्भल्लहस्तैर्धानुष्कैरर्दिते भृशं ॥
नीयमाने गजे वीरे राघवाधिष्ठिते रणात् ॥ १० ॥
श्येनः श्येनैरिव वृतो वयांसीव स माधवः ॥
गत्वा वीरैर्वाजिवाहैर्यवनानवधीद्बली ॥ ११ ॥
ममज्जुर्यवना भीता गंगायां बहुशस्तदा ॥
पलायनपराः केचिच्छिछिद्रिरे रणमूर्धनि ॥ १२ ॥
हत्वा विठ्ठलनामानमाततायिनमाहवे ॥
विप्र तच्छिर उत्कृत्य कुंते संस्थाप्य निर्गतः ॥ १३ ॥
राघवेण वृतो वीरो जयशब्दपुरःसरः ॥
पुण्यं पुरं समागत्य पालयामास भूतलं ॥ १४ ॥
तस्मिन् प्रशासति भुवं दक्षिणस्यां दिशि *प्रभौ ॥
हैदरो नाम यवनो महानासीद्रिपुः परं ॥ १५ ॥
तं जित्वा यवनाधीशं माधवः प्रतिवत्सरं ॥
कोटिसंख्याः स्वर्णमुद्रा जग्राह करमोजसा ॥ १६ ॥
यवनो दक्षिणो वार्धिवेलामुल्लंघ्य यास्यति ॥
इति मत्वा द्विजाधीशमागस्त्यं समकल्पयत् ॥ १७ ॥
पटवर्धननामानं गोविंदमुरुविक्रमं ॥
महत्या सेनया तत्र स्थापयित्वावसत् सुखी ॥ १८ ॥

आसारैरिति । धारासंपात आसारः इत्यमरः ॥ ९ ॥

श्येन इति । श्येनैः वृतः श्येनः वयांसीवेत्यन्वयः ॥ ११ ॥ आततायिनमिति । आततायिनं आयांतं हन्यादेवाविचारयन् इति स्मरणादिति भावः ॥ १३ ॥

इति श्रीशिवकाव्ये कलिविलासे पुरुषोत्तमपंडितविरचिते पंचदशश्चमत्कारः ॥ १५ ॥

---

२ "ससेनं विठ्ठलाभिधं" इति वा पाठः ३ " सहामात्यैः " इति वा पाठः ४ " भूतले " इति वा पाठः ५ " रिपुरासीद् बलाधिकः " इति वा पाठः ६ " स्तदा " इति वा पाठः * "स्थितः" इति वा पाठः. ७ " रौप्य " इति वा पाठः. ८ " युक्तः " इति वा पाठः. ९ " सुखं " इति वा पाठः.

यशःपटं वर्धयंतः पटवर्धनसंज्ञकाः ।
सर्वेऽपि ते वीरवराः सर्वे विप्रसुरद्रुमाः ॥ १९ ॥
ब्राह्मं क्षात्रं द्वयमपि रक्षंतः शीलसंयुताः ।
औरसं तनयं तात इव पांति प्रजा इमे ॥ २० ॥
आरभ्यैकादशं वर्षं जन्मतः स महाबलः
माधवोपालयद्भूमिमिंद्रः स्वर्गमिवौजसा ॥ २१ ॥
प्राचीभवेन विशिखेन विधाय सख्यं
साधं निधाय पटवर्धनकाननाच्याम्
सेनापती प्रबलसैन्ययुतावुदीच्यां
पश्चाच्च घोलपमुखान् तरियानसंस्थान् ॥ २२ ॥
निश्चितचेतसि जगत्परिपालकेऽस्मिन्
रोगः करालरभसः समपद्यत द्राक्
तेनातिपीडिततनुः कलियोजितेन
चिंतामवाप तरुणस्तरुणीयुतोऽसौ ॥ २३ ॥
नारायणोऽयमनुजः किल मंदबुद्धिः ।
संत्यत्र शत्रुनिचया विवरावलोकाः ॥
राज्यं महत्तरमिदं कथमस्य रक्षा ।
स्यादित्थमात्मनि विचिंतयति स्म भूपः ॥ २४ ॥
सखाराम इति ख्यातं मंत्रिवर्यधुरंधरं ।
आहूय वाक्यमवदन्माधवो माधवांशभाक् ॥ २५ ॥
नारायणो बालबुद्धिः शत्रवः प्रबला इमे ॥
तस्मादमुं च राज्यं च रक्ष यत्नेन बुद्धिमन् ॥ २६ ॥
इत्युक्त्वा देहमुत्सृज्य ययौ नाकमगाधधीः ।
तत्पत्न्यपि रमानाम्नी सह तेन दिवं ययौ ॥ २७ ॥
वर्षाणि द्वादश भुवं पालयामास लीलया ॥
माधवो माधवस्यांशो मानयन् सततं जनं ॥ २८ ॥
अब्धिनंदरसभूमिसंमिते ( १६९४ ) शालिवाहनशकेऽथ नंदने
कार्तिके सुरविमानसंस्थितः स्त्रीयुतो दिवमगात् स माधवः ॥ २९ ॥

इति श्रीशिवकाव्ये कलिविलासे पुरुषोत्तमपंडितविरचिते पंचदशश्चमत्कारः ॥

---

१० " वीरवीराः " इति वा पाठः ११ " इमाः " इति वा पाठः १२ " मैत्रीं " इति वा पाठः

## षोडशश्चमत्कारः

सिद्धाभिधः कश्चन सिद्धवर्यः सिद्धिप्रदं सिद्धिविनायकाख्यं ।
देवं समीजे जलधेः प्रतीच्यां तटे दिशि प्राणनिरोधपूर्वं ॥ १ ॥
वन्यैः फलैः पुष्पचयैश्च धान्यैर्धूपैर्नमैश्च तथैव दीपैः
प्रपूजयामास दिने दिनेस्य पयस्विनी कापि च गृष्टिरासीत् ॥ २ ॥
तद्रक्षणार्थं विदधे स भृत्यान् व्याघ्रादितश्चापशरासिपाणीन् ॥
समर्चनानन्तरमाशु ते तामचारयन् बालतृणे वने च* ॥
गोपालबालोद्धवकालसंज्ञास्त भ्रातरो नित्यमपालयंस्तां ।
कदाचिदेकोभ्यपतत् तरस्वी व्याघ्रो गवि प्राणसुतर्पणेच्छुः ॥ ३ ॥
तत्कालमेते युगपद्धनूंषि व्याकृष्य बाणान् मुमुचुः परत्र ।
विद्धं त्रिभिर्व्याघ्रकलेवरं तत् तुर्यस्तु धेनोरुदरं विभेद ॥ ४ ॥
व्याघ्रो व्यसुर्भूमितले पपात गौः सासुरासीद्घटिकाद्वयं सा ।
सिद्धो निशम्येदमतीव रोषादुपाविशत् तद्गहनं क्षणेन ॥ ५ ॥
गौस्तन्मुखं वीक्ष्य जलाकुलाक्षी मुमोच देहं स मुमोह सिद्धः ।
कामानुजेनातिनिपीडितात्मा विघूर्णदृग् भ्रांतमतिर्मनस्वी ॥ ६ ॥
धेनुर्हता येन स कालनामा प्रगृह्य तस्यासिमयं सरोषः ॥
आकृष्य पादौ विनिपात्य भूमौ भित्वोदरं तं निजघान कालं ॥७॥
अनिच्छया यन्निहता मयेयं त्वया तु बुद्ध्या निहतोस्म्यहं तत् ।
उत्पत्य वीरस्य गृहे पुनस्त्वां हंतास्म्यहं सोदरतासहायः ॥ ८ ॥
उक्त्वैवमार्तो विससर्ज देहं सिद्धः स खिन्नो मनसीदमूचे ।
विधिर्बलीयान् पुरुषप्रयत्नादिदं मतं सत्प्रबलं न चान्यत् ॥ ९ ॥
जितेंद्रियोसौ पुनरेव भेजे देवं गजास्यं बहुकालमीशं ।
देवः प्रसन्नो वरदोऽभ्युवाच हे सिद्ध सिद्धोऽसि वरं वृणीष्व॥१०
न कामयेऽन्यं वरमीश मुक्तेस्त्वद्दर्शनं मुक्तिफलं हि यस्मात् ।
स्वर्गादिकं सर्वमिदं विनाशि भूलोकराज्यस्य तु का कथात्र॥११॥
द्वितीयजन्मन्यमराधिपं मां प्रयास्यासि प्रेष्ठजनुः पुनस्त्वम् ॥
लब्ध्वा रुषा यत् कृतमत्र जन्मन्यदो विनिस्तीर्य विमुक्तिभाक् स्याः १२

अथ माधवरायस्य अनपत्यत्वात् तदनुजस्य नारायणस्य चरितं विवक्षुः प्रथमं तत्प्राग्जन्मकथामवतारयति सिद्धाभिध इति । शेषं स्पष्टं ॥ १ ॥

---

१ "चापि" इति वा पाठः २ "प्सुः" इति वा पाठः. * एकस्मिन् पुस्तक इदमधिकं पद्य.

अंशेन पुत्रत्वमुपेत्य देवो नारायणस्तेपरजन्मनीह
संरक्षिता लोकमिमं दयालुः पितेव पुत्रं जनयन् यशस्ते ॥ १३॥
जायोदरं विश्वपतौ प्रविष्टे त्वं तावदेतान् चतुरः स्वभृत्यान् ।
हेतून् विधायात्र निधाय देहं यातासि मां सत्वरमेव सिद्ध ॥१४॥
उक्त्वैवमीशो भगवान् गजास्यस्तिरोदधेऽसावपि तं प्रणम्य ।
कालेन देहं विनिधाय भूमौ बल्लाळपन्त्यां पुनरेव जातः ॥ १५ ॥
नारायणाख्यां प्रगतः स एव यः कालनामा स तु खड्गसिंहः
यो वालनामा सुमगादिसिंहो गोपालनामा तु तुळाजिनामा ॥१६॥
य उद्धवोसौ निजदैवयोगान्म्लेच्छत्वमागत्य पुनश्च भृत्यः
बभूव तस्यैव सदा प्रमत्तो विश्रामनामा विशिखाधिराजः ॥१७॥
गौरेव गौः सा पुनरेव जज्ञे नारायणस्यैव गृहे सुरूपा ।
दिने दिने तामतिभक्तितोसौ प्रपूजयामास सतां वरिष्ठः ॥ १८ ॥
याते दिवं माधवनाम्नि बंधौ जायोदरं विष्णुमपि प्रविष्टं ।
मत्वा विरक्तो नृपराज्यरक्षादक्षोपि यातः सुरवर्यलोकं ॥ १९ ॥
बाणनंदरसभूमिते (१६९५) शके भाद्रमासि सितपक्षजे तिथौ।
कामदेवदिविजेश्वरे ययौ सर्वसिद्धमहितोऽमरेंद्रतां ॥ २० ॥
संवत्सरे तं विजये ग्रहेशे मध्यान्हगे भुक्तमथो व्रजंतं ।
शय्यागृहं जघ्नुरमी समेता नारायणं वैरमनुस्मरंतः ॥ २१ ॥

प्रासादवर्यमसुरैरिव संवृतं तै-
म्र्लेच्छैर्न शेकुरुपयातुममात्यसंघाः ।
वीरस्तदा प्रतिनिधिः स भवानिरायो
वीरैर्विवेश सहितो हतशत्रुसंघः ॥ २२ ॥

निर्हृत्य तत्कुणपमाशु विधाय कृत्यं तत्रोचितं तदबलामथ गर्भिणीं ते।
ज्ञात्वा पुरंदरगिरौ विनिधाय गंगानाम्ना स्थिता गिरिपुरः सचिवाः समेताः

पत्राणि गर्भगतमाधवरायनाम्ना ।
संप्रेष्य चिन्हिततराण्यखिलान्यकुर्वन् ॥
कार्याणि लोकनिचयस्य सदाप्रमत्ता- ।
स्तन्मंत्रिणोऽस्य सुकृतेन विबोध्यमानाः ॥ २४ ॥

बाणेति । कामदेवः दिविजेश्वरो देवता यस्य तस्मिन् तिथौ त्रयोदश्यामित्यर्थः । शेषं स्पष्टं ॥ २० ॥

संवत्सरे इति । नारायस्य स्वर्गगमनं सविस्तरमाह । विजये विजयनाम्नि संवत्सरे । ग्रहेशे सूर्ये मध्यान्हगे सति । शेषं स्पष्टम् ॥ २१ ॥

विवर्धमानो जठरांबरांतः स माधवेंदुर्द्विषदंधकारं ।
जहार सद्यः स्वजनोपतापविनाशदक्षः क्षयवीतमूर्तिः ॥ २५ ॥
घनं यथा वातजवस्तमिस्रं सहस्रगुः शीतकरश्च तापं ।
क्षणान्निहंत्येवमयं निजारीन् अजीघनत् स्वप्रतिमप्रभावः ॥२६॥
बल्लाळो नाम मंत्री शमदमविमलो नीतिमान् दीनपालो
नानानाम्ना प्रसिद्धो जगति जनहितः सत्यवाग् दातृवर्यः ।
कारागाराहितारी रणविजितरिपुव्रातरूढ्यातिमानान्
वीरान् संमानयन् सन् क्षितिवलयमलं लीलयापालयत् सः ॥२७॥
इति श्रीशिवकाव्ये पुरुषोत्तमपंडितविरचिते षोडशश्चमत्कारः

---

## अथ सप्तदशश्चमत्कारः

अधिकमाधवमासि पुरन्दरे गिरिवरे जयनाम्नि च वत्सरे ॥
धवलपक्षभवे दिनकृत्तिथावभिजिति प्रबभूव स माधवः ॥ १ ॥
गुणाधिको माधवतो यतोऽयं जातस्तथा माधवमासि पूर्वे[1] ।
ततोऽधिकं माधवमाहुरार्यास्तमंशतश्चाप्यथ माधवस्य ॥ २ ॥
नारायणं संस्मरतां नराणां यदश्रुपूरो नितरामुवाह ।
विहाय तान् तद्रिपुलोचनानि समाससादापभयः स पूरः[2] ॥ ३ ॥
शचीप्रयुक्ताप्सरसां समूहैर्न्यधायि यद्वार्यवगाहहेतु ।

श्रीगणेशायनमः । अथ माधवरायस्य जन्म तच्चरितं चैकेन चमत्कारेणाह । सः माधवः पुरंदरे गिरिवरे जयनाम्नि वत्सरे अधिको यो माधवः वैशाखः मलमासे इत्यर्थः धवलपक्षभवे दिनकृतः रवेः तिथौ सप्तम्यां अभिजिति मुहूर्ते मध्याम्हे प्रबभूव जज्ञे ॥ १ ॥

तस्य अधिकमाधवसंज्ञायां हेतुमाह गुणाधिक इति । अयं माधवः यतः माधवतः माधवनाम्ना पितृव्यात् गुणैः अधिकः । तथा पूर्वे प्रथमे माधवमासि वैशाखे मासे जातः माधवस्य विष्णोः अंशतश्च जातः अतः आर्याः पूज्यास्तं अधिकं माधवमाहुः । पूर्वे इत्यत्र पूर्वादिभ्यो नवभ्यो वेति विकल्पात् स्मिन्नादेशाभावः ॥ २ ॥

अस्य जन्मनि सर्वेषां आनंदः तच्छत्रूणां दुःखं चाभवदित्याह नारायणमिति । नारायणं अस्य पितरं संस्मरतां नराणां यत् यः अव्ययमिदं । अश्रूणां पूरः नितरां उवाह वहाति स्म । सः पूरः तान् नारायणस्मर्तॄन् विहाय अपभयः सन् तद्रिपुलोचनानि समाससाद प्राप । तद्रिपुभिन्नाः सर्वे ननंदुरित्यर्थः ॥ ३ ॥

अथ जन्मदिनमारभ्य दशमदिनपर्यन्तं नगरयोषितः स्नानार्थं जलं भाण्डेषु

---

१ "पूर्वातथा" इति वा पाठः २ "प्रपूरः" इति वा पाठः

घटेषु गांगं वहति स्म तद्यदद्यापि शैलस्य तटात् प्रवाति ॥ ४ ॥
नेदुर्महाराजसमाश्रितानां गृहे गृहे दुंदुभयस्तदानीम् ।
किमत्र चित्रं व्यनदंश्च दैवाः पुरन्दरस्यापि शिरस्यभीक्ष्णं ॥ ५ ॥
यथैधमाने द्विजदेवदेवे विलीयते सर्वतमःस्वभावः ।
तथैधमाने द्विजदेवदेवे लयं ययौ सर्वतमःस्वभावः ॥ ६ ॥
पुरंदरो नाम गिरिः पुरासीद् डित्थादिवत् केवलसंज्ञयाढ्यः ।
तत्र स्थितोयं हि यदा ददार पुराण्यरीणां स तदा यथार्थः ॥ ७ ॥
जयाभिधे वत्सर एष जातो यतस्ततो वैरिचयं जिगाय ।
तथाभिजिन्नाममुहूर्तजत्वाज्जिगाय गोत्रामभितो द्विजेशः ॥ ८ ॥
अयः कणपयोधिनो जलधिमध्यगेहेश्वरा ।
महाहवपरायणाः शरणयातरक्षापराः ॥

प्रक्षिपंतीति देशाचारस्तत्प्रकारमाह शचीति । शच्या इन्द्राण्या प्रयुक्ताः प्रेरिताः याः अप्सरसस्तासां समूहैरवगाहो बालकस्नानं हेतुर्यस्य तद्यद्गाङ्गं मन्दाकिनीजलं घटेषु कुंभेषु न्यधायि प्रक्षिप्तं तज्जलं वहति स्म । पर्वते प्रवाहरूपेण प्रससारेत्यर्थः। अत्र प्रमाणमाह । यज्जलमद्यापि शैलस्य पुरन्दरस्य तटात् नितम्बात् प्रवाति गच्छति । पुरन्दरगिरेः पुरन्दरस्यानत्वात् पुरन्दरपत्नी शची स्वगृहागतस्यातिथ्यं कर्तव्यमिति अप्सरोद्वारा जलप्रक्षेपं चकारेत्यर्थः ॥ ४ ॥

नेदुरिति । भेरी स्त्री दुंदुभिः पुमान् इत्यमरः । अत्र दुंदुभिध्वनेः किं चित्रं किमाश्चर्यं यतः देवानां इमे दैवाः दुंदुभयः स्वर्गे इत्यर्थः व्यनदन् । पुरंदरस्य इंद्रस्य शिरसि अपि अभीक्ष्णं व्यनदन् इति विरोधः पुरंदरस्य पुरंदरनाम्नः गिरेरिति परिहारः ॥ ५ ॥

यथेति । द्विजदेवदेवे चंद्रे एधमाने सति विवर्धमाने सति सर्वेषां तमसां स्वः असाधारणः भावः सत्ता यथा विलीयते । तथा द्विजदेवदेवे माधवे एधमाने सति सर्वेषां शत्रूणामपि तमःस्वभावः तमोगुणः लयं ययौ ॥ ६ ॥

पुरंदर इति । पुरंदरो नाम गिरिः पुरा माधवाधिष्ठानात् प्राक् डित्थादिवत् डित्थकपित्थादिशब्दवत् केवलसंज्ञया आढ्यः युक्तः आसीत् । यदा अयं माधवः तत्र पुरंदरे स्थितः सन् अरीणां पुराणि ददार तदा सः पुरंदरगिरिः यथार्थः अन्वर्थसंज्ञः आसीत् । मंचाः क्रोशंतीतिवत् लाक्षिणिकी अन्वर्थसंज्ञा आसीदित्यर्थः ॥७॥

जयाभिधे इति । यतः एषः माधवः जयाभिधे वत्सरे जातः उत्पन्नः ततः वैरिचयं जिगाय । ज्योतिःशास्त्रगम्यं संवत्सरफलं यथार्थं कृतवान् इत्यर्थः । तथा द्विजेशः माधवः अभिजिन्मुहूर्तजत्वात् गोत्रां पृथिवीं अभितः आसमंतात् जिगाय । अभिजिन्मुहूर्तफलं यथार्थं कृतवान् इत्यर्थः ॥ ८ ॥

अथास्य बाल्य एव पराक्रमं दर्शयति अयःकणण इत्यादिभिः । अयसः लो-

---

१ "एव" इति वा पाठः

सुरादनपराः सदा सदसि धारिणो मारिणो ।
बलेन बलशालिना सह युता यदा हूणपाः ॥ ९ ॥
असह्यविविधायुधाः समतिलंघ्य सह्याचलं
जलाज्जलपदिग्भवाज्जलधिजात् पुरो निर्ययुः ।
चराचरयुता धरा दरमनाश्चचालाचला
ऽप्यलं लयविधौ यथा प्रथमसंगमा सभ्रमा ॥ १० ॥
निशम्य समनंतरांस्तरिचरांश्चरंतो नराः ।
पुरे सुरपुरोपमे महति पुण्यसंज्ञेऽखिलाः ॥
विहाय तनयान् प्रियानसुसमान् सतीर्योषित-
स्तुरंगवरगा ययुर्दश दिशो भयव्याकुलाः ॥ ११ ॥
सुरम्यमपि तत् पुरं खरबिडालमर्कैर्वृकै-
र्वृतं वनचरैर्मृगैः शशवराहसंघैर्युतम् ।
गृहाणि नकुलाखवः खरनखैः खनित्रैरिव
दिवापि बिभिदुर्द्रुतं बहुलधान्यपूर्णान्यपि ॥ १२ ॥

हस्य यः कणः गुटिका तं पिबतीति अयःकणपः बिंदुखानाम यंत्रं तेन युध्यंत इति अयःकणणयोधिनः । अयःकणपशब्दो महाभारते प्रसिद्धः । जलधिमध्ये यानि गेहानि तेषां ईश्वराः समुद्रांतरवासा इत्यर्थः । महान् यः आहवः संग्रामः सः एव परं आयनं आश्रयो येषां ते महाहवपरायणाः । शरणं याता ये तेषां रक्षा रक्षणं तस्यां पराः आसक्ताः सुरायाः मदिरायाः अदनं भक्षणं तस्मिन् पराः सदा सर्वकालं सन् यः असिः खड्गः तं धारयांति ते धारिणः शूराः इत्यर्थः । अतिशयितः मारो येषां ते मारिणः मत्ता इत्यर्थः बलेन शरीरसंपत्त्या शालंते ते बलशालिनः । बलेन सैन्येन युताः हूणपाः यदा असह्यविविधायुधाः संतः जलपो वरुणः तस्य या दिक् तस्यां भवात् उत्पन्नात् जलधिजात् समुद्रजात् जलात् सह्याचलं समतिलंघ्य क्षणात् निर्गता इत्युत्तरश्लोकेनान्वयः ॥ ९ ॥

असह्येति । तदा चराचरयुता दरं मनसि यस्याः सा दरमनाः प्रथमं संगमो यस्याः सा प्रथमसंगमा अत एव सभ्रमा धरा यथा लयस्य प्रलयस्य विधिर्विधानं तस्मिन् तथा अलं अत्यंतं चचाल चकंपे ॥ १० ॥

निशम्येति । सुरपुरोपमे महति पुरे पुण्यसंज्ञे चरंतः सर्वे अखिलाः भयव्याकुलाः नराः तुरंगवरगाः संतः दश दिशः ययुः । किं कृत्वा असुभिः प्राणैः समान् तुल्यान् तनयान् सतीश्च योषितः विहाय । अत्राधो दिक् पर्वतदर्यः ऊर्ध्वा दिक् पर्वतोपरिप्रदेशाः । तनयान् शेषं स्पष्टं ॥ ११ ॥

१ "क्षणान्निर्गताः" इति वा पाठः

*सरोनगरमागतान् पदचरानरीन् सङ्गतान् ।
निशम्य शमितद्विषद्द्विजपतिः स नानाभिधः ॥
अमात्यमहितो हितो नरपतेर्निजान् सैनिकान् ।
रिपोरभिमुखेऽखिलान् गमयति स्म यंत्रैर्युतान् ॥ १३ ॥
द्विजाधिपपताकिनी सुरनदीव वर्षाभवा ।
तुरङ्गमजला भटोद्भटझषा रथाङ्गभ्रमा ॥
करीन्द्रकमठावृता निहितयन्त्रकूलाकुला ।
ध्वजव्रजतरुश्रिया श्रिततटा रराज श्रिया ॥ १४ ॥
शिरोविधृतकृत्तिजाद्भुतशिरस्त्रभूषाभृतः ।
सुनीलतरकंचुका विविधयन्त्रमालाकुलाः ॥
रणे विजितवैरिणः समपदस्थिताः सूत्रगाः ।
सितप्रभमणिव्रजा इव बभुश्च ते हूणपाः ॥ १५ ॥

सुरम्येति । सुतरां रम्यमपि तत्पुरं खराः गर्दभाः बिडालाः मार्जाराः मर्काः मर्कटाः तैः वृतं व्याप्तं अभूदिति शेषः । तथा वचनचरैः मृगैः शशवराहसंघैश्च युतं अभूत् । मनुष्यसंचाराभावादिति भावः । नकुलाश्च अखवश्च खरैः तीक्ष्णैः नखैः खनित्रैरिव कुद्दालैरिव दिवापि दिनेपि बहुलधान्यपूर्णान्यपि गृहाणि बिभिदुः ॥१२॥

सर इति । शमिताः द्विषंतो येन स शमितद्विषत् अमात्यैः महितः पूजितः । नरपतेः माधवस्य हितः । द्विजानां पतिः स नानाभिधः मंत्री पदचरान् संगतान् मिलितान् सरःसंज्ञकं नगरं सरोनगरं आगतान् अरीन् हूणान् निशम्य निजान् स्वकीयान् यंत्रैः तोफाभिः गमयति ॥ १३ ॥

अथैकेन माधवसेनां वर्णयति द्विजाधिपपताकिनीति । तुरंगमा एव जलानि यस्यां सा तथोक्ता । भटा वीरास्त एव उद्भटझषा यस्यां सा । रथांगानि चक्राणि त एव भ्रमा यस्यां सा । करींद्रा एव कमठास्तैः वृता । निहितानि स्थापितानि यानि यंत्राणि तोफास्तान्येव कूलानि तटानि तैराकुला । ध्वजानां व्रजा एव तरवस्तेषां श्रिया श्रितं तटं यस्याः सा । द्विजाधिपस्य माधवस्य पताकिनी सेना वर्षाभवा सुरनदीव भागीरथीव श्रिया रराज शुशुभे ॥ १४ ॥

अथ हूणाधिपसेनां एकेन आह शिर इति । शिरसि विधृतानि यानि कृत्तिजानि चर्ममयानि अद्भुतानि शिरस्त्राणि ता एव भूषास्ताः बिभ्रति ते तथोक्ताः । अनेनान्यद्भूषणं न धारयंतीति सूचितम् । सुनीलतराः कंचुकाः येषां ते तथोक्ताः । विविधानि यानि यंत्राणि तेषां मालया आकुलाः । रणे विजिताः वैरिणः यैस्ते तथोक्ताः । समयोः समं धृतयोः पदयोः स्थिताः । ते हूणपाः अत एव सूत्रगाः असितभाः

* इदं महाराष्ट्र भाषायां "तळेगांव" इति प्रसिद्ध.

परस्परभयाद्यदा द्विजपहूणपानीकिनी-
गता विजितवैरिणो रणभुवि स्थिरा वीरपाः ॥
न वै युयुधिरे यशोऽशनिनिपातशङ्काकुलाः ।
कुलं मलिनतां भजेदलमिति त्रपाव्याकुलाः ॥ १६ ॥
तदा द्विजपतेर्हितोऽहितनिपातचिन्तातुर
स्तुरङ्गवरगो ययौ गिरिवरं वरं स्वाधिपात् ।
हरेरवतराद्भृशं शममभीप्सुरेकोऽर्भकं
ददर्श शरसंहतिं तृणमयीं दधानं धनुः ॥ १७ ॥
प्रणम्य समन्तरः करयुगं निबध्याब्रवीद्
विभो रिपुरयं रयं प्रसहतेतरां वाजिनाम् ॥
न कोऽपि सहतेऽत्र यं किमधुना विधेयं प्रभो ।
जगाद तमिति स्थिरं वचनदत्तचित्तं द्विजः ॥ १८ ॥
विकृष्य स शरासनं तृणमयं ससर्जाशुगं ।
हतोऽयमरिरुपकस्त्वमुपयाहि सैन्यं निजम् ॥

कृष्णवर्णाः ये मणयः तेषां व्रजा इव बभुः । एतेषां कृष्णोष्णीषत्वात् कृष्णकंचुकत्वात् कृष्णयंत्रवत्वाच्च इयं सेना यमुनेव बभौ इत्यर्थः ॥ १५ ॥

अथ युद्धप्रसक्तौ किंचित् प्रासंगिकं विवक्षुः तावदादौ कस्यचिन्माधवस्य दूतस्य माधवदर्शनं द्वाभ्यामाह परस्परेति । यदा द्विजपहूणपानीकिनीगताः । विजितवैरिणः रणभूवि स्थिराः न तु चंचलाः । ते वीरपाः अयश एव अशनिनिपातः तस्य शंकया व्याकुलाः । अत एव कुलं जलं अत्यंतं मलिनतां व्रजेदिति त्रपया व्याकुलाः संतः न युयुधिरे । परस्परभयात् तूर्ष्णीं स्थिता इत्यर्थः ॥ १६ ॥

तदेति । तदा द्विजपतेः माधवस्य हितः अत एव अहितानां निपातः हननं तस्य शंकया आतुरः हरेः विष्णोः अवतारात् स्वाधिपात् वरं वरदानं तत्कृतशमं शांति युद्धोपशांतिमित्यर्थः भृशं निरंतरं अभीप्सुः । एकः कश्चित् तुरगवरगः सन् गिरिवरं पुरंदरं ययौ । तत्र धनुः तृणमयं तृणमयीं शरसंहतिं दधानं क्रीडार्थमित्यर्थः । अर्भकं बालकं माधवं ददर्श ॥ १७ ॥

प्रणम्येति । विभोः समनंतरः समीपवर्ती द्विजः करयुगं निबध्य प्रणम्य हे प्रभो अत्र अस्मिन् लोके यं कोऽपि वीरः न सहते तं वाजिनां रयं वेगं अयं हूणपः प्रसहतेतरां अधुना अत्र किं विधेयं का प्रतिक्रिया इति वचनदत्तचित्तं अत एव स्थिरं तं माधवमब्रवीत् ॥ १८ ॥

विकृष्येति । सः बालः तृणमयं शरासनं विकृष्य तृणमयं आशुगं ससर्ज लीलयेति

५ " भयं " इति वा पाठः

निशम्य जनपोदितं वचनमित्थमीशादगात् ।
स्वसैन्यमरिनाशनोदितभटं रटद्वीरपम् ॥ १९ ॥
पदातिपतिसैन्यपः स किल निष्ठुरो *विष्ठुरो ।
युधिष्ठिर इवापभीः समवलोक्य सेनां निजाम् ॥
अरातिभिरुपद्रुतां समनुकूलदेवेश्वरै-
निरुद्धतृणधान्यकामपससार धीरो बली ॥ २० ॥
स कालमवलोकयन् समनुकूलमध्यिस्थितां ।
जगाम ममयीं पुरीं परपुरावलिध्वंसनः ॥
कथं करगता मही मम भवेदियं सर्वतः ।
सुरत्ननिचयैर्वृता हृदि विचिन्तयन्नन्वहम् ॥ २१ ॥
गते द्विपति वारिधिस्थलमलंघ्यवीर्ये पुनः ।
पुरीं सुरपुरीमिवावनितलेतुलां मंत्रिराट् ॥
जनार्दनसुतोऽसुतोधिकममुं कुमारं व्यधात् ।
कृतोपनयनं नृपानवनतान् हतान् विद्विषः ॥ २२ ॥
विजेतुमिति ये ययुर्महितसाधवं माधवं ।

भावः । अयं अल्पकः रिपुः हतः त्वं निजं सैन्यं उपयाहि । सः द्विजः जनपेन माधवेन उदितं उक्तं इत्थं वचनं निशम्य अरिनाशने उदिताः उद्युक्ताः भटाः यस्मिंस्तत् रटंतः गर्जंतः वीरपाः यस्मिन् तत् स्वसैन्यं ईशात् सकाशात् अगात् ॥१९॥

पदातिपतीति । पदातिपतेः हूणाधिपतेः सैन्यपः सेनापतिः निष्ठुरः क्रूरः युधिष्ठिरः इव अपभीः धीरः बली सः विष्ठुरः विष्ठुरनामा निरुद्धानि तृणधान्यानि यस्यास्तां निजां सेनां समनुकूलः देवेश्वरो येषां तैः अरातिभिः उपद्रुतां समवलोक्य अपससार ॥ २० ॥

स इति ॥ समनुकूलं कालं विलोकयन् स विष्ठुरः । इयं सुरत्नानां निचयैः सर्वतः वृता मही मम करगता कथं भवेदिति अन्वहं हृदि विचिंतयन् सन् अधिष्ठितां ममयीं पुरीं जगाम ॥ २१ ॥

गते इति । जनार्दनस्य सुतः मंत्रिराट् अलंघ्यवीर्ये द्विपति वारिधिस्थलं ममयीं गते सति अवनितले अतुलां अनुपमां पुरीं पुण्यनगरीं पुनः सुरपुरीमिव व्यधात् । किं च असुतः प्राणेभ्योऽपि अधिकं अमुं कुमारं माधवं कृतमुपनयनं मौंजी यस्य तं कृतोपनयनं व्यधात् । नृपान् उदासीनान् अवनतान् नम्रान् व्यधात् । विद्विषः शत्रून् हतान् व्यधात् ॥ २२ ॥

विजेतुमिति । इति पूर्वोक्तप्रकारेण ये अधमाः शत्रवः साधूनां समूहः साधवं

* अयं पुरुषः आंग्ल भौमभाषायां "stuart" इति प्रसिद्धः.

रमाधवमिवाधमा दितिसुता युताः स्वैर्बलैः ॥
घना इव नभस्वता विदलिता जिता निर्ययु ।
स्तदीयतपसोर्जितैर्जितरिपुव्रजैर्वीरपैः ॥ २३ ॥
पुरी सुरपुरीव सा विरुरुचे नराः पामराः ।
सुरा इव विरेजिरे युवतयः सुरस्त्रीसमाः ॥
नदी सुरनदीव सा हयचया इवैन्द्रा हयाः ।
गजा इव मितंगमा बभुरलं दिगन्तस्थिताः ॥ २४ ॥
मही हि महसोज्ज्वले ज्वलनतेजसि स्वामिनि
प्रभूतधनधान्यका जलधरा धरावर्षिणः
नरा अमरसंश्रितामपि महीमहो धिगाधिगि
त्यनारतमिहोचिरे रुचिरतेजसः सुव्रताः ॥ २५ ॥
यस्मिन् शासति भूतले विधिपुराद्वृद्धिक्षयौ दंपती
यातौ वृद्धिमहर्निशं बुभुजिरे सर्वे पदार्थास्तदा ।
क्षीणोऽसौ क्षय एव भूपतिवराज्ञप्तः शशांके तथा
पञ्चांगे च नदीपयोदनिचये स्वस्थोऽवसत् तद्युतः ॥ २६ ॥

महितं साधवं येन तं माधवं दितिसुता दैत्याः रमाधवमिव विजेतुं स्वैः बलैः सैन्यैः युताः सन्तः ययुः । ते अधमाः तदीयतपसा ऊर्जितैः अत एव जितरिपुव्रजैः वीरपैः सेनाधिपैः नभस्वता वायुना घना इव विदलिताः संतः विनिर्ययुः पराजिता अभवन् ॥ २३ ॥

पुरीति । सा पुरी पुण्यनगरी सुरपुरीव अमरावतीव विरुरुचे शुशुभे । पामरा नराः अपि सुरा इव विरेजिरे । युवतयः सुरस्त्रीसमाः अभूवन्निति शेषः । सा नदी पुरसमीपवर्तिनी सुरनदीव हयचयाः ऐंद्राः हया इव मितंगमाः दंतिनः दिगंतस्थिताः गजा इव अलं अत्यंतं बभुः शुशुभिरे ॥ २४ ॥

महीति महसा तेजसा उज्ज्वले अतः ज्वलनतेजसि तस्मिन् माधवे स्वामिनि स ति मही पृथिवी प्रभूतं प्रचुरं धनधान्यं यस्यां सा प्रभूतधनधान्यका हीति निश्चयेन । जलधराः मेघाः धरायां वर्षंति ते धरावर्षिणः अभूवन् । सुव्रताः अत एव रुचिरतेजसः नराः अहो इत्याश्चर्ये अमरसंश्रितामपि महीं अमरावतीं धिक् धिक् इति अनारतं निरंतरं । सतते अनारताश्रांतमित्यमरः । ऊचिरे वदंति स्म । एतदपेक्षया स्वर्गे अधिकं सुखं नास्तीति बुध्द्या अमरावतीमपि निनिंदुरित्यर्थः ॥ २५ ॥

यस्मिन्निति । अथाष्टभिः श्लोकैः कुलकेन राजनीतिमाह । यस्मिन् माधवे भूतलं शासति सति विधिपुरात् सत्यलोकात् । वृद्धिक्षयौ दंपती स्त्रीपुरुषौ भूतलं यातौ

---

६ " मिदं वचः प्रतिदिनं वदन्ति स्फुटम् " इति वा पाठः

यस्मिन् शासति भूतले नरवरा वृद्धा युवानोऽभवन्
वृद्धाख्यामपि चक्षमे न जरठः सर्वे बुधास्तां तदा
स्वीचक्रुः कथमन्यथा क्षितितले सर्वत्र शालादि यत्
तच्छं वै परमाप्नुयादविरतं वृद्धाभिधानं विना ॥ २७ ॥
उद्यद्दण्डनिपातपातितसुदुर्वृत्तव्रजे भूमिपे
गोलाङ्गूलचया वनेषु मुमुषुर्यस्याज्ञया स्वेप्सितम्
रात्रौ सद्मसु मूषका अपि यदाज्ञप्तास्तथाचूचुरन्
धान्यं पूर्णधनस्य नामनि यथा भूतार्थतां चादधुः ॥ २८ ॥

प्राप्तौ । तदा सर्वे पदार्थाः वृद्धिं अहर्निशं बुभुजिरे सिषेविरे । पदार्थमात्रस्य वृद्धिरेवासीन्न क्षय इत्यर्थः असौ क्षयः पुरुषः तव क्षीणः क्षयं प्राप्तः अतिकृशोभूदित्यर्थः । पदार्थमात्रेण स्वपत्न्यामुपभुज्यमानायां सार्वभौमं शरणं गतः तदा दयालुना तेन आज्ञप्तः क्षयः शशांके चंद्रे तथा पंचांगे तिथ्यादिपत्रे नद्यश्च पयोदाश्च नदीपयोदाः तेषां निचये तया वृध्द्या युतः तद्युतः स्वस्थः स्वस्थचित्तः सन् अवसत् यस्मिन् राजनि सति वृद्धिक्षयौ शशांकादिचतुष्टयं विनाप्यत्र न दृष्टावित्यर्थः ॥२६॥

यस्मिन्निति । यस्मिन् माधवे भूतलं शासति सति नरवराः वृद्धाः युवानः तरुणाः अभवन् । जरठः वृद्धः वृद्धाख्यामपि वृद्धसंज्ञामपि न चक्षमे न सेहे । तदा सर्वे बुधाः विवेकिनः तां वृद्धसंज्ञां स्वीचक्रुः । अन्यथा वृद्धसंज्ञास्वीकाराभावे क्षितितले सर्वत्र गृहेषु शालादि यत् तत् वृद्धश्चासौ आदिश्च वृद्धादिः पित्रादिः तस्य अभावे अविरतं निरंतरं परं उत्कृष्टं शं सुखं कथमाप्नुयात् स्फुटं स्पष्टमेतत् । लोके हि विबुधानां गृहे वृद्धा एव गृहरक्षका इत्यर्थः । महाभारतं चात्र प्रमाणं । अंतःपुरं पिता रक्षेन्माता रक्षेन्महानसं । भ्राता रक्षेद्धनागारं स्वयमेव कार्षिं व्रजेत् इति । यद्वा सर्वे बुधाः पंडिताः वृद्धसंज्ञां पाणिनिना वृद्धिर्यस्याचामित्यादिना संकेतितां स्वीचक्रुः । अन्यथा वृद्धं यत् आदिः आद्यं तस्य अभावे भूतले सर्वत्र शास्त्रेषु यत् शालादिशब्दस्वरूपं तत् अविरतं निरंतरं परं छप्रत्ययं कथमाप्नुयात् वृद्धसंज्ञकशब्दस्वरूपाभावे वृध्दाच्छ इति छप्रत्ययोत्पत्तिर्न स्यात्तेन शालीयः मालीयः न स्यादित्यर्थः । वृद्धाभिधानं विनेति पाठः साधीयान् । वृद्धमिति अभिधानं पाणिनिना संकेतितं । अन्यत्र पित्रादिवृद्धविषये वृद्ध इति अभिधानं यस्येति बहुव्रीहिः । पित्रादिपक्षे संज्ञासंज्ञिनोरभेदो ज्ञेयः ॥ २७ ॥

उद्यदिति । उद्यन् यः दण्डः तस्यः यः निपातः तेन पातितः सुतरां दुर्वृत्तानां व्रजो येन तस्मिन् भूमिपे सति गोलांगूलानां मर्कटानां चया एव नान्ये वनेषु न तु नगरेषु यस्य आज्ञया न तु स्वेच्छया स्वेप्सितं दिवैव न तु रात्रौ मुमुषुः । तया

७ "कथ" इति वा पाठः ८ "वृद्धाद्यभावे स्फुटम्" इति वा" पाठः

यस्माद् दुःसहबाणपूगनिहतागस्कृदद्विपत्संहते-
र्भीताः सर्वजनाः स्वमेव सकलं धर्मं चरन्ति प्रभोः
अस्त्वेतत् पशवोऽपि वेदवचनं संस्मृत्य संस्मृत्य च
स्वीया एव कदाचिदार्तवदिनेष्वेव व्रजन्ति स्फुटम् ॥ २९ ॥
यस्मिन् पालयति प्रजा नरपतौ वर्णोद्भवः सङ्करो
नो दृष्टो न च संश्रुतो बहुविधा दृष्टास्तदन्ये भुवि
विद्वद्वर्यकवीन्द्रपद्यनिचये वर्णेषु वर्णैः कृतः
स्त्रीभिः साम्बसतीसमर्चनविधौ भित्तौ च गानेऽपि च ॥३०॥
सर्वत्रास विधिर्निधिश्च सकलः संधिः समाने नृपे
दुर्वृत्ते नृपतौ स्वसैन्यपरिधिर्यस्मिन् समाधिस्तथा

मूषका अपि यदाज्ञप्ताः संतः रात्रौ न तु दिवा पूर्णधनस्य न तु दरिद्रस्य धान्यं अचूचुरन् नामनि मूषकसंज्ञायां यथा भूतार्थतां अन्वर्थसंज्ञा आदधुः । मुष्णंति ते मूषका इति निरुक्तिं यथार्थां चक्रिरे इत्यर्थः । यद्राज्ये वानरमूषकान् विना अन्ये चौरा नासन्निति भावः ॥ २८ ॥

यस्मादिति । दुःसहा ये बाणपूगाः शरसंघाः तैः निहता आगस्कृतां अपराधिनां शत्रूणां संहतिर्येन तस्मात् प्रभोः माधवाद्भीताः सर्वजनाः स्वमेव न तु अन्यदीयं सकलमेव नत्वल्पं धर्मं चरंति । एतदस्तु । ज्ञानिनां मनुष्याणां वार्ता तिष्ठतु । तेषां स्वधर्माचरणं नागाधमित्यर्थः । पशवोऽपि स्वधर्मं चरंति । वेदवचनं संस्मृत्य स्वीया एव न त्वन्यजातीयाः कदाचिदेव न तु सर्वदा आर्तवदिनेष्वेव न त्वन्यदा व्रजंति । इदं स्फुटं स्पष्टं लोके इत्यर्थः । नापुत्रस्य लोकोस्तीति तत्सर्वे पशवो विदुः तस्मात् पुत्रो मातरं स्वसारं चाधिरोहति । इदं वेदवचनं । स्वमात्रादिसंगः पशूनां वेदप्रतिपादित एव अतो न दोषायेति भावः ॥ २९ ॥

यस्मिन्निति । यस्मिन्नरपतौ प्रजाः पालयति सति वर्णोद्भवः वर्णेभ्यो ब्राह्मणादिभ्यः उद्भवः शूद्र्यादिषु उत्पन्नः अथवा शूद्राद्ब्राह्मण्यामुत्पन्नः संकरो नो दृष्टः न च संश्रुतः तस्मात् ब्राह्मणादिसंकरात् अन्ये भुवि बहुविधाः संकराः दृष्टाः । तानेवाह विद्वद्वर्येति । विद्वद्वर्याः ये कवींद्राः तेषां पद्यनिचये संकरः दृष्टः । एकस्मिन् पद्ये अनेकालंकारसंसर्गे संकर इति अलंकारशास्त्रे प्रसिद्धं । वर्णेषु ककारादिषु पकारादिभिः कृतः संकरः तथा स्त्रीभिः सांबसती पार्वती तस्याः समर्चनविधौ भित्तौ वर्णैः नीलपीतादिवर्णैः कृतः संकरः । इदं दक्षिणदेशे प्रसिद्धतरं । तथा गाने एकस्मिन् रागे रागांतरसंसर्गे रागान्तरं भवति अयं संकरः दृष्टः । यद्भयाद् व्यभिचारवार्ताऽपि नासीदिति भावः ॥ ३० ॥

सर्वत्रेति । यस्य तेजः यत्तेजः प्रतापः स एव दिनमध्यभानुः मध्यान्हसूर्यः तस्य

स्मार्धिर्नैव न चाधिरत्र भुवने नोपाधिरप्याविशद्
यत्तेजोदिनमध्यभानुकिरणप्रस्तोमभासंवृते ॥ ३१ ॥
हेतुर्नृपस्य समयः समयस्य हेतू राजा न हीति वचनं यदवादि शिष्टैः।
तद्या मृषैव विदधे किल वर्तयन् सन् कालं तृतीयमखिलं कलिसंज्ञकेपि ३२
यशोदेति नाम्ना प्रसिद्धा सती या गुणैस्तेजसा रूपतः सर्वयोषाः।
अतीत्य स्थिता माधवं मा धवं तमिवाचीकरन्माधवं माधवांशम् ॥३३॥
विवाहोत्सवं द्रष्टुकामा असंख्या नृपा आययुर्भानुना हूयमानाः।
प्रजाः सप्रजा जाततोषा अशेषाः सुवेषा द्विजाः सर्वदेशोद्भवाश्च ॥३४॥
भैमीपतेर्वावनिजापतेर्वा वैवाहिकोऽदर्शि विधिर्नरैर्यैः।

किरणाः तेषां प्रस्तोमः पुंजः तस्य या भा प्रकाशः तेन संवृते अत्र भुवने भूलोके सर्वत्र विधिः विधानं यज्ञादिकर्मेति यावत् आस प्रववृते। भौवादिकोऽयं धातुः अतो भूरादेशो। सकलः संपूर्णः निधिः आस महापद्मादीनां निधीनां मध्ये एकः निधिः आसीत् सर्वेषां गृहे पूर्णं धनमासीत् इत्यर्थः। समाने नृपे संधिर्मैत्री आस दुर्वृत्ते नृपतौ स्वसैन्यपरिधिः परिवेषः आस यस्मिन् राजनि समाधिश्चित्तैकाग्र्यं ब्रह्माकारतया अवस्थानं आस अमुं लोकं व्याधिः रोगः नाविशत् आधिर्मनोव्यथा नाविशत् उपाधिरुपद्रवोऽपि नाविशत् ॥ ३१ ॥

हेतुरिति। नृपस्य समयः कालः हेतुः कारणं। समयस्य कालस्य हेतुः राजा न हीति निश्चयेन। युगानुरूपा बुद्धिर्नृपस्य भवतीत्यर्थः। कालो दिष्टोऽप्यनेहाऽपि समयोऽप्यथ पक्षतिरित्यमरः। हेतुर्नाकारणं बीजं इत्यमरः। इति यत् शिष्टैः मुनिभिः अवादि उक्तं। तत् मुनिवाक्यं कलिसंज्ञकेऽपि काले तृतीयं सकलं कालं द्वापरं वर्तयन् प्रवर्तयन् सन् द्विपादं धर्मं प्रवर्तयन्नित्यर्थः मृषैव मिथ्यैव विदधे। किं राज्ञः कारणं कालो राजा वा कालकारणमित्यर्थः इति ते संशयो माभूद्राजा कालस्य कारणं इति कृत्युक्तं वाक्यं यथार्थं कृतवान् इत्यर्थः ३२

अथास्य विवाहं चतुर्भिराह यशोदेत्यादिभिः। यशोदेति। या गुणैः तेजसा रूपतश्च सर्वयोषाः अतीत्य अतिक्रम्य स्थिता यशोदेति नाम्ना प्रसिद्धा सा तं माधवं विष्ण्वंशं माधवं भूपं मा लक्ष्मीः माधवमिव धवं भर्तारं अचीकरत् कृतवती ॥ ३३ ॥

विवाहेति। विवाहोत्सवं द्रष्टुकामाः असंख्याः नृपाः भानुना भानुनामकेन नानाभिधेन अमात्येन हूयमानाः आकार्यमाणाः संतः आययुः। प्रजाभिः पुत्रादिभिः सहिताः सप्रजाः शोभनो वेषो यासां ताः सुवेषाः सर्वदेशोद्भवाः अशेषाः समग्राः प्रजाः जनाः आययुः ॥ ३४ ॥

भैमीति। यैः नरैः भैम्याः दमयंत्याः यद्वा रुक्मिण्याः पतेः नलस्य वा कृष्णस्य अवनिजापतेः रामस्य वैवाहिकः विवाहसंबंधी विधिरदर्शि दृष्टः त एव धन्या न

त एव धन्या न वयं यशोदापतेर्विवाहे क्षणहृष्टचित्ताः ॥३५॥
सम्पत्तिर्गजवाजिराजिरचिता प्रेमाप्रमेयं च यत्
सौन्दर्यादिगुणान्वितत्वमपि यच्छ्रीकृष्णभैम्यादिषु
श्रीमन्माधवनाम्नि तस्य युवतौ सर्वं समं तत् तयो-
रुद्वाहोपि समोऽस्ति किं न कलहाक्रान्तः स नायं तथा॥३६॥
भान्वंशुप्रांशुसम्यग्घरितमणिशिलाकॢप्तभूमीर्यदीया
मन्वाना भानुवाहा हरिततृणयुताः स्वच्छतोया निदाघे
शष्पार्णोलोभतो यद्रथमथ न नयंतीव शीघ्रं ततः किं
जायन्तेऽहानि दीर्घाण्यरुणकरकशाताडिता अप्यभीक्ष्णम् ३७
यद्रम्यक्षेत्रभूतामलचणकसुगन्धाहृतस्वान्तभास्वत-
सप्तिर्व्रातोऽतितूर्णं रथमुदयगिरेरस्तमद्रिं प्रणीय

यशोदापतेर्माधवस्य विवाहे क्षणेन हृष्टं चित्तं येषां ते वयमपि धन्याः । रामकृष्ण-विवाहोत्सववदयमपि विवाहोत्सवो जातः स तु पुराणे श्रुतः अयं त्वस्माभिरनुभूत इति भावः ॥ ३५ ॥

संपत्तिरिति । गजाश्च वाजिनश्च तेषां राजिः पंक्तिः तया रचिता संपत्तिः यत् अप्रमेयं अनुपमं प्रेम प्रीतिः यत्सौंदर्यादिगुणाः तैः अन्वितत्वं युक्तत्वमपि श्रीकृष्णश्च भैमी च श्रीकृष्णभैम्यौ ते आदी येषां तेषु आसीत् श्रीमन्माधवनाम्नि तस्य युवतौ यशोदायां सर्वं समं तयोः माधवयशोदयोः उद्वाहोऽपि समः किं न । यतः रामकृष्णोद्वाहः कलहाक्रांतः अयं तथा कलहाक्रांतो न । सर्वं तुल्यं विवाहोत्सवस्तु कलहाभावात् तदधिक इति भावः ॥ ३६ ॥

अथ पूर्वं संक्षेपतो वर्णितां तामेव पुरीं भान्वंशेत्यादिभिः नवभिः श्लोकैः कुलकेन वर्णयति । यच्छब्दानां तस्यामिति दशमश्लोकस्थेन तच्छब्देन संबंधः । तत्रादौ ग्रीष्मे दिवसानां दैर्घ्यं शरदि च ह्रासे कारणमुत्प्रेक्षालंकारेण द्वाभ्यामाह भान्विति अथ अनन्तर भान्वोः सूर्यस्य वाहाः अश्वाः यस्य इमा यदीयाः भानोः सूर्यस्य ये अंशवः किरणाः ते प्रांशवः उद्गतकांतयः याः सम्यंचः उत्तमाः हरितमणीनां शिलाः ताभिः कॢप्ताः कल्पिताः या भूमयः ताः निदाघेऽपि ग्रीष्मेऽपि हरिततृणयुताः स्वच्छतोयाः मन्वानाः संतः अरुणस्य सूर्यसारथेः करे या कशा । अश्वादेस्ताडिनी कशेत्यमरः । तया अभीक्ष्णं पुनःपुनः ताडिता अपि शष्पाणां बालतृणानां अर्णसां उदकानां च लोभतः रथं शीघ्रं न नयंतीव ततः अहानि दीर्घाणि जायंते किं ॥३७॥

यदिति । यस्याः नगर्याः रम्याणि यानि क्षेत्राणि तेषु भूताः उत्पन्नाः ये अम-

---

९ " रमायाः पत्युर्विवाहे " इति वा पाठः १० " यथा ', इति वा पाठः
११ "भानो " इति वा पाठः

आर्द्राः पाकोन्मुखास्ताश्चणकवरततीरत्ति नूनं निशायां
तस्माद्राज्यो विशालाः शरदि दिनचयस्त्वल्पकोऽसौ हरिश्च ३८
सरसि प्रतिबिम्बिताः किमेते मम वाहा हरितो यतो न भूमौ
तरणिर्हरिताश्मबद्धभूमिद्युतियुग्यद्वयसंहतौ शशंके ॥ ३९ ॥
स्वर्णादिधातुरचितामलगेहभित्तौ यस्यां वसन् शिवरतो मणिकुट्टिमायाम्
आशुप्रसादगिरिजापतिभौमलिंगपूजाविधौ प्रतिदिनं लभते प्रयासम् ४०
तत्तद्वर्णमणिप्रक्लृप्तशशभृन्मुख्यग्रहा भित्तिगा
भास्वच्चण्डमयूखसङ्कवलिताः सद्योऽतितेजस्विनः
यत्र [12]व्योमगतास्तु भानुकिरणस्पर्शक्षणे निःप्रभा
जायन्ते महदाश्रयेऽभ्युदयदे सत्यन्यथेदं कुतः ॥ ४१ ॥

लचणकाः तेषां सुगंधस्तेन आहृतं स्वांतं चित्तं येषां ते तथाभूताः ये भास्वत्सप्तयः सूर्याश्वाः तेषां व्रातः समूहः स्वं उदयगिरेः सकाशात् अस्तगिरिं अतितूर्णं प्रणीय नीत्वा आर्द्राः पाकोन्मुखाः ताः चणकानां वरा उत्कृष्टाः ततीः निशायां अत्ति नूनं शंके यस्माच्छरदि दिनचयः अल्पकः असौ सप्तिव्रातः हरिः हरितः च हरितचणकभक्षणाद्धरित इति भावः ॥ ३८ ॥

सरसीति । तरणिः सूर्यः एते मम वाहाः सरसि तडागे प्रतिबिंबिताः किं । यतः भूमौ वाहाः हरितः हरिद्वर्णाः न । इति हरिता ये अश्मानस्तैर्बद्धा या भूमिः तस्या या द्युतिः कांतिः तया युज्यते इति युक् यस्यां हयाः यद्वयास्तेषां या संहतिस्तस्यां शशंके उत्प्रेक्षितवान् ॥ ३९ ॥

स्वर्णादीति । स्वर्णादयो ये धातवः तैः रचिताः उत्पादिताः अम्लानां गेहानां भित्तयः यस्यां तथोक्ता मणिमयानि कुट्टिमानि बद्धभूमयो यस्यां तस्यां वसन् शिवरतः शिवभक्तः आशु शीघ्रं प्रसादो यस्येत्याशुप्रसादः गिरिजापतिः सांबस्तस्य भौमं पार्थिवं यल्लिंगं तस्य यः पूजाविधिः तत्र प्रतिदिनं प्रयासं कष्टं लभते । मृत्तिकाया अभावादिति भावः ॥ ४० ॥

तत्तदिति । ते ते वर्णाः धवलादयो वर्णाः येषां ते तथा भूताः मणयः हीरादयः तैः प्रक्लृप्ताः कल्पिताः ये शशभृन्मुख्याः ग्रहाः भित्तौ गच्छंति ते भित्तिगाः सुवर्णभित्तौ रत्नैरुत्पादिता इत्यर्थः ते भास्वान् सूर्यस्तस्य चंडाः ये मयूखाः किरणाः तैः कवलिताः संतः यत्र यस्यां नगर्यां सद्यः अतितेजस्विनः भवंति । व्योमगतास्तु भानुकिरणस्पर्शक्षणे निःप्रभाः अस्तंगता इति भावः जायंते । महतः श्रेष्ठस्य आश्रये अभ्युदयदे सति इदं कथं इति कवेः प्रश्नः ॥ ४१ ॥

---

१२ "स्वर्ग" इति वा पाठः १३ "कथम्" इति वा पाठः

वायो रत्नं मारुतिस्तेजसोऽभूद् भास्वानद्भ्यः श्रीर्नभः षंढमेव
भूमिः पुर्त्रीं यामसूतातिरम्यं रत्नं नूत्नं सर्वपूर्मूर्धरत्नम् ॥४२॥
हैमप्राकारयुक्ता सजलपरिखया मृत्स्नयाथो जलेन
भान्वश्माद्यैरुपेता बहिरुपरिगृहैः सप्तभिः सप्तभिश्च
याधः पूर्णान्तरित्थं सकलगुणयुता पद्मजाण्डं जिगाय
का वार्ता स्वर्नगर्या बलिनृपतिपुरी भूमिमेवाविवेश ॥ ४३ ॥

प्रासादमूर्धगतचन्द्रशिलाब्दसंघ-
सम्भूतवारिभवपूरविपूरितायाम्
चन्द्रोदये प्रतिदिनं प्रलपन्ति यस्यां
मुग्धा न सन्ति जलदाः कुत एति पाथः ॥ ४४ ॥

हरितोपलबद्धराजमार्गं प्रति यस्याः प्रययौ यदाश्वसादी ।
हरितांश्च इति प्रसिद्धनामाभिमतिं स्वां विजहौ हरिस्तदैव ॥ ४५ ॥

वायोरिति । वायोर्मारुतिर्हनुमान् रत्नं अभूत् । तेजसः भास्वान् सूर्यः रत्नं अभूत् । अद्भ्यः उदकेभ्यः श्रीः लक्ष्मीः रत्नं अभूत् । नभः षंढमेव । नपुंसकत्वात्प्रजोत्पत्तेरभाव इति भावः । भूमिः यां नगरीं अतिरम्यं सर्वासां पुरां मूर्धरत्नं नूत्नं नूतनं न तु जीर्णमित्यर्थः रत्नं असूत ॥ ४२ ॥

हैमेति । हेम्नः अयं हैमो यः प्राकारः तेन युक्ता सजला या परिखा तया उपेता अथो अनंतरं मृत्स्नया मृत्तिकया अनंतरं जलेन अनंतरं भान्वश्माद्यैः सूर्यकांतादिभिः बहिरावरणभूतैः उपेता आदिशब्देन वाय्वाकाशौ प्रत्यक्षसिद्धौ ग्राह्यौ। अंतर्मध्ये उपरि सप्तगृहैः अधश्च सप्तगृहैः भूरादिसप्तलोकस्थानापन्नैः अतलादिसप्तस्थानापन्नैश्च उपेता । इत्थं सकलैर्गुणैः ब्रह्मांडगुणैः उपेता पद्मजांडं ब्रह्मांडं जिगाय स्वर्नगर्याः अमरावत्याः का वार्ता बलिनृपतिपुरी तु लज्जिता सती भूमिमेव आविवेश । अत्रेदमवधेयं ब्रह्मांडं सुवर्णमयं तच्च जले वर्तमानं तस्य पृथिव्यादीनां आवरणं बाहिः अंतस्तु उपरि सप्त भूरादयो लोकाः अधः अतलादीनि सप्त पातालानि एवमियमपि नगरीति ज्ञेयं ॥ ४३ ॥

प्रासादेति । मुग्धाः बालाः यस्यां नगर्यां चंद्रोदये प्रतिदिनं प्रासादानां राजगृहाणां मूर्धानः तत्र गताः चंद्रशिलाः त एव अब्दसंघाः तेभ्यो संभूतं यद्वारि तस्य उत्पन्नः यः पूरः तेन विपूरितायां सत्यां जलदाः न संति पाथः कुतः एति इति प्रलपंति ॥ ४४ ॥

हरितेति । अश्वसादी अश्वारोहः यस्याः नगर्याः हरितैः उपलैः बद्धः यः राजमार्गः तं प्रति यदा ययौ तदा एव हरिरिंद्रः स्वां स्वकीयां हरिताः अश्वा

---

१४ 'प्रासाद" इति वा पाठः १५ "हश्व" इति वा पाठः

तस्यां नृपालगणमूर्धजमौलिमालासंघोद्गलत्प्रचुरगन्धरजःसमृद्ध्या ।
संरञ्जितामलपदो जयति प्रकामं श्रीमाधवो द्विजपतिर्द्विजकल्पवृक्षः ४६

नाना भानुर्हरिश्चन्द्रो गुरू रामो द्विजाधिपः
लोकयात्रां नयन्ति स्म माधवाज्ञापरायणाः ॥ ४७ ॥

सेनापतिर्हरिरिति प्रथितः पृथिव्यां
येनाजयन् तरिचरा रविसूनुदिक्स्थम्
नाम्ना टिपुं स किल कीर्तिमिहावितत्य
यातो दिवं दिविजयानवराधिरूढः ॥ ४८ ॥

ब्रह्माङ्घ्रिजात्तजनिरप्यवनीश्वराणां
हन्तारिणां धनददिग्वसतिः सदाऽसौ
श्रीमाधवस्य चरणे विनिवेद्य सर्वं
सेनापतिर्दिवमगात् स तु माधवाख्यः ॥ ४९ ॥

यस्येति हरिताश्वः इति यत्प्रसिद्धं नाम तस्य अभिमतिं अभिमानं विजहौ तत्याज ॥ ४५ ॥

तस्यामिति । नृपाला राजानस्तेषां गणः तस्य मूर्धजेषु केशेषु ये मौलयः मुकुटाः तेषु मालास्तासां संघः तस्मात् उद्गलत् प्रचुरगंधं यद्रजः तस्य या समृद्धिः तया संरंजिते अमले पदे यस्य तयोक्तः। द्विजानां ब्राह्मणानां कल्पवृक्षः द्विजपतिः ब्राह्मणश्रेष्ठः सः श्रिया युक्तो माधवः श्रीमाधवः तस्यां नगर्यां पुण्याभिधायां प्रकामं जयति सर्वोत्कर्षेण वर्तते वर्तमानसामीप्ये वर्तमानवद्वेति वर्तमानेलट् । जयति स्म कामं इति वा पाठः॥ ४६ ॥

नानेति । नाना नानाख्यो मंत्री भानुः सूर्यः प्रधानेषु तस्यैव मुख्यत्वात् तस्य भानुत्वं भानुरित्युपनामापि तस्यासीत् । हरिः हरिनामा सेनापतिः चंद्रः तस्य सौम्यत्वाच्चंद्रत्वम् । द्विजाधिपः रामः रामशास्त्री गुरुः बृहस्पतिः । एते त्रयो माधवाज्ञापरायणाः संतः लोकयात्रां नयंति स्म ॥ ४७ ॥

सेनापतिरिति । तरिचराः हूणपाः रविसूनुः यमः तस्य या दिक् दक्षिणा तत्स्थं नाम्ना टिपुं रिपुं येन सेनापतिना हेतुभूतेन अजयन् पृथिव्यां हरिरिति प्रथितः सेनापतिः इह अस्मिन् लोके कीर्तिं वितत्य दिविजानां यानं विमानं तत् आरूढः सन् दिवं ययौ ॥ ४८ ॥

ब्रह्मेति । ब्रह्मणः अंघ्रिश्चरणः तस्माज्जातः ब्रह्मांघ्रिजः शूद्रः तत्र आत्ता गृहीता जनिर्जन्म येन तयोक्तः। अरीणां अवनीश्वराणां हंता सदा सर्वकालं धनदः कुबेरः तस्य या दिक् उत्तरा तत्र वसतिर्यस्य सः असौ माधवाख्यः सेनापतिः श्रीमाधवस्य

१६ " देहं " इति वा पाठः

सेनापती दिवमितौ मनुजाधिपस्य
श्रीमाधवस्य रणनिर्जितराजराजौ
श्रुत्वेति तुष्टहृदयः स निजामभूपं
प्राग्दिग्भवं वचनमाह मशीरमन्त्री ॥ ५० ॥
स्वीयां समुन्नतिमवेक्ष्य परस्य हानिं
यो वै जिगीषुरधिपः स तदैव शत्रुम् ।
यायान् न यावदुदयं प्रगतो बलेन
स्वीयेन वर्धिततरेण धनेन नित्यम् ॥ ५१ ॥
यद्यस्ति सम्पदखिलापि तथापि राजा
नित्यं यतेत परराज्यहृतौ प्रयत्नात् ।
दैवोपलब्धपरितोषरतो नृपालो
विप्रो न तुष्यति च युक्तमँहो किमेतत् ॥ ५२ ॥
अक्रामि भूमिरखिलापि खलान्तकेयं
विप्रेण तेन रिपुणा तव तुष्टवृत्तेः ।

स्वस्वामिनः चरणे सर्वं विनिवेद्य उत्तरदिग्विजयादुपानीतं धनादीत्यर्थः । दिवं स्वर्गं यातः ॥ ४९ ॥

अथ माधवस्य पराक्रमं वर्णयितुं प्राचीभवस्य निजामस्य युद्धोपक्रमं अवतारयति सेनेति । मशीराख्यो मंत्री मनुजाधिपस्य श्रीमाधवस्य रणे विनिर्जितराजराजौ सेनापती हरिमाधवौ दिवं इतौ गतौ इति श्रुत्वा अतितुष्टहृदयः सन् प्राग्दिग्भवं निजामनामानं स्वस्वामिनं भूपं वचनमाह ॥ ५० ॥

द्वाभ्यां राजनीतिमाह स्वीयामिति । यो वै जिगीषुः सः स्वीयां स्वकीयां समुन्नतिं अवेक्ष्य परस्य शत्रोः हानिं क्षयं अवेक्ष्य तदैव तस्मिन्नेव काले न तु विलंबेन शत्रुं यायात् । यावत् स्वीयेन वर्धिततरेण बलेन सैन्येन धनेन च उदयं वृद्धिं न प्रगतः॥५१॥

ननु मदीये गृहे सर्वाऽपि संपदस्ति किं युद्धोद्यमेनेत्यत्राह यदिति । राजा अखिलाऽपि यदि संपदस्ति तथापि परस्य शत्रोः राज्यस्य हृतौ हरणे यतेत यत्नं कुर्यात् । अथ असंतुष्टा द्विजा नष्टाः संतुष्टा इव पार्थिवाः । सलज्जा गणिका नष्टा निर्लज्जेव कुलांगनेत्यस्यार्थमर्द्धेनाह दैवेति । नृपालः राजा दैवोपलब्धेन यः परितोषः संतोषः तत्र रतः विप्रः ब्राह्मणः न परितुष्यति च अहो इत्याश्चर्ये एतत् युक्तं किमिति पृच्छति । शत्रुः तावद्ब्राह्मणः स तव राज्यहरणे उद्यतः त्वं राजा दैवलब्धतुष्ट इति द्वयमप्ययुक्तमित्यर्थः ॥ ५२ ॥

अक्रामीति । हे खलांतक विप्रेण राजानर्हेणेत्यर्थः रिपुणा तेन माधवेन तुष्टवृत्तेस्तव

---

१७ " मिदं " इति वा पाठः

कालोऽनुकूल इह नः क्षयकृद्रिपोस्ते
यात्रा मता मम यदिच्छसि तत् कुरुष्व ॥ ५३ ॥
निजामभूपो विशिखाधिनाथस्तदोचितां वाचमुवाच जीनः ।
मदीयतातेन पुराभियाता द्विजाः प्रजिग्युः प्रबलाः पुरा तम् ॥ ५४ ॥
पुरा जितं कैरपि मां युवानं रणाजिरे जिग्युरमी सपत्नाः ।
जराजितं मां हि जयेयुरेते किमत्र चित्रं युवराजमुख्याः ॥ ५५ ॥
अथापि मन्त्रिन् क्षमसे यदि त्वं समिद्रथस्यास्य धुरं प्रवोढुम् ।
निवेद्य शत्रोः सचिवे तदेतद् यतस्व युद्धोद्यमनेऽचिरेण ॥ ५६ ॥
तथेति प्रतिज्ञाय सर्वं स वक्ता निजानीकिनीपान् धनैस्तोषयित्वा ।
धनागारकोशं विलोक्य प्रजज्ञे रिपोर्मन्त्रिणो भिक्षुकत्वं दुरन्तम् ॥५७॥
तुरङ्गिणो ये रथिनः क्रमेलपालाश्च दन्तावलिनः प्रवीरम् ।

अखिलाऽपि भूमिः अक्रामि आक्रांता । इह अस्मिन् विषये नः कालः अनुकूलः अस्तीति शेषः । ते रिपोर्माधवस्य क्षयकृत् कालः । उभयोः सेनापतयोर्दिवंगतत्वात् नानाभिधस्य मंत्रिणः तु अवीरत्वादिति भावः । अतः मम यात्रा मता । यदिच्छसि तत् कुरुष्व । त्वं निग्रहानुग्रहसमर्थः अहं तु सूचनामात्रकरणे समर्थोऽस्मीति भावः ॥ ५३ ॥

अथ निजामभूपतिराह निजामेति । जीनः जीर्णः । जीनो जीर्णो जरन्नित्यमरः । विशिखानां यवनानां नाथः निजामभूपः तदा उचितां इति वाचं उवाच । इति किं । मदीयतातेन पुरा अभियाताः प्रबलाः द्विजाः तं प्रजिग्युः जितवंतः ॥ ५४ ॥

पितुर्वृत्तं निवेद्य स्ववृत्तमाह पुरेति । अमी सपत्नाः ब्राह्मणाः पुरा पूर्वं कैरप्यजितं तरुणं मां रणाजिरे जिग्युः । युवराजः प्रतिनिधिः मुख्यः येषां ते युवराजमुख्याः गूढाशयस्तु युवराजः तरुणाधिपः अतितरुणः शत्रुरहमतिवृद्ध इति । जरया जितं मां जयेयुरत्र किं चित्रं । न किंचिदाश्चर्यमित्यर्थः ॥ ५५ ॥

अथेति । हे मंत्रिन् त्वं अथापि एवं सत्यपि समित् संग्रामः स एव रथः तस्य धुरं वोढुं क्षमसे यदि तर्हि शत्रोः सचिवे तदेतत् युद्धोद्यममित्यर्थः । निवेद्य कथयित्वा एतेन ते अपि संनद्धा बभूवुरिति भावः । युद्धोद्यमने अचिरेण यतस्व ॥ ५६ ॥

तथेति । वक्ता सः मशीरः तथेति तथास्तु इति स सर्वं प्रतिज्ञाय अंगीकृत्य निजाः ये अनीकिनीपाः सेनापतयः तान् धनैः तोषयित्वा धनस्य यत् अगारं गृहं तत्र कोशं अर्थराशिं विलोक्य रिपोर्माधवस्य मंत्रिणः नानाख्यस्य दुरंतं याव-ज्जीवमित्यर्थः । भिक्षुकत्वं प्रजज्ञे । नानाख्यं भिक्षुं विधाय काशींप्रति प्रेषयिष्यामीति प्रतिज्ञातवान् इत्यर्थः ॥ ५७ ॥

तुरंगिण इति । ये तुरंगिणः अश्वारोहाः ये रथिनः क्रमेलपालाः उष्ट्रवंतः दंता-

पदातयो गौरमुखा असङ्ख्या इवाययुः सागरमाशु नद्यः ॥ ५८ ॥

इति श्रीशिवकाव्ये कलिविलासे पुरुषोत्तमपंडितविरचिते सप्तदशश्चमत्कारः ॥

---

## अष्टादशश्चमत्कारः

स्वसखलेखसमीरसमेधितो द्विजसमाजपतिप्रियपावकः ।
स रुरुचे समिदुद्गतकान्तिभृद् भृतनिजोवनिभृत् सुखकारकः ॥ १ ॥
द्विजपतिर्द्विजराजसमद्युतिर्धृतिमता सचिवेन नयान्वितः
स जगदे जगदेकधुरन्धरो धरधरांशभवो भवनेऽजने ॥ २ ॥

वलिनो गजारोहा असंख्याः गौरमुखाः पदातयश्च सागरं नद्य इव प्रवीरं निजामं आशु आययुः ॥ ५८ ॥

इति श्रीशिवकाव्यव्याख्यायां स्वयंकृतायां काव्यप्रकाशिकायां सप्तदशश्चमत्कारः ॥१७॥

श्रीगणेशाय नमः । अथ श्रीमन्माधवस्य युद्धोद्यममवतारयति स्वसखेति । स्वस्य यः सखा सचिवः भाग्यनगरवर्ती शत्रुमताभिज्ञानार्थं निरंतरं स्थापितः तस्य यः लेखः पत्रं युद्धोद्यमरूपं सः समीर इव वायुरिव स्वसखलेखसमीरः तेन समेधितः वर्धितः अन्यत्र स्वस्य सखा मित्रं लेखो देवः स चासौ समीरश्च स्वसखलेखसमीरः । लेखा अदिति नंदना इत्यमरः । तेन समेधितः वर्धितः समिति संग्रामे विषये या उद्गता कान्तिः क्षात्रं तेजः तद्बिभर्तीति तथोक्तः । अन्यत्र समिद्भिः काष्ठैः उद्गता या कान्तिः तेजः तां बिभर्तीति तथोक्तः । भृताः पोषिताः निजाः स्वकीयाः ब्राह्मणा इत्यर्थ- येन सः । अन्यत्र भृताः निजा देवा येन सः । यजमानेन तत्तद्देवतामुद्दिश्य स्वस्मिन् प्रक्षिप्तं यद्धविस्तस्य समर्पणेन जनिभृतां सर्वेषां प्राणिनां यत् सुखं तस्य कारकः । यस्य राज्ये सर्वेऽपि सुखिनः न तु ब्राह्मणा एवेत्यर्थः । अन्यत्र जनिभृतां प्राणिनां सुखं जाठराग्निरूपेण भक्षितान्नं सुखेन पचनं करोतीति तथोक्तः । सः द्विजसमाजस्य ब्राह्मणसमूहस्य पतिः पालको नानाख्यो मंत्री तस्य प्रियः इष्टः श्रीमन्माधवः सः पावक इव अग्निरिव । अन्यत्र द्विजसमाजपतिः यागकृद्यजमानः तस्य प्रियः स चासौ पावकश्च द्विजसमाजपतिप्रियपावकः रुरुचे दिदीपे संतप्तोभूदित्यर्थः विशिखस्य युद्धो द्यमश्रवणेन भृशं क्रुद्धोभूदिति भावः । रुचदीप्तावभिप्रीतौ चेत्यतः कर्तरि लिट् ।१-

द्विजेति । धृतिर्धैर्यं यस्यास्तीति धृतिमान् तेन धृतिमता । धृतिर्योगांतरे धैर्ये धारणाध्वरतुष्टिषु इति विश्वः । सचिवेन नानाख्येन । नयेन नीत्या अन्वितः युक्तः । द्विजराजेण चंद्रेण समा द्युतिर्यस्येति द्विजराजसमद्युतिः जगतः एकधुरंधरः । धरो गोवर्धनस्तस्य धरो धर्ता श्रीकृष्णः तस्य अंशेन भवः उत्पन्नः सः माधवः नास्ति

यवनपो वनपो मृगराडिव स्ववसतेर्वसतिं करिसंहतेः
निनदनादितदिग्वदनः पुनः समुपसर्तुमिहोत्सहते ह ते ॥ ३ ॥
वच उवाच चिरं स विचिंतयंश्चरितमात्मकुलोचितमञ्चितम्
सचिव दुर्विषहोऽपि स केसरी करिवरैर्बहुशो भुवि पातितः ॥ ४ ॥
कथमिदं भवितेति न मन्यतां नरवरो हि नरादमजीघनत्
सुरवराधिपतिर्भगवान् क्षणाद् गिरिमणुं कुरुतेऽणुमथो गिरिम् ॥ ५ ॥
सकलसैनिकपालकनायकः स किल दौलत इत्यभिधां दधत्
क्षणत एनमरिं विनिपातयेत् किमुत ते सकला यदि संयुताः ॥ ६ ॥

जनो यस्मिन् तत् अजनं तस्मिन् जनवर्जिते। षट्कर्णोभिद्यते मंत्र इतिं मंत्रगोपनार्थं इत्यर्थः भवने गृहे इति जगदे उक्तः। गदेः कर्मणि लिट् ॥ २ ॥

अथ नानाख्यः मंत्री माधवस्य धैर्यविलोकनार्थं यवनाधिपस्य पराक्रममाह यवनेति। निनदेन शब्देन नादितानि दिशां वदनानि येन सः यवनपः निज्ञामः वनं पातीति वनपः मृगराट् सिंहः स्ववसतेः स्ववासस्थानात् करिसंहतेः वसतिमिव ह इति खेदे पुनः पुनः इत्यनेन पूर्वं स आगतः तेन स्थलमिदं दृष्टं दग्धं चातः तस्यागमने भीतिर्नास्तीति सूचितं। इह अस्मिन् त्वदीयावसरे ते वसतिं पुण्यनगरीं गंतुं उत्सहते इच्छति ह इति खेदे ॥ ३ ॥

माधवस्तु मंत्रिणा रिपौ सिंहत्वं स्वस्मिन् गजत्वं आरोपितं तन्निशम्य उत्तरमाह वच इति त्रिभिः। वच इति। सः माधवः आत्मकुलोचितं अंचितं पूजितं चरितं चिरं सावकाशं विचिंतयन् सन् वचः उवाच हे सचिव प्रधान दुर्विषहोऽपि सः केसरी सिंहः करिवरैः गजेंद्रैः मत्पूर्वजैरित्यर्थः बहुशः बहुवारं। बव्हल्पार्थाच्छस्कारकादन्यतरस्यामिति शस् प्रत्ययः। भुवि पातितः। यदा यदा स आगतः तदा तदा मत्पूर्वजैरेव पराजित इति भावः ॥ ४ ॥

कथमिति। इदं गजैः सिंहनिपातनं कथं भविता इति न मन्यतां। हि यस्मात् कारणात् नरवरो रामः मनुष्य इत्यर्थः। नरान् मनुष्यान् अत्तीति नरादः रावणः राक्षसः तं अजीघनत् हतवान्। हंतेर्णिजंतात् च्लेश्चङि द्वित्वे रूपं। अत्रार्थे लोकोक्तिं प्रमाणयति। सुरवराधिपतिर्भगवान् विष्णुः क्षणात् गिरिं पर्वतं अणुं सर्षपप्रायं कुरुते अथो अनंतरं अणुं सर्षपं गिरिं पर्वतं कुरुते ॥ ५ ॥

सकलेति। दौलत इति अभिधां नाम दधत् सः सकला ये सैनिकाः तेषां पालकः तेषां नायकः स्वामी क्षणादिति क्षणतः एनं अरिं विनिपातयेत् ते सकलाः सेनापतयः यदि संयुताः तर्हि विनिपातयेयुरिति किमुत किमु वक्तव्यं ॥ ६ ॥

---

१ "नोभुना" इति वा पाठः २ "चापरः" इति वा पाठः

नाना त्रिशक्तिरुचिरार्थपरिप्लुतं तद्
वाक्यं विभोर्विविधयुक्तियुतं निशम्य ।
प्रावीवदत् स च पुनः समरामरेज्या-
भारं निधाय किल सैनिकनाथनाथे ॥ ७ ॥
गाधेस्तनूजेन विसृष्टिकर्त्रा तपोविहीनान् विविधास्त्रमूढान् ।
नृपान् समीक्ष्यास्त्रिजयेऽपि शक्तास्तोफाः कृता दारुविपूर्णगर्भाः ॥ ८ ॥
तुफेति हिंसार्थकधातुजन्मा पचाद्यचि स्त्री महती लघुश्च ।
सा मध्यमा धातुसमूहजाता लौही च पर्जन्यनिनादशब्दा ॥ ९ ॥
औणादिके दारयतेरुणि स्त्री दारुः प्रभो लोकत एव लिङ्गम् ।
निर्दग्धमूलैर्द्युमणेश्च गंधो भौमेन युक्तो लवणेन सा स्यात् ॥ १० ॥

नानेति । नानाख्यः मंत्री स्वरादिवत् अव्ययं इदं अव्ययादाप् सुप इति सुपो लुक् । तिस्रश्च ताः शक्तयः च त्रिशक्तयः प्रभुमंत्रोत्साहाख्याः ताभिः रुचिरः सुंदरो योऽर्थः तेन परिप्लुतं व्याप्तं । यद्वा तिस्रः शक्तयः यस्मिन् तत् त्रिशक्ति इत्येकं पदं विविधाः या अनेकाः या युक्तयस्ताभिर्युतं तत्पूर्वोक्तं विभोर्माधवस्य वाक्यं निशम्य । निजसैनिकनाथनाथे दौलताभिधे समरः संग्रामः स एव अमरेज्या यागः तस्याः भारं निधाय । शत्रुपराजयस्त्वयैव कर्तव्य इति निवेद्य पुनश्च प्रावीवदत् उक्तवान् । स्वार्थणिजंतात् वदेर्लुङ्श्चङि द्वित्वे रूपं ॥ ७ ॥

अथ युद्धसामग्री का वा अपेक्षितेति प्रष्टुमिच्छंतं प्रभुः स्वयमेव आह गाधेरिति । विसृष्टिः प्रतिसृष्टिः तां करोतीति विसृष्टिकर्ता तेन गाधेस्तनूजेन विश्वामित्रेण नृपान् तपोविहीनान् अत एव विविधास्त्रमूढान् समीक्ष्य । अस्त्रिणां अस्त्रवतामपि जये शक्ताः समर्थाः दारुणा चूर्णविशेषेण पूर्णः गर्भो यासां ताः तोफाः कृताः ॥ ८ ॥

तोफेति शब्दः संस्कृतः वाऽसंस्कृत इति संदेहे तस्य निरुक्तिपूर्वकं तोफायास्त्रैविध्यमाह तुफेति । पचादिश्चासावच् च पचाद्यच् तस्मिन् कृते सति तुफतुंफ हिंसार्थौ इति हिंसार्थकाद्धातोर्जन्म उत्पत्तिर्यस्याः सा तोफा भवति तोफति हिंसतीति तोफा । अचि लघूपधलक्षणे गुणे टाप् प्रत्यये च कृते स तोफाशब्दः अन्वर्थः संपन्नो भवतीत्यर्थ स्त्रीलिंगे अयं शब्दः अत्र प्रमाणमनुपदमेव वक्ष्यामि । एवं नामनिरुक्तिमुक्त्वा तस्याः स्वरूपं त्रिप्रकारकमाह । सा तोफा महती मध्यमा लघुश्च लघुशब्दात् गुणवाचकात् वोतो गुणवचनादिति विकल्पान्ङीबभावः । किं विशिष्टा सा । पर्जन्यो मेघः तस्य निनाद इव शब्दो यस्याः । पुनः किंविशिष्टा । धातूनां सुवर्णादीनां समूहः संघस्तस्माज्जाता । लोहस्य इयं लौही च भवति । लोहशब्दादिदमर्थेऽणि ॥९॥

दारुविपूर्णगर्भेत्युक्तमतः दारुशब्दनिरुक्तिपूर्वकं तस्याः कृतिमाह औणादि-

१ "निज" इति पा पाठः.

निपातकालावधि रोरवीति शब्दार्थकस्तद्वणतेः स बाणः।
दशाधिकान् हन्ति रणाङ्गणेऽसौ दारूदरो लोहमयः स दण्डः ॥ ११ ॥
लक्ष्यैकदेशः किल विन्दुरुक्तस्तं हन्ति यस्मादिह विन्दुखेति ।
मुखाग्रबिन्दुस्तमनुसृता वा यतः शरव्यं हरतीति सोक्ता ॥ १२ ॥
शकटरोहितयन्त्रचयावलिस्तव विभो रणमूर्धगता सती ।
अतनुमप्यतनुं तनुयात् कथासमवशेषमलं कनकाचलम् ॥ १३ ॥

क इति । दारयतः दृ विदारणे इति धातोः उणि ञुण् प्रत्यये कृते सति दारुर्भवति दारयति नाशयतीति दारुः अन्वर्थो दारुशब्दः संपन्नो भवतीत्यर्थः । स्त्रीलिंगे । ननु कोशादिप्रमाणाभावात् स्त्रीलिंगत्वं कथमित्याह । हे प्रभो लोकत एव लिंगं लिंगं निर्णेयं । लोके हि दारुरानीता दारुः स्थापिता इति व्यवहारात्तेयं । यथाह भगवान् भाष्यकारः । लिङ्गमशिष्यं लोकाश्रयत्वाल्लिंगस्य । अथ रवितमाह निर्दग्धेति । द्युमणेः रवेः निर्दग्धानि यानि मूलानि तैः ‡रविमूलवीक्षैरित्यर्थः भूमेः इदं भौमं तेन भौमेन लवणेन च युक्तः गंधः गंधकः सा स्यादारुः स्यात् ॥ १० ॥

निपातेति । सः लोके प्रसिद्धः बाणः यत् निपातस्य पतनस्य यः कालः सः अवधिर्यथा स्यात्तथा रोरवीति पुनः पुनः रौति रोरवीति पुनः पुनः शब्दं करोतीत्यर्थः तत्तस्मात् शब्दः अर्थः यस्येति शब्दार्थकः समासांतः कः वणते वेणधातोर्बाणः भवतीति शेषः । वणति शब्दं करोतीति बाणः । बणेत्यपि केचित्पठंतीत्युक्तात् वणधातोरणि रूपं । एवं संज्ञामुक्त्वा संज्ञिनः स्वरूपं लक्ष्यं चाह दशेति । दारुः उदरे यस्येति दारूदरः लोहप्रचुरः लोहमयः सदंडः दंडेन सहितः सदंडः असौ बाणः रणांगणे दशाधिकान् हंति दशभ्योऽधिकाः दशाधिकाः वीरास्तान् हंति नाशयति ॥ ११ ॥

अथ बिंदुखाशब्दनिरुक्तिमाह लक्ष्येति । लक्ष्यस्य शरव्यस्य वेध्यस्येति यावत् । यः एकदेशः एको भागः बिंदुरुक्तः तं यस्मात् हंति तस्मादिह अस्मिन् लोके बिंदुखेति संज्ञेत्यर्थः । बिंदुं खनतीति बिंदुखा । बिंदूपपदात् खनु अवदारणे इत्यस्मात् धातोरौणादिको ड प्रत्ययः डित्वाट्टिलोपः । यद्वा । मुखस्य अग्रं मुखाग्रं तस्मिन् यः बिंदुः लोके मक्षिकेति प्रसिद्धा तां अनुसृता सती शरव्यं लक्ष्यं हरतीति सा बिंदुखा उक्ता बिंदुना खनतीति बिंदुखा । यद्यपि इदं लक्ष्यं वीरस्य वेद्धुः तथापि काष्ठानि पचंतीतिवत् सौकर्यातिशयात् बिंदुखायामारोपितं ततः इयं निरुक्तिः संपन्ना ॥ १२ ॥

शकटेति । हे विभो माधव । तव शकटेषु रोहिता आरोपिता या यंत्रचयानां आवलिः पंक्तिः । रणमूर्धगता सती । न तनुः अतनुः तं अतनुं महांतं कनकाचलं नास्ति तनुः शरीरं यस्येत्यतनुः तं अतनुं अशरीरं अत एव कथैव समवशेषो

१ "उणथान" इति वा पाठः ५ "तो" इति वा पाठः. * महाराष्ट्र भाषायां "दरु" इत्याख्यस्य. ‡ महाराष्ट्र भाषायां "कोळसे" इति प्रसिद्धैः

क्षणे क्षणे दौलतसैन्यपालयन्त्राग्र्यवक्त्राम्बरतः सहस्रम् ।
अयोमयास्तप्ततराः कराला गोला विनिर्यान्ति कपित्थतुल्याः ॥ १४ ॥
अनादरो होड इति प्रसिद्धो रिपोर्विधत्ते तमसौ रणे यत् ।
ततो ह्ययं होळकरोपनामा पताकिनीनामधिपस्तवास्ते ॥ १५ ॥
पनसोपमलोहगोलकाः पनसास्तैः प्रहरन्ति यद्रिपून् ।
तत्र पानसिकाभिधा इमे किल जेष्यन्ति रिपोरनीकिनीम् ॥ १६ ॥

तोफाकृत्यानियोजितास्तव विभो ये पानसे नामका
वीरा भूमिसुराः सुरा इव सुरापारिक्षये दीक्षिताः ।
सृष्टचन्ताम्बुधयो जगत्त्रयमिव क्रोधोपतापाकुलाः

यस्य सः तं कयासमवशेषं अलं अत्यंतं तनुयात् कुर्यात् ॥ १३ ॥

स्वकीययंत्रमाहात्म्यमुक्त्वा सेनापतेर्यंत्राणां त्वरामाह क्षणे इति । दौलतो यः सैन्यपालः सेनापतिः तस्य यंत्राग्र्याणि यंत्रश्रेष्ठानि तेषां वक्त्राणि मुखानि तेषां अंबरतः अवकाशतः क्षणे क्षणे सहस्रं सहस्रसंख्या। एतेन त्वरा द्योतिता । अयस्मयाः लोहमयाः यद्यपि अयस्मयादीनि छंदसीति एतस्य छंदसि साधुत्वं तथापि निरंकुशाः कवयः यद्वा अयोमया इति पाठ्यं । कपित्थतुल्याः कपित्थप्रमाणाः तप्ततराः करालाः भयंकराः गोलाः गोलकाः रणे संगरे विनिर्यांति गच्छंति ॥ १४ ॥

अथ होळकराख्यस्य सेनापतेर्नामनिरुक्तिमाह अनादर इति । यद्यस्मात् असौ सेनापतिः हुडृ होडृ अनादर इति धातोरुत्पन्नः होड इति शब्दः अनादर इति प्रसिद्धः । रणे संग्रामे रिपोः तं होडं अनादरं विधत्ते करोति ततः होळकरोपनामा डलयोरभेदादिति भावः । तव पताकिनीनां अधिपः आस्ते ॥ १५ ॥

अथ पानसिकशब्दनिरुक्तिमाह पनसेति । पनसानां फलानि पनसानि फलेलुक् तानि उपमा येषां ते पनसोपमाः स्थौल्ये पनसफलतुल्याः इति अर्थः पनसोपमा ये लोहगोलकाः ते लक्षणया पनसाः तैः तोफांतर्गतैरित्यर्थः रिपून् प्रहरंति यत् तस्मात् पानसिका इति अभिधा येषां ते पानसिकाभिधाः पनसाः प्रहरणं येषां ते पानसिकाः पनसशब्दात्प्रहरणमिति ठक् प्रत्यये रूपं ते पानसिकाभिधाः तव रिपोः शत्रोः अनीकिनीं सेनां जेष्यंति अभिभविष्यंति किल । जि जि अभिभवे इत्यस्य रूपं न तु जि जये इत्यस्य तस्य अकर्मकत्वात् ॥ १६ ॥

पटवर्धनसंज्ञानिरुक्तिपूर्वं तेषां पराक्रममाह यश इति । ये तवेत्यध्याहारः यश एव पटः वस्त्रं तत् वर्धयंति ते वर्धयंतः अतः पटवर्धनसंज्ञकाः संति सेनापतय इत्यर्थः ।

---

६ " अयस्मया " इति वा पाठः ७ " कराः " इति वा पाठः ८ " रणे " इति वा पाठः ९ "अनादरं " इति वा पाठः १० " पदयं नितान्तम् " इति वा पाठः ११ " पानसनामधेयका विजयेरन् रिपुवाहिनीं क्षणात् " इति वा पाठः

सर्वां शत्रुपताकिनीमुपगतां संमज्जयेयुः क्षणात* ॥
यशःपटं वर्धयन्तः पटवर्धनसंज्ञकाः ।
अगस्त्यांस्तानहं मन्ये रिपुसेनांबुधेस्तव ॥ १७ ॥
रास्तेऽन्ये तु धनान्विता इति धनाधिक्यावबोधार्थकं
यद्वाक्यं धनिनो धनस्य गदितं पूर्वैरभेदेन यत्
रास्तेनामधरा धनेन च बलेनाप्यन्वितास्ते हिता
हन्युस्तानहितान् द्विजाधिप वृका मेषानिवैतेऽखिलाः ॥१८॥
किं कर्तव्यं क्व गन्तव्यमिति शत्रूनपाठयन्
यस्मात् तस्मादिमे वीराः पाठनादिकराः स्मृताः ॥ १९ ॥
प्राग्दिग्भवः सकलराजवरप्रपूज्यो यस्याज्ञयैव यतसे यतसेवकस्त्वम्
बाणैर्दहेच्छिखिशिखैरभितः क्षणेन सेनातृणौघममितं किल दुर्जनस्य२०॥
यो गुर्जरेषु विषयेषु वसत्यखण्डमाखण्डलादिसदृशानपि जेष्यतीह
भूपाधिपस्य यश उज्ज्वलमत्र तन्वन् वायुर्घनौघमिव बारयिता स एनम्

अहं तान् पटवर्धनान् रिपुर्यवनः तस्य सेनैव अंबुधिः समुद्रः तस्य अगस्त्यान् मन्ये अंबुधेरित्येकवचनेन अगस्त्यानिति बहुवचनेन अगस्त्यतुल्यानां सर्वेषां तेषामेकः सेनांबुधिरगणनीय इति भावः ॥ १७ ॥

अथ रास्तेशब्दनिरुक्तिपूर्वं तेषां पराक्रममाह रास्ते इति । ते वीराः राः धनमेव । रैस्त्रियां धने इत्यमरः । अन्ये तु धनेन अन्विताः युक्ताः इति पूर्वैः प्राचीनैः कैश्चिद्धनाधिक्यस्य अवबोधनार्थकं धनिनः धनस्य च अभेदेन गदितं अतः रास्तेनामधरा धनेन च बलेन च सैन्येन चान्विताः ते हिताः एते वीराः हे द्विजाधिप वृकाः मेषानिव तान् अहितान् हन्युः ॥ १८ ॥

अथ पाठनकराभिधानां संज्ञानिरुक्तिमाह किमिति । इमे वीराः यस्माद्धेतोः शत्रून् किं कर्तव्यं क्व गंतव्यमित्यपाठयन् तस्माद्धेतोः पाठनादिकराः पाठनशब्दः आदिः उच्चारणे येषां ते पाठनादयः पाठनादयश्च ते कराश्च पाठनादिकराः पाठनकराख्याः इत्यर्थः स्मृताः एतेन पराक्रमोऽपि दर्शित एव ॥ १९ ॥

प्राग्दिग्भव इति । यताः नियमिताः सेवकाः येन सः त्वं यस्य आज्ञयैव यतसे यत्नं करोषि । सकलराजवरप्रपूज्यः सः प्राग्दिग्भवः नागपुराधिपः राजा शिखिनो वन्हयः त एव शिखा येषां ते शिखिशिखाः तैः बाणैः दुर्जनस्य अमितं सेनातृणौघं अभितः दहेत् शिखिशिखाभिरसाविति पाठे शिखिशिखाभिः बाणैः इति अभेदेन विशेषणविशेष्यभावः ॥ २० ॥

अथ निंबालकरसंज्ञानिरुक्तिं लोके निंबाळकर इति प्रसिद्धानां तेषां पराक्रममाह

* एकस्मिन् पुस्तके इदमांधिकं पद्यं वर्तते. १२ "शिखाभिरसौ" इति वा पाठः

कर्णं प्रदानेन नयेन धर्मं धनेन देवं धनदं जिगाय
भीष्मं प्रतापेन स एष वीरो जेता रिपोरस्य गुणैकधाम
प्रतिपथं प्रचरंति पुरः सदा यदथ तस्य सुगानपरा नराः
तदिह गायकवाङ्यमुच्यतेऽथकनभावकरी जनमूढता *
दारान् बालवियोजितान् प्रतिरणं कुर्वन्ति यत्त्वाद्विपो-
र्निर्बालादिकराभिधास्तत इमे हंतार एतच्चमूम्
सर्वैर्वीरवरैः समेत्य पुरतो यातु प्रभो दौलतः
सेनानीकपपालको रिपुजये यो मध्यमः पांडवः ॥२१॥

उक्त्वा स इत्थं द्विजसत्तमेन नामाभिधो मन्त्रिवरार्चिताङ्घ्रिः
प्रस्थापयामास सहस्रतोऽपि तं दौलतं सैन्यससङ्घयुक्तम् §
निज़ामं निजं मन्दिरं यापयित्वा मशीरं ससीरानुजो रुक्मिराजम्
भटानां समाजादजामाजहेव त्वदग्रे सदग्र्येश पश्यानयामि ॥ २२ ॥
स इत्थं वचो दौलतः सैन्यपालो लपित्वा च नत्वा प्रतस्थे स्थितः सन् ।
करीन्द्रे महेंद्रस्य काष्ठां लघिष्ठां प्रकुर्वन् जिजैयैत्रसंघैर्गरिष्ठैः[14] ॥ २३ ॥

दारानिति । यत्त्वद्विपोः दारान् प्रतिरणं बालैः केशैः वियोजितान् रहितान् कुर्वंति ततस्मान्निर्बालशब्दः आदिः प्रथमं उच्चारणे यस्य स चासौ करश्च निर्बालादिकर. निर्बालादिकरः इति अभिधा येषां ते निर्बालादिकराभिधाः इमे एतस्य चमूं हंतारः । प्रासंगिकं समाप्य प्रकृतमनुसरति । हे प्रभो यः रिपुजये मध्यमः पांडवः अर्जुनः सः सेनानीकपपालकः दौलतः सर्वैः पूर्वोक्तैः वीरवरैः समेत्य पुरः अग्रे प्रयातु ॥ २१ ॥

अथ द्वाभ्यां दौलतस्य सेनापतेः प्रयाणमाह निजाममिति । साधुषु अग्र्याः श्रेष्ठाः सदग्र्याः तेषां ईशः एतेन तव पुण्यपुरुषस्य महिम्नैव सर्वं सेत्स्यतीति सूचितं । निजामं यवनं निजं स्वकीयं मंदिरं यापयित्वा संप्रेष्य मशीरं तन्मंत्रिणं सीरेण लांगलेन सहितः ससीरः बलरामः तस्यानुजः कृष्णः रुक्मिराजमिव यद्वा अजानां अवीनां समूहः आजं तत् हंतीति आजहा वृकः अजामिव भटानां वीराणां समाजात् त्वदग्रे आनयामि पश्य ॥ २२ ॥

स इति । सः दौलतः सैन्यपालः सेनापतिः इत्थं वचः लपित्वा स्पष्टमुक्त्वा । रप लप व्यक्तायां वाचि । अनंतरं नत्वा करींद्रे स्थितः सन् प्रतस्थे । किं कुर्वन् महेंद्रस्य काष्ठां प्राचीं दिशं । दिशस्तु ककुभः काष्ठा इत्यमरः । अतिशयेन गुरूणीति गरिष्ठानि तैः गुरुशब्दादिष्ठनि प्रियस्थिरेत्यादिना गरादेशः । जिजैयैत्र-संघैर्लघिष्ठां अतिशयेन लघुरिति लघिष्ठा तां अल्पां । अतिशयार्थे इष्ठन् प्रत्ययः । प्रकुर्वन् ॥ २३ ॥

---

* एकस्मिन् पुस्तके इमानि त्रीणि पद्यान्यधिकानि वर्तंते. १३ "सदग्र्येश" इति वा पाठः
§ एकस्मिन् पुस्तके इदमधिकं पद्यमस्ति. १४ "महिष्ठैः" इति वा पाठः

सुभूषिते दन्तिनि विप्रराजः स्थितः प्रतस्थे स्थितिकृज्जनस्य
अमात्यनाथोऽङ्गिरसानुयातो यशोमयूखैर्धवलीकृताशः ॥ २४ ॥
अन्ये होळकरादयोऽपि सकलाः सैन्यैः स्वकार्यैर्वृता
निर्यान्ति स्म पुरः पुरः सुरपुराद्गीर्वाणसङ्घा इव
हृष्टाः पुष्टतुरङ्गवाहविगताश्छत्रैस्तथा चामरै-
र्बर्हैश्चापि कलापिनामनुसृता नानातपत्रैरपि ॥ २५ ॥
कूलङ्कषायाः स सिनाभिधायाः खर्याश्चमध्ये पृतनां स्वकीयाम्
अवासयद्वा सुरनिम्नगेव बभौ सरिद्युग्मगता तता सा ॥ २६ ॥
निजामभूपो द्विगुणेन युक्तः सैन्येन वीरैर्बीहिश्वैरसङ्ख्यैः
धनेन धान्येन च वृद्धिभाजा विनिर्ययौ भाग्यपुरात् समन्त्री ॥ २७ ॥

अथ माधवरायस्य प्रयाणमाह सुभूषित इति । जनस्य स्थितिं पालनं करोतीति स्थितिकृत् विष्ण्वंशत्वादिति भावः । अन्यत्र अमृतकिरणत्वादिति भावः । अमात्य नाथो नानाभिधो मंत्री स एव अंगिरा बृहस्पतिः तेन अनुयातः यशांस्येव मयूखा तैः धवलीकृताः आशाः येन विप्राणां राजा माधवः अन्यत्र चंद्रः सुभूषिते दंतिनि स्थितः सन् प्रतस्थे । रूपकालंकारः ॥ २४ ॥

अन्ये इति । हृष्टाः अतीवधनलाभादिति भावः पुष्टा ये तुरंगवाहा अश्वारोहाः तैः विगताः अनुधाविताः । यद्वा पुष्टा ये तुरंगा ते एव वाहाः वाहनानि तेषु विगताः अश्वारूढा इत्यर्थः । छत्रैः चामरैः कलापिनां मयूराणां बर्हैश्च अनुसृताः राजचिन्हधारिण इत्यर्थः । तस्मिन् यवनाक्रांते देशे ब्राह्मणानां महती पीडा आसीत् तथा च पशूनां पक्षिणां च । तद्वारणार्थं ब्राह्मणाधिपेन चंद्रेण स्मरणार्थं स्वसदृशानि छत्राणि सह दत्तानि सर्वपशुश्रेष्ठाभिर्गोभिः स्वबालचामराणि सर्वपक्षिश्रेष्ठैः मयूरै-स्तावत्स्वबर्हाणि तैरनुसृताः । अन्ये होळकरादयोऽपि सकलाः सेनापतयः स्वकार्यैः सैन्यैर्वृताः संतः पुरः पुण्यनगर्याः सकाशात् पुरः माधवस्याग्रे इत्यर्थः सुरपुरात् अम-रावत्याः गीर्वाणसंघा इव निर्यांति स्म ॥ २५ ॥

कूलंकषाया इति । सिना इति अभिधा यस्याः सा सिनाभिधा तस्याः कूलं-कषायाः नद्याः खर्याः खरीसंज्ञाया नद्याश्च मध्ये स्वकीयां वा पृतनां सेनां अवासयत् निवेशितवान् । ततः विसृता सा सेना सरितोर्यमुनासरस्वत्योः युग्मं तत्र गता सुर-निम्नगेव भागीरथीव बभौ ॥ २६ ॥

अथ यवनाधिपस्य सेनानिवेशमाह निजाम इति । निजामभूपः द्विगुणेन माधवसैन्या-दित्यर्थः सैन्येन तत्र गतैरसंख्यैर्वीहिश्वैर्यवनैर्वृद्धिभाजा धनेन धान्येन च युक्तः सन्

---

१५ " मितंगमे " इति पाठः

तद्यौवतं वारणसंनिविष्टं जरन्तमेतं प्रययौ समेतम्
एकांगनो दाशरथिः प्रवासे वैकल्यमापास्य कथात्र का वा ॥ २८ ॥

विख्यातं खरडाभिधं भुवि पुरं क्षाराल्पपाथःपदं
यस्मिन् मे वसतिः स्ववर्गसहितस्यासीत् समा द्वादश
तं ग्रामं निकषा निजामनृपतिः सेनासमुद्रान्वित-
स्तस्थौ सर्वसमृद्धिपूरभरितो वार्भिर्विना सर्वतः ॥ २९ ॥

वीरास्ते मिलिताः समे प्रतिदिनं पश्चान्मुखा लोमशाः
संध्यायां दिवसेश्वरास्तसमये वाचा रटन्तः शठाः
गाढामीलितलोचना भुवि विपर्यस्तोरवो कुर्वतः
स्वीयं धर्ममपांपतिं ननु तदायाचन् तृषार्ता जलम् ॥ ३० ॥

मंत्रिणा सहितः समंत्री भाग्यपुरात् विनिर्ययौ ॥ २७ ॥

तदिति । वारणेषु गजेषु सन्निविष्टं । समेतं अव्यवधानेन स्थितमित्यर्थः युवतीनां समूहो यौवतं तद्यौवतं तरुणीसंघः । शत्रंताद्युवतीशब्दादनुदात्तादेरञ् यस्येति चेती-कारलोपः । जरंतं वृद्धमनुपयुक्तमिति भावः । जीनो जीर्णोजरन्नपीत्यमरः । एतं निजामं प्रययौ एका अंगना यस्येत्येकांगनः दाशरथी रामः प्रवासे विकलस्य भावः वैकल्यं संकटमित्यर्थः आप अस्य मनुजस्य अत्र प्रवासे का कथा बहुभार्यस्येत्यर्थः ॥ २८ ॥

विख्यातमिति । क्षारं तदपि अल्पं यत् पाथः उदकं तस्य स्थानं खरडमिति अ-भिधा यस्येति खरडाभिधं पुरं भुवि विख्यातमस्ति यस्मिन् पुरे स्वः स्वकीयो यो-वर्गः समुदायः तेन सहितस्य मे द्वादश समाःवर्षाणि । वर्षा अथ शरत्समा इत्यमरः । वसतिः आसीत् केनाचित् कारणेनेति भावः। वार्भिः उदकैर्विना सर्वेषां पदार्थानां पूरेण भरितः निजामनृपतिः तं ग्रामं निकषा समीपे । अभितः परितः समया निकषा हा प्रतियोगेपीति द्वितीया । सेनासमुद्रेण अन्वितः सन् तस्थौ ॥ २९ ॥

वीरा इति । संध्यायां संध्याकाले दिवसेश्वरस्य सूर्यस्य अस्तसमये मिलिताः एकत्र संगताः लोमानि येषां ते लोमशाः। लोमादिपामादिपिच्छादिभ्यः शने लच इति शस् । शठाः धूर्ताः वाचा वागिंद्रियेण रटंतः भाषमाणाः गाढं आमीलिते लोचने यैस्ते गाढामीलितलोचनाः पश्चात्पश्चिमदिशि मुखं येषां ते तथोक्ताः ते समे सर्वे । समश-ब्दस्य सर्वपर्यायस्य सर्वादिगणे पाठात् जसः शीभावः । यद्वा भुवि समे समप्रदेशे इति योजना वीराः यवनाः भुवि विपर्यस्ताः विपरितं स्थापिताः ऊरवो यैस्ते तथा-भूताः संतः प्रतिदिनं स्वीयं स्वकीयं धर्मं अकुर्वत । तत्र उत्प्रेक्षते । तृषा पिपासया आर्ताः संतः अपांपतिं वरुणं जलं अयाचन् ननु वरुणादिङ्मुखत्वात् वरुणं जलार्थं प्रार्थयंतीवेत्यर्थः ॥ ३० ॥

---

१ १ " रमश्रुलाः " इति वा पाठः ।

भास्वच्चण्डमयूखतप्ततनवो गौराननास्ते भटाः
क्वास्ते जीवनमत्र हा प्रतिदिनं व्यादाय वक्त्रं जगुः ।
अन्ये प्रोचुरहो इहागतनरस्याक्ष्णोः प्रभूतं जलं
नित्यं संक्षरति क्षणे क्षण इदं द्रष्टव्यमन्यत्र हि ॥ ३१ ॥

यवनपः स तदा निजमन्त्रिणं समवदद्वदतां धुरि संस्थितः ।
अमरुरेष मरुः प्रतिभाति मे जनपदो जनसंहतिमारकः ॥ ३२ ॥

जनपदे मम ते रिपवः स्थितास्तटवतीयुगमप्यखिलं श्रितम् ।
रणभवा हि मृतिः परलोकदा जलविहीनमृतिर्नरकप्रदा ॥ ३३ ॥

आस्ते भीमरथी सुधासमजला ग्रीष्मेऽपि पूर्णोदकै-
र्यस्या दर्शनतो जनित्रयभवं पापं लयं याति च ।
श्रीमच्छंकरघर्मसम्भवतनुर्यस्यास्तटे संस्थिता
लोका नाकमनल्पकं करगतं नैवाद्रियन्तेऽखिलाः ॥ ३४ ॥

भास्वादिति । भास्वान् सूर्यः तस्य ये चंडाः कठोराः मयूखाः तैः तप्ताः तनवो येषां ते तथा भूताः । गौराणि आननानि येषां ते गौराननाः ते भटाः अत्र अस्मिन् प्रदेशे जीवनं उदकं क्वास्ते इति प्रतिदिनं वक्त्रं व्यादाय प्रसार्य जगुः अहो इत्याश्चर्ये । ओदिति प्रगृह्यसंज्ञायां प्रकृतिभावः । इह अस्मिन् प्रदेशे आगतस्य नरस्य अक्ष्णोः अक्षिसंबंधि प्रभूतं प्रचुरं जलं नित्यं क्षणे क्षणे क्षरति तद् द्रष्टव्यं अन्यत् भूगतं न हि इति अन्ये प्रोचुः ॥ ३१ ॥

यवनप इति । वदतां वक्तॄणां श्रेष्ठः स यवनपः निजामः मंत्रिणं मशीरं इत्यवदत् इति किं न मरुः अमरुः एषः जनपदः देशः मे मह्यं जनसंहतिमारकः मरुः प्रतिभाति भासते ॥ ३२ ॥

जनपद इति । ते रिपवः मम जनपदे मदीये देशे स्थिताः मद्देशस्तैराक्रांत इति भावः । किं च अखिलतटवतीयुगं नदीद्वयं तैः श्रितं । रणभवा मृतिः परलोकदा जलविहीनस्य या मृतिः जलं विना मरणमित्यर्थः नरकप्रदा हि ॥ ३३ ॥

एवमुक्त्वा अत्रोपायमाह द्वाभ्यां आस्ते इति । श्रीमान् यः शंकरः साबः तस्य यो घर्मः स्वेदः तस्मात् संभवा तनुर्यस्याः सा तथोक्ता सुधया समं जलं यस्याः सा ग्रीष्मेऽपि पूर्णा भीमरथी नाम नदी आस्ते वर्तते यस्याः दर्शनतः दर्शनात् जनित्रयभवं पापं लयं नाशं याति च । यस्यास्तटे संस्थिताः अखिलाः लोकाः जनाः न अल्पः अनल्पः अनल्प एव अनल्पकः तं यद्वा अनल्पं कं सुखं यस्मिन् सः अनल्पकः तं । सुखशीर्षजलेषु कमिति विश्वः । करगतं हस्तप्राप्तं स्वर्गं नैव आद्रियंते न मन्यंते स्वर्गस्य का कथा मुक्तिमपि एतस्याः प्रसादात् साधयाम इति

१० "भिक" इति वा पाठः १८ "हि" इति वा पाठः

यातव्या तटिनी सुरासुरनुता देशे स्थिता शात्रवे
श्वः सेनापतिरेष यातु पुरतो मार्गं प्रकुर्वन् बली
निर्बालादिकरः स्वसैन्यसहितो बाजीति नाम्नोदितो
वीरा मे यवनाधिपाः कवचिनो निर्यान्तु सर्वेऽपि च ॥ ३५॥
इत्थं मन्त्रितमन्त्रमाशु चरतः श्रुत्वा स नानाभिधो
मन्त्री सैन्यपतिं रिपुंजयमिदं वृत्तं निवेद्याब्रवीत् ।
श्वो याता रिपुवाहिनी जितरिपो भीमातटं तत् त्वया
रोद्धव्या सह सैनिकैरतिबलैर्मार्गो न देयस्तथा ॥ ३६ ॥
परशुराम इति प्रथितः क्षितौ सकलसैनिकपालकनायकः ।
वचनमस्य निशम्य पुरो ययौ तुरगसादिभटैः समनुद्रुतः ॥ ३७ ॥
सेनाधिपो यवनपस्य स बाजिनामा विप्राधिपस्य च बली पटवर्धनाख्यः
वीरैर्निजैः कवचिभिः करवालहस्तैर्युक्तो समेत्य समरे युयुधात इत्थम् ॥३८
अयुध्यतां श्येनवरौ वृषौ वा यथोरणौ वा करिणौ वनस्थौ ।
भीष्मार्जुनौ वा युधि रामभीष्मौ सुयोधनो वा मरुदात्मजेन ॥३९॥
भास्वच्चण्डमयूखसङ्गतिसमुद्यातप्रभोद्भासुरै-
र्निस्त्रिंशैः करवालकैर्युयुधिरे खड्गैस्तथा पट्टिशैः ।

वांच्छंति इति भावः ॥ ३४ ॥

यातव्येति । शत्रूणामयं शात्रवस्तस्मिन् देशे स्थिता सुरासुरैः नुता । सा तटिनी भीमरथी यातव्या गंतव्या । निर्बालादिकरः निर्बालकरोपनामा बाजीति नाम्ना उदितः स्वसैन्येन सहितः बली बलवान् एषः मे सेनापतिः मार्गं प्रकुर्वन् सन् श्वः यातु गच्छतु । मे वीराः सर्वे कवचिनः यवनाधिपा अपि निर्यांतु गच्छन्तु ३५

इत्थमिति । सः नानाभिधः मंत्री इत्थं उक्तप्रकारेण मंत्रितश्चासौ मंत्रश्च मंत्रितमंत्रः तं भीमरथीतीरप्रयाणरूपं चरादिति चरतः दूतात् आशु श्रुत्वा रिपुं जयतीति रिपुंजयः तं सेनापतिं परशुरामं पटवर्धनोपनामानं निवेद्य इत्यब्रवीत् इति किं हे जितरिपो श्वः रिपुवाहिनी भीमातटं याता यास्यति तत् तस्मात् त्वया अतिबलैः सैनिकैः सह रोद्धव्या तथा मार्गो न देयः ॥ ३६ ॥

अथ नानाभिधस्य मंत्रिणोऽनुज्ञामादाय परशुरामः सेनापतिः किं चकारेत्याह परशुराम इत्यादिभिश्चतुर्भिः ॥ ३७–३८ ॥

उरणौ मेषौ । रामभीष्मौ परशुरामभीष्मौ अंबाविवाहविषये । शेषं सुगमं ॥ ३९ ॥

एवं बाजिपरशुरामयोर्द्वंद्वयुद्धमुक्त्वा तयोर्वीराणां युद्धमाहैकेन भास्वदिति । जये उद्यतं मनसः वृत्तं वर्तनं येषां ते तथोक्ताः शोभनं वृत्तं येषां ते सुवृत्ताः ते अन्ये वीरवराः भास्वान् सूर्यः तस्य कठोराः ये मयूखाः कराः तेषां संगतिः संगमः तेन समुद्या-

अन्ये वीरवरा जयोद्यतमनोवृत्ताः सुवृत्ताश्च ते
हत्वान्योन्यमथो सुरेन्द्रभवनं यातास्तदा प्रायशः ॥ ४० ॥
रामस्य वीरा बहवः प्रयाता दिवं समीक्ष्यैव स दौलताव्हः
लयोदिताम्भोधरगार्जितास्तास्तोफा युयोजातिबलो बलाढ्यः ॥४१॥
कपित्थफलसन्निभा अपि च कन्दुकाभाः परे
खगा इव दिनात्यये झटिति संहताः स्वाश्रयम् ।
सुयन्त्रमुखनिर्गता अविरतं तदा गोलका
निजामपृतनां ययुर्विदलितध्वजच्छत्रकाः ॥ ४२ ॥
अनेकमेघोद्गतभानुबिम्बाः सहस्रशः पश्चिमदिक्प्रदेशात् ।
निमेषतश्चेद्युगपत् व्रजेयुः सुरेश्वराशामुपमा तदैषां ॥ ४३ ॥
शिखाविरहिताः परे शिखिशिखाभवक्त्रानिषू
स्तुरङ्गवरसंस्थिता झटिति मुञ्चमाना रणे-
निपेतुरनले भृशं शलभसङ्घवत् संङ्घशः
स्वमण्डलभिदाभयादिव ययौ रविः स्वं गृहम् ॥ ४४ ॥
प्राच्या नागपुराधिपा अपि तदा बाणैरसंख्यै रिपून् ।
वीरा होळकाराश्च कुन्तनिचयैस्ते विंचुरस्था अपि ।

ता उद्गता या प्रभा तया उद्भासुरैः अतिशोभनैः निस्त्रिंशैः करवालकैः खड्गैः पट्टिशैश्च एते सर्वखड्गानां अवांतरभेदाः युयुधिरे ते अन्योन्यं परस्परं हत्वा तदा प्रायशः बाहुल्येन सुरेंद्रभवनं याताः रणे अभिमुखं हतत्वादिति भावः ॥ ४० ॥

अथ दौलताभिधस्य सेनापतेः युद्धोपक्रममाह यावत्समाप्ति रामस्येति । रामस्य परशुरामस्य ॥ ४१ ॥ कपित्थेति ॥ ४२ ॥

बिंबाः मंडलानि । बिंबोऽस्त्री मंडलं त्रिषु इत्यमरः । सुरेश्वराशां प्राचीं अभूतोपमेयं ॥ ४३ ॥

शिखेति । तुरंगवरेषु संस्थिताः शिखाभिः विरहिताः यवनाः परे शत्रवः रणे शिखिनोऽग्नेः शिखा इव ज्वाला इव आभा येषां तानि वक्त्राणि येषां ते शिखिशिखाभवक्त्राः तान् इषून् बाणान् झटिति शीघ्रं मुंचमानाः संतः शलभसंघवत् संघशः अनले तोफाग्नौ निपेतुः एवं स रविः स्वमंडलस्य भिदा भेदः तस्मात् यत् भयं तस्मा दिवेत्युत्प्रेक्षा स्वं स्वकीयं गृहं अस्ताचलं ययौ सूर्यास्तोभूदित्यर्थः ॥ ४४ ॥

अथ अस्तानंतरं युद्धमाह प्राच्य इति । तदा अस्तानंतरं प्राच्यः प्राग्दिग्भवाः नागपुराधिपाः राजानः असंख्यैः बाणैः । होलकरा वीराश्च कुंतनिचयैः । अन्ये विंचु-

---

१९ "रामभटा" इति वा पाठः २० "क्ष्येति" इति वा पाठः २१ "द्विजेश" इति वा पाठः २२ " तदा नृपति यन्त्रभूतं भृशा द्विजेशाहितचेतसः सुतकलत्रचिंता न ये" इति वा पाठः

रास्तेऽन्ये पटवर्धना अपि समं ये पानसेनामकाः
सर्वे शत्रुपताकिनीमुपगता प्रारुरुजन् सर्वतः ॥ ४५ ॥
निजामयोषा विगतप्रहर्षा निरस्तभूषाः परिलब्धशोषाः ।
रिपौ सरोषा अभवन्नशेषा गताङ्गपोषाः सलिलैकघोषाः ॥ ४६ ॥
अल्लाद्य भल्ला बहुला इहापि प्रयांति सल्ला यदि तद्वरं हा ।
फुल्ला इवाभांति पलाशवृक्षा मल्ला इति प्रोचुरमुष्य योषाः ॥४७॥
प्रकम्पना भूमिरजः प्रगृह्य प्रतिक्षणं धूमचयं तथा च ।
निजामसेनां सकलामनन्धामन्धां चकार प्रभयां भृशार्ताम् ॥४८॥

रस्याः सेनापतयः रास्तेऽन्ये पटवर्धनाः ये पानसेनामकास्ते सर्वेऽपि वीराः उपगतां शत्रुपताकिनीं रिपुसेनां समं सार्धं सहैवेति यावत् सर्वतः सर्वप्रदेशैः प्रारुरुजन् अपीडयन् ॥ ४५ ॥

निजामेति । विगतः प्रहर्षो यासां ताः विगतप्रहर्षाः । निरस्ताः त्यक्ताः भूषाः याभिस्ताः तथोक्ताः । पादचारेण गंतुं त्यक्तसंपच्चिन्हा इत्यर्थः । परिलब्धः शोषो याभिस्ताः परिलब्धशोषाः अत एव सलिलमिति एकः मुख्यः घोषो यासां ताः अत एव गतः अंगानां पोषः पुष्टिः यासां कृशा इत्यर्थः । अशेषाः संपूर्णाः निजामयोषाः रिपौ शत्रौ माधवे सरोषाः अभवन् अतीवदुर्दशाविधानादिति भावः ॥ ४६ ॥

अथ तासां भाषणमाहैकेन अल्लेति । अद्य अस्मिन् दिवसे इहाऽपि अस्मदीये अतिदूरेऽपि स्थानेऽपि बहुलाः प्रचुराः भल्लाः बाणाः प्रयांति । तस्मात् हे अल्ला हे भगवन् । संकटे हि सर्वे स्वदेवतां स्मरंति । यद्वा हे अल्ल हे अंब । संकटे हि मातरं स्मरंति । अंबार्थनद्योर्ह्रस्व इति ह्रस्वः । यदि सल्लाः साम अयं शब्दः तद्भाषया साम्नि रूढः यद्वा । सतः साधून् लाति आदत्ते इति सल्लाः समल्ला ला आदाने अस्मात् क्विपि रूपं । स्यात्तर्हि हा इति खेदे वरं युक्तं । एते मल्लाः विकसिताः पलाशवृक्षा इव आभांति शोभंते रक्तस्रावादिति भावः इति अमुष्य निजामभूपस्य योषाः समूचुः वदंति स्म ॥ ४७ ॥

अथ प्रतिकूलदैवस्य सर्वेऽपि प्रतिकूला भवंतीत्याह प्रकंपन इति । प्रकंपनो महावातः । झंझावातः सवृष्टिक इत्यमरः । भूमिरजः धूलिं तथा च धूमचयं तोफासंबंधीत्यर्थः क्षणे क्षणे इति प्रतिक्षणं प्रगृह्य प्रकृष्टं भयं यस्याः सा प्रभया तां अत एव भृशं आर्तां तां अनंधामपि तां सकलां निजामसेनां अंधां चकार ॥ ४८ ॥

---

२३ " सर्वशः " इति वा पाठः २४ फुल्लाञ्जनेत्रा यवनाधिपस्य योषाः समूचू रवितप्रगल्भाः " इति वा पाठः २५ " चयश्च सर्वशः " इति वा पाठः २६ " द्विजाति " इति वा पाठः

ऐन्द्रीपतिस्त्रिभुवनेऽहमयं ममैतन्नाम्ना चरत्यखिलभूमितले ततोसौ ।
दण्ड्यो ममेति किमु देवपतिर्ददाह तां वाहिनीं यवनपस्य धनंजयेन ४९

वारुणीप इति नाम भूतले नान्यगामि यदयं निगद्यते ।
वारुणीप इति किं कृतोंभसामीश्वरेण रहितो जलैरयम् ॥ ५० ॥

अस्तं गते दिनकरे तमसि प्रगाढे विद्धः पुरो रिपुशरैर्विनिपीतरक्तैः ।
पश्चाच्च यौवतमुखोद्गतवाक्यबाणैस्तिर्यग्दिगन्तमगमान्निजरक्षणार्थम् ॥५१॥

निजामभूपेऽपसृते प्रतापो निराश्रयः साकमगादिनेन ।
अकीर्तिरालब्धपदास्य सेनां समाससादाथ तमिस्रवेषात् ॥ ५२॥

चण्डैश्चण्डकरः प्रताप्य किरणैरस्तं गते यामिनी
प्रोक्तेवाखिलवाहिनीं स्वतमसा गाढेन च ध्यानशे ।

ऐंद्रीति । अहं इंद्रस्य इयं ऐंद्री पूर्वा दिक् तस्याः पतिः त्रयाणां भुवनानां समाहारः त्रिभुवनं तस्मिन् त्रिभुवने । पात्रादित्वान्ङीबभावः । अस्मि इत्यध्याहारः । अयं यवनपः मम एतन्नाम्ना ऐंद्रीपतिनाम्ना अखिलभूमितले चरति ततः हेतोः असौ मम दंड्यः इति हेतोः देवपतिः इंद्रः यवनस्य तां वाहिनीं धनंजयेन अग्निना तोफाबाणसंभूतेन । वीतिहोत्रो धनंजय इत्यमरः । यद्वा धनंजयेन अर्जुनसदृशेन दौलताख्यसेनापतिना हेतुभूतेन ददाह ॥ ४९ ॥

एवमिंद्रस्य कोपे हेतुमुक्त्वा वरुणस्य कोपे हेतुमाह वारुणीप इति । वरुणस्य इयं वारुणी पश्चिमा दिक् तां पातीति वारुणीप इति नाम भूतले अन्यगामि न एवं सति यत् अयं वारुणीं मदिरां पिबतीति वारुणीपः इति जनैः इति शेषः इति निगद्यते अर्थतः साम्याभावेऽपि शब्दतः साम्यमाश्रित्य उत्प्रेक्षा अतः अंभसां ईश्वरेण वरुणेन जलैः अलं अत्यंतं रहितः कृतः किमित्युत्प्रेक्षा ॥ ५० ॥

अस्तमिति । दिनकरे सूर्ये अस्तं गते सति अत एव तमसि अंधकारे । तमिस्रं तिमिरं तम इत्यमरः । प्रगाढे दृढे सति । पुरः अग्रे विनिपीतं रक्तं यैस्तैः रिपुशरैर्विद्धः शरैरित्युपलक्षणं यंत्रादिगोलकैश्च । पश्चात् यौवतं तरुणीसंघः तस्य मुखेभ्यः उद्गताः ये वाक्यबाणाः दुर्वचोबाणास्तैर्विद्धः अतः निजस्य स्वस्य रक्षणमेव अर्थो यस्य सः यवनपः तिर्यग्दिगंतं विदिशां ईशानदिशामित्यर्थः । अगमत् पुरःपश्चाच्च गंतुमशक्यत्वात्तिर्यगपससारेत्यर्थः ॥ ५१ ॥

निजामेति । निजामभूपे अपसृते सति प्रतापः निराश्रयः सन् इनेन श्रेष्ठेन माधवेन साकं यद्वा इनेन सूर्येण साकं सार्धं । साकं सार्धं समं सहेत्यमरः । रणादपसृतं वीरं विहाय प्रतापः गच्छतीति स्पष्टमेव । पूर्वं युद्धात् पूर्वं अकीर्तेः पदं नासीत् अथ यवनपापसरणानंतरं आसमंताल्लब्धं पदं यया सा अकीर्तिः तमिस्रस्य तिमिरस्य वेषात्

२७ "प्रतम्" इति वा पाठः

दुर्दैवस्य नरस्य घातनविधौ योषा [28]यतंते भृशं
दीर्घातप्ततपःप्रभावमहतां विद्योततां का कथा ॥ ५३ ॥
चन्द्रज्योतिरनेकचन्द्रकिरणप्रस्तोमसन्दर्शितो-
त्तुङ्गाग्रं निजदुर्गपालपतिना ध्वान्तावृतं सर्वतः ।
म्लेच्छाधीशपतिर्विवेश युवतीसङ्घेन युक्तोचिराद्
दुर्गं भानुभयादुलूक इव तच्छीताद्रिसानोर्बिलम् ॥ ५४ ॥
हस्तग्राहं गृहाण त्वरितमिति तदा चोदितो माधवेन
श्रीमान् सेनाधिनाथस्तुरगिभटवरैर्दौलताह्वो रुरोध ।
[29]दुर्गे तं म्लेच्छपालं सचिवचययुतं स्वन्नपानैर्विहीनं
दीनं जीनं सलीलं विलुलितपृतनं पाहि पाहि ब्रुवाणम् ॥५५॥

अस्य यवनपस्य सेनां समाससाद ॥ ५२ ॥

चंडैरिति । चंडकरे सूर्ये चंडैः कठोरैः किरणैः प्रताप्य संतापं दत्वा अस्तं गते सति यामिनी रात्रिः प्रोक्तेव बोधितेव । अहं गच्छामि त्वमेतत्सेनां पीडयेति बोधितेवेत्यर्थः अखिलवाहिनीं संपूर्णां सेनां गाढेन दृढेन स्वतमसा स्वांधकारेण व्यानशे विव्याप तथा हि योषः स्त्रियः दुर्दैवस्य हतभाग्यस्य नरस्य घातनविधौ भृशं अत्यंतं यतंते यत्नं कुर्वंति दीर्घं आसमंतात् तप्तं यत्तपः तस्य प्रभावः सामर्थ्यं तेन महतां श्रेष्ठानां अतएव विद्योततां प्रकाशमानानां माधवादीनां का कथा ते दुर्दैवं रिपुं घातयेयुरत्र किमाश्चर्यमित्यर्थः ॥ ५३ ॥

चंद्र इति । म्लेच्छाधीशपतिर्निजामभूपः । निजः स्वकीयो यो दुर्गपालानां पतिः नायकस्तेन । चंद्र इव ज्योतिः तेजः यासां ताः चंद्रज्योतिषः चंद्रज्योतिःसंज्ञा गंधकबहुदारुपूर्णाः शरावा हवया इत्यपराभिधास्ता एव अनेकचंद्राः तेषां किरणास्तेषां प्रस्तोमः समूहः तेन संदर्शितं उत्तुगं अग्रं यस्य तत् सर्वतः आसमंतात् ध्वांतेन आवृतं तत् प्रसिद्धं दुर्गं भानुभयात् नानाख्यमंत्रिभयात् भानुरिति नानाख्यस्योपनाम अन्यत्र भानुभयात् सूर्यभयात् उलूकः दिवाभीतः शीताद्रेः हिमालयस्य सानोः शिखरस्य । स्नुः प्रस्थः सानुरास्त्रियामित्यमरः । बिलमिव युवतीसंघेन युक्तः सन् अचिरात् शीघ्रं विवेश ॥ ५४ ॥

हस्तेति । त्वरितं शीघ्रं हस्तग्राहं गृहाण हस्तेन धृत्वा आनयेत्यर्थः । हस्ते वर्तिग्रहोरिति णमुल् । इति माधवेन चोदितः श्रीमान् वीर्यसंपद्युक्तः दौलताह्वः सेनाधिनाथः तुरगिणः अश्वारोहाः भटाः पदातयस्तेषु ये वराः श्रेष्ठास्तैः । दुर्गे तस्मिन् सचिवानां चयस्तेन युतं । शोभनानि यानि अन्नपानानि तैर्विहीनं अत एव दीनं जीनं वृद्धं विलुलिता पृतना यस्य तं पाहि पाहि रक्ष रक्ष इति ब्रुवाणं तं म्लेच्छनाथं सलीलं

२८ " पि यत्नायते " इति वा पाठः २९ " दुर्गं " इति वा पाठः

योधा अयोधा बहुधा निरुद्धा ययुर्दिगन्तान्निजजीवनार्थाः।
द्विजाधिनाथाधिपकीर्त्तिदूती तान् धर्तुकामा नु[१०] जगाम पश्चात् ॥५६॥
रघूत्तमो नाम सभार्यमेतं सभार्यवर्यो निजगाद मन्त्री।
विलोकितं दुर्यवनं तदेतत् पुरः किमेवं स विचारणीयः ॥५७॥
अमात्य जातं ननु जातमित्त्वा मद्राज्यचिन्हानि पुरोस्य धृत्वा।
स्तुत्वाथ नत्वा सकलं विदित्वा विधेयमायाहि महासुरेशात् ॥५८॥
इत्युक्तवन्तं त्रिशिखाधिनाथं तथेति संभाष्य महासुरेशः।
गत्वा निवेद्यास्य वचः प्रगृह्य रघूत्तमोऽगात् पुनरेव तं सः*
इत्युक्तवन्तं स तथेति चोक्त्वा गत्वा द्विजेशस्य पुरो निधाय।
मुद्रादि तत्प्रोक्तवचः प्रगृह्य ययौ निजामं निजनाथमेषः ॥ ५९ ॥

यथास्यात्तथा रुरोध ॥ ५५ ॥

योधा इति। न निरुद्धाः अनिरुद्धाः बहिर्वर्त्तमाना इत्यर्थः युध्यंत इति योधाः न योधाः अयोधाः ये योधाः योधाभासः उदरभरणार्थं योधवेषधरा इत्यर्थः निजं जीवनं-प्राणरक्षणमेव अर्थो येषां ते तथाभूताः संतः बहुधा बहुप्रकारेण ययुः। द्विजाधिनाथाधिपः माधवः तस्य या कीर्त्तिः सैव दूती तान् धर्तुकामा नु पश्चाज्जगाम। नु वितर्के। नु पृच्छायां वितर्के चेत्यमरः। यं यं देशं भयाद्ययुः तं तं देशं कीर्त्तेर्गमनाद्धर्तुमिव गतेत्युत्प्रेक्षा ॥ ५६ ॥

रघूत्तम इति। सभायां ये आर्याः पूज्याः तेषां वर्यः श्रेष्ठः रघूत्तमो नाम मंत्री भार्याभिः सहितः सभार्यः तं एतं यवनपं इति जगाद। इति किं। तत् एतत् यवनानां आधिर्दुर्यवनं यवनाविनाश इत्यर्थः विलोकितं दृष्टं। अव्ययं विभक्तीत्यव्ययीभावसमासे नाव्ययीभावादतो म्त्व पंचम्या इति सोरमादेशः। सः मशीरः पुरः अग्रे किं अग्रे कथं कार्यं इति विचारणीयः त्वदाग्रहादयमनर्थः सपन्नः अग्रे एतस्य का प्रतिक्रियेति प्रष्टव्यः इत्यर्थः ॥ ५७ ॥

अथ यवनाधिप उत्तरमाह अमात्येति। अमा अन्तिके भवः अमात्यः तत्संबुद्धौ-हे अमात्य मन्त्रिन्। अमांतिकसहार्थयोरित्यव्ययं तस्मात् अव्ययात् त्यबिति त्यप्प्रत्ययः जातं जातं ननु। यज्जातं तज्जातमेवेत्यर्थः। त्वमिति शेषः इत्वा गत्वा मद्राजचिन्हानि मुद्रादीनि अस्य माधवस्य पुरः अग्रे धृत्वा अथ स्तुत्वा नत्वा अग्रे विधेयं किमिति विदित्वा महासुरेशात् माधवात् आयाहि ॥ ५८ ॥

इतीति। इति पूर्वोक्तप्रकारेण उक्तवंतं त्रिशिखाधिनाथं तथेति तथास्तु इति संभाष्य महासुरेशं माधवं गत्वा सर्वं मुद्रादि निवेद्य अस्य माधवस्य वचः प्रगृह्य सः रघूत्तमः

१० " मिव " इति वा पाठः ११ " अस्त्वाशु " इति वा पाठः
* एकस्मिन् पुस्तक इदमधिकं पद्यं वर्तते.

शशंस तद्यद् द्विजदेवदेवप्रोक्तं मशीरश्च धनं त्रिकोटि ।
अयं हि देशः सकलः प्रदेयस्त्वद्राज्यतश्चापि चतुर्थभागः ॥ ६० ॥
तथेति वाचं समुदीर्य सद्यः स्वैर्मन्त्रिणं[३२] दौलतराजपाणौ ।
निवेश्य तस्थौ समुखं महात्मा छित्वाङ्गुलिं दुष्टतमां यथाङ्गी ॥६१॥
सेनापतिस्तं सुदृढं निबध्य भुजङ्गमं तार्क्ष्य इवाग्रजं वा ।
भीमात्मजाया इव यादवेन्द्रो द्रौणिं पृथासूनुरिवागमत् सः ॥ ६२ ॥

मार्जाराननयातमाखुमिव वा मेषं वृकास्यस्थितं
सर्पं तार्क्ष्यमुखस्थितं पशुमिवास्यान्तर्गतं तद्रिपोः ।
सिंहास्यान्तरमागतं च करिणं सप्राणमेनं रिपो-
र्दृष्ट्वा मन्त्रिवरं तुतोष विधृतं पाण्यानने तेन सः ॥ ६३ ॥

तुष्टोऽब्रवीद् द्विजपतिर्निजवीरसिंहं किं देयमद्य भवते सकलं पुरैव ।
दत्तं मदीयवचसा सकला नरास्त्वां वक्ष्यंति पाण्डवमनर्गल मध्यमं त्वां ६४

तं यवनाधिपं पुनः अगात् ॥ ५९ ॥

शशंसेति । यद् द्विजदेवदेवेन माधवेन प्रोक्तं तत् शशंस । तत् किं तदेवाह मशीरः त्रिकोटि धनं अयं यत्र युद्धं जातं सः सकलः देशः त्वद्राज्यतश्चतुर्थः भागः देयः ॥ ६० ॥

तथेति । महान् उदारः आत्मा मनो यस्येति महात्मा यवनाधिपः तथेति । तथास्तु इति वाचं समुदीर्य उक्त्वा सद्यः तत्क्षणमेव न तु विलंबेन । स्वमंत्रिणं मशीरं दौलतराजपाणौ निवेश्य यथा अंगी देहवान् दुष्टतमां केनचिद्दोषेण दूषितां अंगुलिं च्छित्वा सुखं तिष्ठति तथा सुखं तस्थौ ॥ ६१ ॥

सेनेति । सेनापतिर्दौलतः तं मशीरं तार्क्ष्यः गरुडः भुजंगममिव वा इत्यथवा यादवेंद्रः श्रीकृष्णः भीमात्मजायाः रुक्मिण्याः अग्रजं रुक्मिणमिव अथवा पृथायाः कुंत्याः सूनुः अर्जुनः द्रोणस्यापत्यं द्रौणिरश्वत्थामा तमिव अत एव दृढं निबध्य अगमत् ६२

मार्जारेति । सः माधवः मार्जाराननयातं आखुमिव वा इत्यथवा वृकस्य आस्यस्थितं मेषमिव वा तार्क्ष्यमुखास्थितं सर्पमिव वा तस्य गवादेः रिपोः व्याघ्रस्य आस्यांतर्गतं पशुमिव । यद्वा सिंहास्यांतरं आगतं करिणमिव तेन दौलताख्येन पाण्यानने विधृतं सप्राणं सजीवं रिपोः यवनाधिपस्य मंत्रिवरं मशीरं दृष्ट्वा तुतोष ॥ ६३ ॥

तुष्ट इति । द्विजपतिर्माधवस्तुष्टः सन् निजं वीरसिंहं इत्यब्रवीत् । इति किं हे अनर्गल उच्छृंखल भवते अद्य किं देयं पुरैव युद्धात् पूर्वमेव सकलं दत्तमास्ति । तथापि मदीयवचसा सकलाः नराः त्वां मध्यमं पांडवं अर्जुनं वक्ष्यंति ॥ ६४ ॥

---

३२ " स्वं " इति वा पाठः

पुण्यं पुरं सकलपुण्यसमूहमूर्तिर्भेरीनिनादनविनन्दितसर्वलोकः ।
प्रागान् स सैन्यपतिभिः परितः परीतः कीर्तिं विधाय भुवि भूसुरवर्य्यधुर्यः ६५

अध्यास्य पुण्यनगरीं स गरीयसीभिः
सेनाभिरावृततमो विततप्रतापः ।
कार्याणि भारतजनस्य चकार नित्यं
अत्यन्तपुण्यनिचयः किल माधवोऽसौ ॥ ६६ ॥

वर्षे वर्षे वर्षति स्मातिमात्रं वर्षाकाले देवराजो वसूनि ।
वर्षे वर्षे वर्षति स्मातिमात्रं वर्षाकाले विप्रराजो वसूनि ॥ ६७ ॥

यस्मिन् भूवलयप्रपालनपरे वस्त्राद्यभावान्नृपु
प्रालेयातुरता फलाङ्कुरदलैर्वृत्तिश्च दारिद्र्यतः ।
अभ्यङ्गापगमो वनाधिवसती राज्ञो भयान्नैव तत्
सर्वं वानरपुङ्गवेषु सततं दृष्टं मया सर्वतः ॥ ६८ ॥

इत्थं प्रजामिव जनं सकलं ररक्ष चत्वारि विंशतियुतानि च[११] हायनानि ।

पुण्यमिति । सकलपुण्यसमूहमूर्तिः भेरीणां दुंदुभीनां निनादनेन विनंदिताः सर्वलोकाः येन भूसुराणां ब्राह्मणानां मध्ये ये वर्याः तेषां धुर्यः सः माधवः भुवि कीर्तिं विधाय परितः आसमंतात् सैन्यपतिभिः परीतः व्याप्तः सन् पुण्यं पुण्याभिधं पुरं नगरं प्रागात् ॥ ६५ ॥

अध्यास्येति । अतिशयेन गुर्व्यः इति गरीयस्यः ताभिः गरीयसीभिः सेनाभिः आवृततमः विततः विस्तृतः प्रतापो यस्य । अंतं अतिक्रांतः अत्यंतः महान् पुण्यनिचयो यस्य यद्वा अतिशयेन अंतो नाशो यस्यास्तीति अत्यंतः पुण्यनिचयः यस्य सः अत्यंतपुण्यनिचयः अत एव शीघ्रमेवामुं देहं विहाय स्वपदमगात् असौ माधवः पुण्यनगरीं अध्यास्य अधिष्ठाय । अधिशीङ्स्थासां कर्मेति कर्मत्वं । भारतजनस्य भरतखंडलोकस्य एतेन सार्वभौमपदवी सूचिता कार्याणि चकार ॥ ६६ ॥

वर्षे इति । देवराजः इंद्रः वर्षाकाले वर्षे वर्षे खंडे खंडे अतिमात्रं अत्यंतं वसूनि जलानि वर्षति स्म कर्षकानुकूलमेव ववर्ष इति भावः विप्रराजः माधवः वर्षे वर्षे प्रतिसंवत्सरं वसूनि धनानि । वसुर्देवेऽग्नौ रश्मौ च वसु तोये धने मणाविति वैजयंती । ब्राह्मणभूमाविति शेषः वर्षतिस्म ॥ ६७ ॥

यस्मिन्निति । यस्मिन् भूवलयप्रपालनपरे सति नृषु वस्त्राद्यभावात् प्रालेयातुरता शीतपीडा । प्रालेयं मिहिका चाथ हिमानी हिमसंहतिः इत्यमरः । दारिद्र्यतः फलांकुरदलैश्च वृत्तिः अभ्यंगस्य अपगमः राज्ञः भयात् वनाधिवसतिः नो दृष्टा तदेतत् सर्वं मया वानरपुंगवेषु सततं निरंतरं सर्वतः सर्व प्रकारेण दृष्टं नान्यत्र ॥ ६८ ॥

---

११ "च" इति वा पाठः

सर्वो जनः समयमेतमहं च मेने श्रीकृष्णपालितजनैरनुभूयमानं ॥ ६९ ॥

सञ्चोदितः कलिनृपेण स भानुसूनु-
र्नो हन्तुमेतमशकद् द्विजराजिराजम्
पीयूषभानुरपि येन जितो जिगीषु-
र्यस्मिन् बभूव विफलः स गदाधिराजः ॥ ७० ॥

तद्घातचिन्तनकृशीकृतसर्वगात्रः प्रासादमूर्धनि निजैः सखिभिश्चरन्तम् ।
पृष्ठेभिहत्य सुदृढं स्वयमेव देही भूमावपातयदमुं जनताप्रपालं ॥ ७१ ॥
हा हन्त हन्त पतितोयमिति ब्रुवाणे सर्वत्र दूरपतनेन विशीर्णगात्रः ।
दिव्यं विमानमधिरुह्य दिवं जगाम श्रेयस्कृदस्य जगतो जगदीशभक्तः ७२
नाना निशम्य तदिदं निजभूपवृत्तं विद्धः शरैरिव हृदि प्रबभूव खिन्नः
श्रीकृष्णनाम्नि भगवत्यखिलैकपाले याते दिवं सिततराश्व इवातिमूढः ७३

इत्थमिति । सः माधवः इत्थं पूर्वोक्तप्रकारेण सकलं जनं प्रजामिव संततिमिव प्रजा स्यात् संततौ जने इत्यमरः । विंशतियुतानि चत्वारि हायनानि वर्षाणि चतुर्विंशत्यब्दानीत्यर्थः । हायनोऽस्त्री शरत् समा इत्यमरः । ररक्ष पालयामास सर्वः जनः एतं समयं कालं कलियुगमित्यर्थः श्रीकृष्णेन पालिता ये जनास्तैरनुभूयमानं द्वापरमित्यर्थः मेने मन्यते स्म अहं च मेने बुबुधे मेने इत्यस्यावृत्ति तदेव पुरुषद्वयवाचकस्वभावात् ॥ ६९ ॥

अथ माधवावतारसमाप्तिमाह पंचभिः संचोदित इति। कलिनृपेण संचोदितः प्रेरितः सः भानुसूनुर्यमः तं द्विजराजिराजं माधवं हंतुं नाशकत् न समर्थो बभूव । येन पीयूषभानुः अमृतकिरणोऽपि चंद्रः जितः सः जिगीषु गदाधिराजः राजयक्ष्मा यस्मिन् माधवे विफलो बभूव ॥ ७० ॥

तदिति । तस्य माधवस्य घातः हननं तस्य चिंतनं तेन कृशीकृतानि सर्वगात्राणि येन तथोक्तः सः कलिः देही देहधारी सन् प्रासादस्य राजगृहस्य मूर्धनि उपरि प्रदेशे निजैः सखिभिः चरंतं जनानां समूहो जनता। ग्रामजनबंधुसहायेभ्यस्तल् । तस्याः प्रपालं अमुं माधवं पृष्ठे पृष्ठदेशे स्वयमेव सुदृढं अभिहत्य भूमौ अपातयत् ॥ ७१ ॥
हेति। सर्वस्मिन् इति सर्वत्र लोके हा इति खेदे हंत इति खेदे अयं माधवः पतितः इति ब्रुवाणे सति दूरपतनेन विशीर्णगात्रः जगदीशभक्तः अतः अस्य जगतः श्रेयस्कृत् सः दिव्यं विमानं अधिरुह्य दिवं जगाम ॥ ७२ ॥

नानेति । नाना नानाभिधो मंत्री तत् इदं निजभूपस्य वृत्तं निशम्य हृदि शरैर्विद्ध इव खिन्नः प्रबभूव । किंच श्रीकृष्णनाम्नि अखिलैकपाले भगवति दिवं वैकुंठं याते

---

११ " सकल " इतिपा पाठः

सप्तैकसप्तैक (१७१७) मिते सुशाके स राक्षसेऽब्दे द्विजराजिराजः ।
दिवं ययावाश्विनपूर्णमास्यां त्रिभिस्तथाब्दैः सहिते स नाना ॥७४॥
तपः प्रतप्तं बहुधेह दीर्घं गङ्गातटे तद्बलतस्तदानीम् ।
अपीपलल्लोकमिमं द्विजेशः स मध्यमो राघविरैनितुल्यं ॥ ७५ ॥
वाजिराजपुरुपुण्यपुंजक-प्रेरितोऽरितरुराजिहव्यवाट् ।
तं विधाय जगतीपनायकं यक्षराड्दिशमगात् स सैन्यपः ॥ ७६ ॥

यं कर्णं प्रवदन्ति विप्रनिचया राजव्रजास्त्वर्जुनं[३६]
कामिन्यो मदनं तथैव धनिका यं राजराजं विदुः ।
नीतिज्ञा भृगुजं स्वपुण्यनिवहैः संरक्षितः सोऽधुना
जान्हव्या निकटेऽस्ति दौलत इति ख्यातो महीमण्डले॥७७॥

इति श्रीशिवकाव्ये पुरुषोत्तमपण्डितविरचिते अष्टादशश्चमत्कारः ॥

---

सति सिततराश्व इव अर्जुन इव अतिमूढो प्रबभूव मोहं प्रापेत्यर्थः । यथा श्रीकृष्णे वैकुंठं गते अर्जुनस्य शक्तयः सकला कुंठिता अभवन् तथैतस्यापीति भावः ॥७३॥

सप्तैकेति ॥ ७४ ॥

अथ माधवानंतरं मध्यमो राघवरायसूनु राज्यं चकारेत्याह तप इति । सः मध्यमः राघवस्यापत्यं राघविः बाजिराजः । गंगातटे गोदातटे इह अस्यां भूमौ बहुधा बहुप्रकारेण यत्तपः प्रतप्तं तस्य बलतः इदानीं माधवानंतरं इमं लोकं इनस्यापत्यं ऐनिः वैवस्वतमनुः तेन तुल्यं अपीपलत् ररक्ष । पाल्यतेर्लुङि चङि द्वित्वे रूपं । ऐनितुल्यं यमतुल्यं इति वास्तवोऽर्थः ॥ ७५ ॥

वाजीति । अरय एव तरवः तेषां राजिः पंक्तिः तस्याः हव्यवाट् अग्निः स सैन्यपः दौलताभिधः । बाजिराजस्य पुरुउत्कृष्टं यत् पुण्यं तस्य पुंजः समूहः कुत्सितः पुंजः पुंजकः तेन प्रेरितः सन् । कुत्सितेकः । तं बाजिराजं जगतीपनायकं विधाय यक्षराड्दिशां उत्तरां दिशमगमत् ॥ ७६ ॥

तमेव सेनापतिमेकेन वर्णयति यमिति । विप्रनिचयाः यं कर्णं प्रवदंति । राजव्रजास्तु अर्जुनं प्रवदंति । कामिन्यः मदनं । तथैव धनिकाः यं राजराजं कुबेरं । राजराजो धनाधिप इत्यमरः । नीतिज्ञाः यं भृगुजं शुक्रं वदंति । शुक्रसदृशो नीतिमानन्यो नैवास्ते । तदुक्तंभारते विदुरनीतौ । न कश्चिन्नापनयते पुमानन्यत्र भार्गवात् । शेषसंप्रतिपत्तिस्तु बुद्धिमत्स्वेव तिष्ठतीति ॥ अधुना इदानीं स्वस्वामिनि पदच्युते सतीत्यर्थः । स्वपुण्यनिवहैः संरक्षितः महीमंडले दौलत इति ख्यातः सः जान्हव्याः निकटे

---

* " विदुरं " इति वा पाठः ३६ " व्रजा अर्जुनं " इति वा पाठः ३७ "शास्तास्ते करवीरनामनगरे श्रीदौलताख्यः सुधीः " इति वा पाठः

अस्ति ॥ ७७ ॥

इति श्रीशिवकाव्यव्याख्यायां स्वयंकृतायां अष्टादशश्चमत्कारः ॥ १८ ॥

## ऊनविंशश्चमत्कारः

[1]विजयते जयतेऽस्तु महोदयो वदति यस्तमवत्यरिमत्र यः ।
अमृतराय इति प्रथितः प्रभुः स मनुजोत्तमवन्दितवन्दितः ॥ १ ॥
स शरदं शरदं समयं करे नरपतेरवलोक्य जनाधिपः ।
दिशमथो विदिशं प्रययौ च यां तदधिपः प्रशशंस ननाम च ॥२॥
नरवरो रवरोषितशात्रवो बुधमहीसुरकल्प[2]तरुः कृती ।
मनुमुखोदितराजपथस्थितः शिवपदाम्बुजभ[3]क्तिपरोऽभवत् ॥ ३ ॥
जनपदं न पदं कृतवान् गदोऽवति जनं द्विजक[4]ल्पमहीरुहि ।
शिरसि पुष्पवदस्य वचः सदा समवहन् मनुजाधिपनायकाः ॥४॥

श्रीगणेशाय नमः । अथ राघवपुत्रस्य मध्यमस्य बाजिराजस्य चरितं विवक्षुः प्रथमं ज्येष्ठस्यामृतरायस्य चरितं षड्भिः श्लोकैः आह विजयते इति । हे प्रभो इति शेषः । जयते उत्कर्षं आविष्कुरुते महोदयः अस्तु इति यः वदति । तं अरिं यः अवति रक्षति । मनुजोत्तमवंदितैर्वंदितः अमृतराय इति नाम्ना प्रथितः सः प्रभुः अत्र अस्मिन् लोके विजयते सर्वोत्कर्षेण वर्तते । विपराभ्यां जेरिति तङ् ॥ १ ॥

स इति । जनाधिपः सः शरदं समयं शरत्कालं नरपतेः राज्ञः करे हस्ते शरं ददातीति शरदः तं अवलोक्य । राज्ञो जैत्रयात्रासूचकं शरत्कालमवलोक्य इत्यर्थः अथो अनंतरं यां दिशं विदिशं च ययौ तदधिपः प्रशशंस तुष्टाव । ननाम नमनं चकार ॥ २ ॥

नर इति । शत्रूणां समूहः शात्रवं । रवेण शब्देन सेनाशब्देनेत्यर्थः रोषितं शात्रवं येन सः । बुधाः विद्वांसो महीसुराः ब्राह्मणाः तेषां कल्पतरुः । यतः कृती कुशलः अतः मनुमुखाः वैवस्वतादयः तैः उदितः उक्तः यः राजपथः राजमार्गः तत्र स्थितः नरवरः अमृतरायः शिवपदांबुजभक्तिः सैव परा यस्य तथाभूतः अभवत् शिवेऽतिभक्तिमानभूत् इत्यर्थः ॥ ३ ॥

जनपदमिति । द्विजाः ब्राह्मणाः तेषां कल्पमहीरुहि कल्पतरौ तस्मिन् जनं अवति सति गदः रोगः जनपदं देशं पदं स्थानं न कृतवान् । यदीये देशे रोगपीडा नासीत् कुतः शत्रूणामिति भावः । मनुजाधिपनायकाः राजवराः अस्य वचः सदा पुष्पेण तुल्यं पुष्पवत् शिरसि अवहन् आज्ञापरा आसन् इत्यर्थः ॥ ४ ॥

---

१ "अमृतराय इति प्रथितः क्षितौ क्षितिभृतां स मतः सुरराडिव । हरिरिवावति यो हि बुधर्षभान् स रघुनाथसुतः प्रथमः सुधीः" इति वा पाठः २ "महोरुहः" इति वा पाठः ३ "पूजनतत्परः" इति वा पाठः ४ "राज" इति वा पाठः ५ "परं" इति वा पाठः

जनचयं न च यं प्रतिबाधते छलपरोऽपि कलिः स च मामपि ।
जनगतिं विकलं प्रविधास्यतीत्यचिरतो विरतो जनशासनात् ॥ ५ ॥
क्षितिमिमां तिमिमांसभृतोदरैर्यवनपैः कलितां कलियोजितैः ।
समवलोक्य हरिप्रपदोद्भवातटमुपेत्य तपस्यति विप्रराट् ॥ ६ ॥
इति श्रीशिवकाव्ये कलिविलासे पुरुषोत्तमपण्डितविरचिते एकोनविंशश्चमत्कारः ॥

---

## विंशश्चमत्कारः

स बाजिराजो जयति प्रकामं निपातितारातिबलो बलाढ्यः ।
वदान्यनाथो मनुमार्गगामी गजास्यभक्त्याप्तसमस्तकामः[1] ॥ १ ॥
कलावलं प्राग्युगधर्मकारी द्विजातिपूजायतचित्तवृत्तिः ।

जनेति । छले परः आसक्तः एतादृशोपि कलिः यस्य जनानां चयं संघं यं मां च न बाधते स कलिः राज्यं कुर्वंतं मामपि विकलं दीनं प्रविधास्यति करिष्यति इति हेतोः अचिरतः शीघ्रं जनशासनात् विरतः अभूत् । कलिपीडाभयात् राज्यं तत्याज इत्यर्थः ॥ ५ ॥

क्षितिमिति । विप्रराट् अमृतरायः इमां क्षितिं तिमीनां मत्स्यानां मांसेन भृतं उदरं यैः तैः कलिना योजितैः प्रेरितैः यवनपैः कलितां आक्रांतां समवलोक्य हरेः विष्णोः यत् प्रपदं पादाग्रं तस्मात् उद्भवा भागीरथी तस्याः तटं उपेत्य तपस्यति तपश्चरति । तपसः परस्मै पदं चेति परस्मै पदं ॥ ६ ॥

इति श्रीशिवकाव्यव्याख्यायां स्वयंकृतायां एकोनविंशश्चमत्कारः ॥

श्रीगणेशाय नमः । अथ बाजिराजस्य चरमस्यास्य चरितं साध्वसाधु च तत्र साधु प्रायः श्लोकश्रवणमात्रेणैवावबुध्यते असाधु गुप्तं तत् व्याख्यायते स इति । अस्मिन् पद्ये साधु स्पष्टमेव सः बाजिराजः आजौ संग्रामे राजतेऽसौ आजिराजो वा नेत्यर्थः अशूर इति भावः वा शब्दो विकल्पे । वा स्याद् विकल्पोपमयोरेवार्थेच समुच्चये इत्यमरः । किंतु अजिरं चत्वरं अजति गच्छतीति अजिराजः गेहे शूर इत्यर्थः । अजिरं चत्वरांगणमित्यमरः । अज गतिक्षेपणयोरस्मात् कर्मण्युपपदेण् । बवयोरभेदोऽत्र बोध्यः । सः प्रकामं अजयति न शोभते किंचित् शोभते इत्यर्थः । अपचसि त्वं नाल्मीतिवत् समासः । कीदृशः सः निपातिता अरातयो येन स निपातितारातिः हूणाधिपः तस्य बलं यस्य तथोक्तः हूणबलेन राज्यकर्तेत्यर्थः । व्यधिकरणबहुव्रीहिरयं । पुनः कीदृशः अबलाभिः युवतीभिः आढ्यः स्त्रैण इत्यर्थः । पुनः कीदृशः अन्यान् स्वकीयतरान् नाथति उपतापयतीति अन्यनाथः । नाथृ नाधृ याच्ञोपतापैश्वर्याशीःषु ।

---

१ "कामः" इति वा पाठः

**सुचारुदेहो हतदस्युसंघः सदा सदाराधितपादपद्मः ॥ २ ॥**
**नराधिपे यत्र न चाधिरासीन् न वासुखा व्याधिरपि प्रजानाम् ।**
**घनाश्च भीता इव काल एव जलं व्यमुंचन् ननु रागभाजः ॥ ३ ॥**
**प्रजा यदीया न गदोऽपि शक्तो विहिंसितुं कात्र कथान्यशत्रोः ।**
**अनेकधान्यैः परिपूरिताभूनमहीमहैनैव युयोज नापि ॥ ४ ॥**

पुनः कीदृशः अमनुमार्गगामी । गजास्यो गजाननस्तस्य या भक्तिर्भजनं तेन आप्ताः प्राप्ताः समस्ताः कामाः येन सः गजास्यभक्त्याप्तसमस्तकामः किं वद ब्रूहि इति प्रश्नः नेत्यर्थः ॥ १ ॥

कलाविति । कलौ अलं अत्यंतं प्राक् प्राचीनं यद्युगं द्वापरमित्यर्थः तस्य ये धर्मास्तान् करोति तच्छीलः प्राग्युगधर्मकारी । ताच्छील्ये णिनिः । द्वे जाती येषां ते द्विजातयः ब्राह्मणास्तेषां पूजायां उद्यता उद्युक्ता चित्तवृत्तिर्यस्य सुतरां चारुः सुंदरः देहो यस्य तथोक्तः हताः दस्युसंघाः येन सः तथोक्तः सदा सर्वकालं सद्भिः उत्तमजनैः आराधितं पादपद्मं यस्य एतद्गुणविशिष्टः सः बाजिराजः जयतीति पूर्वेण संबंधः । अन्यत्र कला गीतादिकला सैव बलं यस्य स कलाबलः तं कलाबलं गीतनृत्यादिकलाधारिणं न तु विद्यावंतमित्यर्थः । प्राक् पूर्वं पूजयतीति शेषः । यतः युगं कलियुगं तस्य ये धर्मास्तान् करोति तच्छीलः । अत एव द्विजानां ब्राह्मणानां या अतिपूजा पूजातिक्रमः तत्र उद्यता चित्तवृत्तिर्यस्य ब्राह्मणानादरकर्तेत्यर्थः । सुतरां चारु उत्तमं सुचारु प्राचीनं द्यति खंडयतीति सुचारुदा सुचारुदा इहा इच्छा यस्य सः तथोक्तः । न हताः अहताः अहताः दस्युसंघा येन तथोक्तः । सदा असद्भिः अल्पबुद्धिभिः आराधितं पादपद्मं यस्य । यद्वा दारैः सहिताः सदाराः सस्त्रीकाः तैः आसमंतात् धितं धृतं पादपद्मं यस्य सः स दाराधितपादपद्मः । स्त्रीद्वारैव प्रायः प्रवेशः इति भावः । डुधाञ् धारणपोषणयोरस्मात् क्त प्रत्यये इट् ॥ २ ॥

नराधिपे इति । अनुरागं प्रीतिं भजंति ते अनुरागभाजः । अन्यत् स्पष्टं । अन्यत्र । यस्मिन् नराधिपे सति न सुखयतीत्यसुखः लिंगव्यत्ययेन विशेषणमिदं आधिर्मनोव्यथा । पुंस्याधिर्मानसी व्यथेत्यमरः । किंच । असुखा व्याधिः रोगोऽपि प्रजानां नासीदिति न । अपि तु बहुधा आसीदित्यर्थः । व्यमुंचन् न नु इति पदच्छेदः । रागं रंगं कृष्णमित्यर्थः । तं भजंति ते रागभाजः घनाः मेघाः भीता इव इंद्राज्ञाया अभावादिति भावः काले एव वर्षाकाले एव जलं न व्यमुंचन् अन्यकाले शरदादौ व्यर्थं जलं व्यमुंचन्नित्यर्थः ॥ ३ ॥

प्रजा इति । गदोऽपि रोगोऽपि यस्य इमाः यदीयाः । 'त्यदादीनि चेति वृद्धसंज्ञायां वृद्धाच्छ इति च्छः । प्रजाः विहिंसितुं हंतुं न शक्तः अन्योन्यः शत्रुः तस्य

महीसुरा यस्य सुरा इवासंस्तदङ्गनाश्चार्थयुता अभूवन् ।
नरास्तदन्ये नगरप्रचाराः सुभूषिता बालचयाः स्त्रियोऽपि ॥ ५ ॥
सहस्रहस्तः स्वकरैरशेषैर्महीतलं पूरयति प्रकामम् ।
सुजीवनैर्विप्रपतिः कराभ्यां सदोभयाभ्यामसमप्रतापः ॥ ६ ॥
सदन्नजाताम्बरभूषणाद्यैर्नरा यदीयाः सकला अमाद्यन् ।
गजास्तुरङ्गा रणभूमिजात-श्रमोज्झिता मीलितलोचनाश्च ॥ ७ ॥

अत्र विषये का कथा यदीयप्रजानां रोगपीडा नासीत् अन्यराजकृतपीडा नासीदिति किमु वक्तव्यं इत्यर्थः । मही पृथ्वी अनेकानि धान्यानि तैः परिपूरिता अभूत् । महैः उत्सवैः । महस्तूत्सवतेजसोरित्यमरः । नैव युयोज इति न अपि तु युयोज । युक्ताभूदित्यर्थः । सकलैरुत्सवैः निरंतरं शुशुभे इत्यर्थः । अन्यत्र नगाः वृक्षास्तान् द्यति खंडयतीति नगदः पामरोऽपि यदीयाः प्रजाः विहिंसितुं शक्तः अन्यशत्रोः का कथा । मही अनेकधान्यैः परिपूरिता नैवाभूत् अतः नापि पुरुषोऽपि अत्र पुरुष-जातिर्ग्राह्या महैः उत्सवैर्नैव युयोज यद्वा मही महैः उत्सवैः न युयोज अनेकधा अनेकप्रकारैः अन्यैः अमंगलैः परिपूरिता अभूत् अतः नापि पुरुषोपि महैरुत्सवैर्न युयोज ॥ ४ ॥

महीति । यस्य महीसुराः आश्रिताः ब्राह्मणा सुरा इव देवा इव आसन् आनंद-युक्ता आसन् इत्यर्थः । तेषां अंगनाः तदंगनाः अर्थैः धर्मार्थकामैः युताः अभूवन् धर्मार्दाननायासेन लेभिरे इत्यर्थः । तदन्ये आश्रितान्ये नगरे प्रचरंति ते नगरप्रचाराः नगरवासिनः नराः बालचयाः स्त्रियोऽपि सुतरां भूषिताः सुभूषिताः आसन् । अन्यत्र यस्य महीसुरा एव सुरा इव आसन् अन्ये नेत्यर्थः कल्याणानि अंगानि यासां ताः अंगनाः तेषां अंगनाः तदंगनाः रूपवत्यः स्त्रियः अर्थेन धनेन युताः अभूवन् तदन्ये नराः न । किंतु गरं विषं प्रचरंति ते गरप्रचाराः अनेकदुःखाकुलत्वाद्विषम-भक्षयन्नित्यर्थः बालचयाः स्त्रियोऽपि भुवि उषिताः सुतरां भूषिताः सुभूषिताः आ-सन् दारिद्र्यात् भुव्येव शेरते स्मेत्यर्थः ॥ ५ ॥

सहस्रहस्त इति । सहस्रहस्तः सूर्यः अशेषैः स्वकरैर्मुक्तैरिति शेषः सुजीवनैः सुजलैः महीतलं प्रकामं पूरयति । विप्रपतिरयं सदा सर्वकालं उभयाभ्यां द्वाभ्यां कराभ्यां मुक्तैः सुजीवनैः धनैः महीतलं प्रकामं पूरयति । सूर्यः सहस्रहस्तमुक्तैर्जलै-र्महीं पूरयति अयं तु तामेव महीं द्वाभ्यां कराभ्यां मुक्तैः सुजीवनैः पूरयतीति सूर्यापेक्ष-यास्य सामर्थ्यं अधिकमित्यर्थः । अन्यत्र विप्रपतिः सदा प्रत्यब्दं उभयाभ्यां द्विगुणा-भ्यामित्यर्थः कराभ्यां राजग्राह्यभागाभ्यां उत्पन्नैः सुजीवानां नैः नकारैः धनं ना-स्ति धान्यं नास्ति वस्त्रं नास्ति इति नकारैः महीतलं पूरयति । कीदृशः न समः असमः

२ " धनैः " इति वा पाठः

**कलासु विद्यासु रतिर्यदीया महत्तमो माधवभागभाग्यः ।**
**परम्परावर्तितराज्यरक्षाशिक्षाप्रदक्षो नयनाभिरामः ॥ ८ ॥**
**धनाधिनाथालयवासखिन्ना वियोजिता योषिदिवोपभोगैः ।**
**गृहं प्रविश्य प्रसभं यदीयमरीरमत् सर्वजनं सुसम्पत् ॥ ९ ॥**

अनुपम इत्यर्थः प्रतापो यस्य अन्यत्र न समाः असमाः हीनाः तेषु प्रतापो यस्य स असमप्रतापः ॥ ६ ॥

सदिति । संति उत्तमानि अन्नानि येषां तेषां जातं जातिः यद्वा जातं ओघः । जातं जात्योघजन्मसु इत्यमरः । अंबराणि वस्त्राणि भूषणादीनि च तैः यदीयाः सकलाः नराः अमाद्यन् अतिशायितसंपद्भरावृता आसन्नित्यर्थः । गजाः तुरंगाः रणभूमिजातश्रमेण उज्झिता अत एव मीलितलोचनाः आसन् । शत्रूणामभावाद्युद्धप्रसंग एव नासीदित्यर्थः । अन्यत्र अमाद्यन् उन्मत्ता अभूवन्नित्यर्थः । गजादयः शत्रुभिः स्वदेशे आक्रांतेऽपि युद्धप्रसक्त्यभावात् स्वस्थाने एव मीलितलोचनाः रणभूमिजातश्रमोज्झिता आसन् ॥ ७ ॥

कलास्विति । यदीया रतिः प्रीतिः कलासु गीतादिषु विद्यासु चतुर्दशविद्यासु तासु पुराणन्यायमीमांसाधर्मशास्त्रांगमिश्रिताः । वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दशेति याज्ञवल्क्यः । महत्तमा अतिशयिता आसीत् । गीतादिकलाभिज्ञे विद्यावति च पुरुषे यस्य महती प्रीतिरासीदतो गुणज्ञोऽयं इत्यर्थः । उमाधवः शंकरः तस्य यो भागोऽशः तं भजतीति उमाधवभागभाक् । उपलक्षणमेतत् अष्टदिक्पालांशभागित्यर्थः । तदुक्तं । अष्टाभिश्च सुरेंद्राणां मात्राभिर्निर्मितो नृप इति । परंपरया वंशपरंपरया आवर्तितं यद्राज्यं तस्य रक्षा रक्षणं तस्य शिक्षायां प्रकर्षेण दक्षः नयनयोः अभिरामः सुंदर इत्यर्थः । अन्यत्र । कलासु गानादिषु या वेत्तीति वित् अभिज्ञा गीतनृत्याद्यभिज्ञेत्यर्थः तस्यां यस्य महत्तमा रतिः प्रीतिःआसीत् स्त्रैण इत्यर्थः उमाधवः शंकरः संहारकर्तेत्यर्थः तस्य भागं अंशं भजतीति उमाधवभाजभाक् यद्वा माधवो माधवरायः तस्य भागेन अंशेन भाग्यं यस्य माधवराजराज्यकर्तेत्यर्थः । तस्यापुत्रत्वादितिभावः । परंपरावर्तितराज्यरक्षाशिक्षायां अप्रदक्षः । अनयनाभिरामः न अभिरामः अनभिरामः । नञर्थस्य न शब्दस्य सुप् सुपेति समासः । न नयः अनयः अनयेन नाभिरामः अनयनाभिरामः ॥ ८ ॥

धनेति । उपभोगैःवियोजिता योषिदिव धनाधिनाथः कुबेरः तस्य आलयः स्थानं तत्र वासः तेन खिन्ना उपभोगराहित्यादिति भावः । सुसंपत् यदीयं गृहं प्रविश्य सर्वं जनं अरीरमत् रमयामास । यस्य गृहे सर्वेऽपि संपन्ना इत्यर्थः । अन्यत्र । युक्तायुक्त विचारराहित्येन सर्वेऽपि संपत्ति भुंजते इति भावः ॥ ९ ॥

जनावने राजनि यत्र सर्वे ननंदुरत्यर्थितराजवर्गे ।
दशां समानां प्रविधाय शर्वश्चरत्ययं नान्य इतीर्यते यः ॥ १० ॥
नववर्षयुते महीतले नरनाथे सति तत्र देवराट् ।
न परो विनयेन पाति यज्जगुरेवं मनुजा मिथस्तदा ॥ ११ ॥
पुरातनान् स्वान् प्रतिकूलवृत्ताननीकिनीपान् प्रसमीक्ष्य सर्वान् ।
चकार सेनाधिपतिं समुद्रनिवासिनं हूणपतिं द्विजेशः ॥ १२ ॥
पदातिनाथाधिपतिः स हूणो निगृह्य विप्राधिपतेर्विपक्षान् ।
तदाज्ञयैवाखिलभूमिलोकमपालयद्वीरवराग्रयायी ॥ १३ ॥
विभूतिभाजं भजतामभीष्टमुमाप्रियं राघवचित्तवृत्तिम् ।
सदाशिवं भूसुरराजराजमकल्पयन्मन्त्रिणमात्मनः सः ॥ १४ ॥

जनावने इति । राज्ञां वर्गः राजवर्गः अतिशयेन अर्थी अत्यर्थीकृतः अतियाचकः अत्यर्थीकृतः अत्यर्थितः अत्यर्थितो राजवर्गो येन सः जनान् अवतीति जनावनः तस्मिन् यत्र यस्मिन् राजनि सति सर्वे ननंदुः आनंदं प्रापुः शर्वः समानां दशां विधाय कृत्वा चरति नान्य इति यः ईर्यते जनैरिति शेषः । प्रजापालनाय त्रिनेत्रत्वं परित्यज्य एतद्रूपेण सांब एव चरतीत्यर्थः । अन्यत्र अतिशयेन अर्थितः याचितः राजवर्गो येन यत्र यस्मिन् राजनि सति जनाः वने ननंदुः । न तु ग्रामे इत्यर्थः । ग्रामे अनेक भयादित्यर्थः । यद्वा यत्र यस्मिन् राजनि वने सति जनाः ननंदुः ग्रामे इति शेषः । उत्तरार्धं समानमेव । संहर्ता अयं शर्वः एतद्रूपेण चरति नान्यः इति ईर्यते ॥ १० ॥

नवेति । नवसंख्यकानि यानि वर्षाणि भारतादीनि खंडानि तैः युते महीतले तत्र तस्मिन् नरनाथे राजनि सति । तदा यत् अयं राजा विनयेन नीत्या पाति रक्षति तस्मात् अयं देवराट् इंद्र एव न परः नान्यः इति मनुजाः मिथः परस्परं जगुः वदंति स्म । अन्यत्र तत्र नरनाथे सति देवराट् इंद्रः । युते युक्ते योग्ये इति यावत् धान्यावापस्थले इत्यर्थः । न ववर्ष पर्वतादौ ववर्षेत्यर्थः । यद्वा युते कर्षणसाधनीभूते न हलादिना युते हलेन कृष्टेइत्यर्थः । यत् विनये नीतिविचारे सति न पाति न रक्षति । तत् अयं परः शत्रुः न किं अपि तु शत्रुरेव । यद्वा पर इत्यावर्तते । परः अन्यः परः शत्रुः न । अयमेव शत्रुरित्यर्थः ॥ ११ ॥

अथ हूणाधिपतेरेतस्य च समागमे कारणमाह पुरातनानिति । द्विजेशः बाजिराजः स्वान् स्वकीयान् परंपरागतान् पुरातनान् सर्वान् अनीकिनीपान् सेनापतीन् प्रतिकूल वृत्तीन् समीक्ष्य समुद्रनिवासिनं हूणपतिं सेनाधिपतिं चकार ॥ १२ ॥

पदातीति । वीरेषु ये श्रेष्ठास्तेषां अग्रे यातीति वीरवराग्रयायी पदातिनाथानां अधिपतिः सः हूणः एतेनास्य सर्वे भटाः प्रायशः पदाता एवेति सूचितं । सः विप्राधिपतेः विपक्षान् शत्रून् निगृह्य तदाज्ञयैव बाजिराजाज्ञयैव अखिलं भूमिलोकं अपालयत् ॥१३॥

स्वराज्यभारं सकलं निधाय तयोः सदानन्दनिमग्नचेताः ।
चचार तीर्थान्यमलानि यानि द्विजातिभिः स्वेष्टरतैः श्रितानि ॥ १५॥
पदातिनाथाधिपतिः स शूरो निगृह्य विश्वाधिपतेर्विपक्षान् ।
तदाज्ञयैवाखिलभूमिलोकमपालयन्मन्त्रिवरेण *युक्तः ॥
सत्काव्यसाररसरत्नवरान्तरालसारावलोकनपरोत्तमविज्ञवन्द्यम् ।
द्रव्यार्जनोद्यतमना द्विजमन्त्रिणं तं स्वीयानुजेन सहितोऽहमगां पुरात् स्वात्
भीमोत्तरामलतटीगतमुद्गलस्य सिद्धिप्रदायकगणाधिपतेश्च मध्ये ।
यत्सर्वपूर्वजमहासुरसेव्यमानं यत् पेडगावमिति भूमितले प्रसिद्धम् ॥१७

एवं सेनापतिमुक्त्वा प्रधानमाह विभूतीति । सः बाजिराजः विभूतिरैश्वर्यं तत् भजतीति विभूतिभाक् । विभूतिर्भूतिरैश्वर्यमित्यमरः । अन्यत्र विभूतिः भस्म तद्भजतीति विभूतिभाक् । भजतां अभीष्टं । उमा उमानाम्नी प्रिया यस्य तं । अन्यत्र उमा पार्वती प्रिया यस्य तं । राघवस्य अयं राघवः बाजिराजः तत्र चित्तवृत्तिर्यस्य तं । राघवशब्दादिदमर्थेणि अपत्यार्थविवक्षायामत इञ् स्यात् । अन्यत्र राघवे रामचंद्रे चित्तवृत्तिर्यस्य तं भूसुराः ब्राह्मणास्तेषां ये राजानः तेषां राजानं । यद्वा भूसुरराजो बाजिराजः तेन राजतेऽसौ भूसुरराजराजः तं । अन्यत्र भूसुरराजः चंद्रः तेन राजतेऽसौ भूसुरराजराजः तं सदाशिवं सदाशिवनामानं मंत्रिणं अन्यत्र सदाशिवं सांबं मंत्रिणं तत्प्रेरणयैव सर्वं कृतवानित्यर्थः। अकल्पयत् कृतवान् ॥ १४ ॥

स्वराज्येति । तयोः प्रधानसेनान्योः सकलं स्वराज्यभारं निधाय सदा सर्वकाले आनंदे निमग्नं चेतो यस्य सः । यद्वा सदानंदो ब्रह्मानंदः तस्मिन्निमग्नं चेतो यस्य अमलानि स्वच्छानि यानि स्वस्य इष्टं स्वेष्टं ब्राह्मणकर्म तत्र ये रताः तैः श्रितानि यद्वा स्वस्य इष्टं स्वेष्टं यद्दैवतं तत्र ये रताः तैः द्विजातिभिः श्रितानि अमलानि तीर्थानि चचार जगाम । अन्यत्र । तीर्थं योनौ जलावतारे चेति हलायुधः । तीर्थानि योनिः स्वेष्टरतैः स्वानुकूलैः द्विजातिभिः ब्राह्मणैः श्रितानि विवाहसंबधात् स्वीकृतानि स्वसंतोषार्थं द्विजैः परिणिता युवतीः सिषेवे इति भावः ॥ १५ ॥

अथास्य काव्यस्य रचनायां कारणमाह युग्मेन सदिति । द्रव्यस्य धनस्य अर्जनं संपादनं तत्र उद्यतं मनो यस्य सः अहं काव्यकर्ता स्वीयेन अनुजेन गोविंदाख्येन भ्रात्रा सहितः सन् संति यानि काव्यानि तेषां ये सर्वे रसाः शृंगारादयः तान्येव रत्नवराणि तेषां अंतरालं मध्यः तस्य सारः तस्य अवलोकनं तत्र ये पराः आसक्तास्तेषु उत्तमाः ये विज्ञाः ज्ञानवंतः तेषामपि वंद्यं अतिचतुरमित्यर्थः । द्विजमंत्रिणं सदाशिवाख्यं । तस्मात् स्वात् पुरात् समगां अगच्छम् ॥ १६ ॥

भीमेति । भीमा भीमरथी नाम नदी तस्याः उत्तरा या अमला स्वच्छा तटी त-

३ "सर्व" इति वा पाठः ४ "स्वर्व" इति वा पाठः * एकस्मिन् पुस्तके इदमधिकं पद्यं.

सत्कृत्य मां द्विजवराधिपतेः समन्त्री विद्वद्वरैः परिवृतः पुरुषोत्तमाह्वयम्
हे सत्कवेश सुमते विषमां समस्यां त्वं पूरयाशु मम तामिति वाचमूचे ॥ १८

ॐमित्युक्त्वा चतुर्धा तां विषमामपि तत्क्षणे ।
अपूरयं बुधजनैर्वृते सदसि मन्त्रिणः ॥ १९ ॥

अन्योरस्थलकुङ्कुमाङ्कितनतनुं संवीक्ष्य राधा हरिं
क्रुद्धा प्राह भवेयमस्य वशगा स्याच्चेदिदं दूतिके ।
भानुः पश्चिमदिग्जनुः शशधरोऽखण्डो हिमाग्निस्तथा
गङ्गातीरकरीरपत्रपुटके मीनं यतिः खादति ॥ २० ॥

भग्नस्य स्वशरासनस्य हरिणा श्रुत्वा निनादं नृपः
कंसः स्वप्न इदं ददर्श मरणात्त्रस्तो मृतालिङ्गनम् ।
विच्छिन्नं स्वशिरो विषादनमथो रक्ता गले मालिका
गङ्गातीरकरीरपत्रपुटके मीनं यतिः खादति ॥ २१ ॥

टं । तटं त्रिषु इत्यमरः । तत्र गतो विद्यमानः यः मुद्गलः मुनिः । तस्य स्थानमित्यर्थः । तस्य सिद्धिप्रदायको यो गणाधिपतिः विनायकः तस्य च मध्ये मम सर्वे ये पूर्वजाः महीसुराः ब्राह्मणाः तैः सेव्यमानं पेडगावं इति भूतले प्रसिद्धं यत् तस्मादिति पूर्वेण संबंधः ॥ १७ ॥

सत्कृत्येति । विद्वद्वरैः परिवृतः सः पुरुषोत्तमाह्वयं मां सत्कृत्य हे सुमते हे सत्कवे अद्यैव न तु परेद्युः त्वं मम तां विषमां समस्यां । गंगातीरकरीरपत्रपुटके मीनं यतिः खादतीति । पूरय इति वाचं ऊचे उक्तवान् ॥ १८ ॥

ॐ मिति । ॐ तस्यास्तु शेषं स्पष्टं ॥ १९ ॥

समस्यापूरणप्रकारं चतुर्भिराह अन्येति । राधा राधानाम्नी गोपी हरिं कृष्णं अन्यस्याः गोपिकायाः यदुरस्थलं तत्संबंधि यत्कुंकुमं तेन अंकिता तनुः शरीरं यस्य तं संवीक्ष्य क्रुद्धा सती प्राह हे दूतिके इदं स्याच्चेत् तर्हि अहं अस्य कृष्णस्य वशगा भवेयं । इदं किं । भानुः सूर्यः पश्चिमायां दिशि जनुः जन्म उत्पत्तिः उदयः इति यावत् यस्य सः । शशधरश्चंद्रः अखंडः अग्निः हिमः तथा गंगायाः यत् तीरं तत्र यः करीरः तस्य यानि पत्राणि तेषां पुटको द्रोणः तस्मिन् यतिः सन्यासी मीनं खादति चेत् ॥ २० ॥

भग्नस्येति । कंसः नृपः हरिणा श्रीकृष्णेन भग्नस्य स्वशरासनस्य स्वधनुषः निनादं शब्दं श्रुत्वा मरणात् त्रस्तः भीतः सन् स्वप्ने इदं ददर्श । इदं किं । मृतस्य शवस्य आलिंगनं । विच्छिन्नं स्वशिरः । विषादनं विषपानं । अथोऽनंतरं गले रक्ता जपाकुसुमसंभवा मालिका । तथा गंगातीरकरीरपत्रपुटके मीनं यतिः खादति इति

५ " तत्क्षणे " इति पा पाठः

का वा पापहरा तटस्थ च तरोः सम्बोधनं किं हरिः
शेते कुत्र दधौ पुराथ कतमं देहं विरक्तश्च कः ।
किं रूपं लटि खादतेर्भयकरं स्वप्नं तथा किं भवेद्
गङ्गातीरकरीरपत्रपुटके मीनं यतिः खादति ॥ २२ ॥
काशीशो निजवैरिणा बलवता युद्धे यदा निर्जित-
स्तं हन्तुं शरणं ययावभिचरन् जैनाभिधानां गुरुम् ।
मन्त्रज्ञः स तु राजवैरिहननोपायं प्रकुर्वन् व्रती
गङ्गातीरकरीरपत्रपुटके मीनं यतिः खादति ॥ २३ ॥
कवितावनितारूपसौन्दर्यप्रविमोहितः ।
प्राध्वं कृत्वा मन्त्रिवरः स्वाश्रितं मां व्यधात् किल ॥ २४ ॥
स एकदा मामवदत् कृतज्ञः सुराधिपांशाश्रितभूपतीनाम्
शिवादिकानां चरितं विचित्रं सखे सुवृत्तैर्बहु वर्णयेति ॥ २५ ॥

स्वप्ने सर्वस्य संभवात् ॥ २१ ॥

अंतर्लापिकाप्रकारेणाह का वेति । पापहरा का । गंगा । तटस्थ चेत्यपरं तरोः संबोधनं किं । हे तीर । हे करीर । हरिः कुत्र शेते पत्रपुटके । अथ हरिः पुरा प्रथमं कतमं रूपं दधौ मीनं । लटि लट्प्रत्यये परतःखादतेः खाद भक्षणे इति धातोः किं रूपं । खादति । तथा भयंकरं स्वप्नं किं । गंगातीरकरीरपत्रपुटके मीनं यतिः खादति ॥ २२ ॥

काशीश इति । काशीशः काशिराजः । बलवता बलिष्ठेन निजवैरिणा यदा युद्धे निर्जितः । तदा तं हन्तुं अभिचरन् अभिचारं कुर्वन् सन् । जैनाभिधानां गुरुं शरणं ययौ । मंत्रज्ञः स तु यतिः यतिसंज्ञो जैनगुरुः राजवैरिहननोपायं प्रकुर्वन् सन् गंगातीरे आरोपितः यः करीरः तस्मिन् करीरे स्थापितः यः पत्रपुटकः अन्यवृक्षज-पत्रद्रोणः तत्र मीनं मत्स्यं खादति ॥ २३ ॥

कवितेति । कवितैव वनिता स्त्री तस्याः यद्रूपं तस्य सौंदर्यं तेन विमोहितः । अनेन तस्य अपि स्त्रैणत्वं सूचितं । मंत्रिवरः सदाशिवः मां प्राध्वं कृत्वा प्रार्थनयानुकूलं कृत्वा । प्राध्वमित्यव्ययं । प्राध्वं बंधने इति बंधनेनानुकूल्ये समासः । अत्र तु प्रार्थनया आनुकूल्ये समासाभावे ल्यबभावः । स्वाश्रितं व्यधात् कृतवान् ॥ २४ ॥

स इति । कृतं जानातीति कृतज्ञः सः सदाशिवः मां हे सखे सुराधिपानां ये अंशाः तैः श्रितानां भूपतीनां । एतेनैतेषां वर्णने योग्यता दर्शिता । अष्टाभिश्च सुरेंद्राणां मात्राभिर्निर्मितो नृप इति स्मरणात् । शिवः आदिर्येषां तेषां विचित्रं चरितं सुवृत्तैर्वर्णयेति अवदत् ॥ २५ ॥

---

६ "कतमद्रूपं" इति वा पाठः

नरस्तुतौ मे भवितोपहासो मत्सङ्ग्रहः सङ्ग्रथनैकहेतुः ।
विचिन्तयन्नित्थमहं निशायां ददर्श विप्रर्षिवरं प्रसुप्तः ॥ २६ ॥
शरत्सुपर्वोदिततारकेशप्रभां स्वभासां निकरैर्जयन्तम् ।
पराशरातप्ततपःफलं तं तपस्विनं बद्धजटाकलापम् ॥ २७ ॥

एकेनैव मुखेन वक्ति चतुरो वेदान् यतः पद्मभू-
र्नो वा नैव फणी सहस्रवदनैर्यः पाणिनीयं परम् ।
व्याचख्यावखिलागमान् जनहितानेकेन वक्त्रेण यद्
बाहीको ह्युपमानतो द्विजवरस्तस्यानमं पादयोः ॥ २८ ॥
मामुत्थाप्य करेण दीधितिहतध्वान्तप्रकाण्डोऽवदद्
राजन्यानखिलान् वैरान् शिवमुखान् हूणान्तिमान् वर्णय ॥
त्वद्वक्त्रं मम वक्त्रमेव वचनं यत् तावकं मामकं
सद्वृत्तैर्ग्रथितं भवेन्मम यथा श्रीभारतं ते तथा ॥ २९ ॥

अथ युग्मेन व्यासं वर्णयति । नर इति । नराणां स्तुतौ सत्यां मे उपहासः भविता । मम संग्रहः मत्संग्रहः संग्रथनं काव्यकरणं स एव एकः मुख्यः हेतुः यस्येति संग्रथनैकहेतुः । इत्थं विचिंतयन् प्रसुप्तः अहं निशायां रात्रौ । भागुरिमतेन निशाशब्दोप्याबंतः । विप्रर्षिवरं व्यासं ददर्श दृष्टवान् ॥ २६ ॥

शरदिति । किंभूतं विप्रर्षिवरं शरदि शरत्काले सुपर्वणि पूर्णिमायां उदितो यस्तारकेशः तस्य प्रभां कांतिं स्वभासां स्वकांतीनां निकरैः जयतीति जयन् तं जयंतं । पराशरेण आतप्तं यत् तपः तस्य फलं फलभूतं प्रशस्तं तपोऽस्यास्तीति तपस्वी तं तपस्विनं । तपः सहस्राभ्यां विनीनीति विनि प्रत्ययः । बद्धः जटाकलापो येन तं विप्रर्षिवरं इति पूर्वेण संबंधः ॥ २७ ॥

पुनश्च तमेव वर्णयति एकेनेति । यः यत् एकेनैव मुखेन चतुरः वेदान् वक्ति पठति । अतः पद्मभूः ब्रह्मोपमानं न सहते इत्यर्थः । वा इत्यथवा । यः सहस्रवदनैः पाणिनीयं व्याकरणमेव परं एकं व्याचख्यौ सः फणी शेषः न । शेषस्य अप्युपमां न सहते इत्यर्थः । यः जनानां हितान् अखिलागमान् शास्त्राणि च वक्ति । उपमानादिति उपमानतः । बहिर्भवः बाहीकः बाह्यः उपमानरहित इत्यर्थः । बहिः शब्दादीकक् प्रत्यये टिलोपः । द्विजवरो व्यासः तस्य पादयोः अनमं ॥ २८ ॥

मामिति । दीधितिः कांतिः तया हतः ध्वांतस्य अंधकारस्य कांडः वर्गः येन सः । कांडोऽस्त्री दंडबाणार्यवर्गावसरवारिषु इति विश्वः । स व्यासः मां करेण उत्थाप्य पादयोः पतितमित्यर्थः इति अवदत् । इति किं । शिवं मुखं मुख्यो येषां ते शिवमुखाः तान् वरान् श्रेष्ठान् राजन्यान् वर्णय । तव वक्त्रं त्वद्वक्त्रं त्वद्वक्त्रं ममैव वक्त्रं यत्

---

७ "मुरान्" इति वा पाठः ८ "विद्धि यत्" इति वा पाठः ९ "सद्वृत्त" इति वा पाठः

ब्रह्मांशप्रभवास्त्रयः शिवमुखा विष्णवंशभूतास्ततो
बालाजिप्रमुखाः सदाजनसुखायाबुत्तमोपोत्तमौ ।
रुद्रांशप्रभवात्ततो गुणगणानेषामलं वर्णय
स्यात् पापस्य लयस्तवापि पठतः श्रोतुश्च नित्यं तथा ॥
सर्वासु तिथिषु श्रेष्ठा द्वादशी या तिथिर्हरेः ।
तस्यां पौराणिकाः सर्वे भारतं न पठन्ति मे ॥ ३० ॥
तस्यां त्वदीयं काव्यं ये पठिष्यन्ति समाहिताः ।
श्रोष्यन्ति चैव ये तेषां भारतश्रुतिजं फलम् ॥ ३१ ॥
इत्युक्त्वा भगवान् व्यासस्तत्रैवान्तर्दधे तदा ।
तस्याज्ञया कृतमिदं काव्यं सर्वरसान्वितम् ॥ ३२ ॥
कलिभिन्नमतिः स बाजिराजो स्ववशं हूणपतिं विहाय सद्यः ।
द्विजपं विदधे स्वसैन्यपालं लयकाले किल बापुनामधेयम् ॥३३॥
सचिवं च तथा विहाय पूर्वं विदधेपूर्वतरं स दीक्षिताख्यम् ।
भवितव्यतया विमूढचेता युयुधे हूणवराधिपेन सार्धम् ॥ ३४ ॥
वीरास्ते बापुमुख्या नरवरमहितं पर्वतीं यापयित्वा ।
सन्नद्धा वाजिवाहाः श्रुतसमरकथा हृष्टचित्ता यथार्भाः ।
एकादश्यामुपोष्य स्मृतहरिचरणा दीपमध्ये पतङ्गा
यान्त्येवं तेऽत्र सर्वे भटनिचयशिखे पेतुरल्पिष्टनाम्नौ ॥ ३५ ॥

तावकं वचनं तत् ममैव वचनं अतः मम यथा भारतं तथा ते रुद्धिर्वृत्तैः ग्रथितं काव्यं भवेत् इति आशिषं दत्तवानित्यर्थः ॥ २९ ॥

सर्वासु ॥ ३० ॥ तस्यां ॥ ३१ ॥ इत्युक्त्वा ॥ ३२ ॥

कलीति । कलिना भिन्ना मतिः यस्य सः बाजिराजः । स्ववशं स्वाधीनं हूणपतिं सेनापतिं सद्यः विहाय लयकाले विनाशकाले बापुनामद्विजपं स्वसैन्यपालं विदधे कृतवान् । विनाशकाले विपरीतबुद्धिरिति भावः ॥ ३३ ॥

सचिवमिति । तथा पूर्वं सचिवं प्रधानं सदाशिवाख्यं विहाय अपूर्वतरं नवीनं दीक्षिताख्यं प्रधानं विदधे भवितव्यतया मूढो चेतो यस्य तथाभूतः सन् हूणवराधिपेन स्वसैन्यपालेन सार्धं युयुधे योधितवान् ॥ ३४ ॥

अथ युद्धप्रकारमेवाह वीरास्त इत्यादिभिः। वीराइति । वाजिनो वाहाः वाहनानि येषां ते वाजिवाहाः । श्रुताः समराणां संग्रामाणां कथाः यैस्ते श्रुतसमरकथाः न तु दृष्टसमराः । अतः यथा अर्भाः बालास्तथा संग्रामोपक्रमं दृष्ट्वा हृष्टं चित्तं येषां ते हृष्टचित्ताः । बापुः मुख्यः येषां ते बापुमुख्याः संनद्धाः । ते वीरा नरवरैः राजभिः महितं बाजिराजं ।

* एकस्मिन् पुस्तके इदमधिकं पद्यं.

युद्धयज्ञेऽल्पिष्टनाम्नी गोखलेमुख्ययाजकाः
हुत्वा तं दीक्षितपशुं जग्मुः सर्वे दिशो दश ॥ ३६ ॥
यजन्ति याजकाः सर्वे यज्ञे नानाविधं हविः
अत्यपूर्वो ह्ययं यागो दीक्षितं जुहुवुर्यतः ॥ ३७ ॥
यं यं देशं द्विजाधीशो गतस्तं तं स पद्रपः
ययौ श्येनो द्विजमिव धर्तुं भीतमभीतपः ॥ ३८ ॥
दृष्ट्वालिर्गृहगोधिकां वृकपतिं मेषः फणी पक्षिपं
गौर्व्याघ्रं द्विरदश्च सिंहमसुरो देवं सुराधीश्वरम्
जायन्ते विकलेन्द्रिया हतधियं सद्यो यथाल्पिष्टनं
दृष्ट्वाभूद्विकलेन्द्रियो हतमतिर्विप्राधिपोऽसौ तथा ॥ ३९ ॥

अन्यत्र । अहितं युद्धानुपयुक्तं अतिभीतत्वात् नरवरं बाजिराजं पर्वतौ पर्वतिसंज्ञं गिरिं यापयित्वा संप्रेष्य स्वयं उपोष्य अनशनं कृत्वा स्मृतौ हरिचरणौ यैस्ते स्मृतहरिचरणाः संतः । अंतकाले च मामेव स्मरन् मुक्त्वा कलेवरं । यः प्रयाति त्यजन् देहं स याति परमां गतिमिति भगवद्वचनश्रवणादिति भावः । यथा पतंगाः दीपमध्यं यांति एवं तत्र तस्मिन् काले एकावश्यां भटानां निचयः स एव शिखाः ज्वालाः यस्य तस्मिन् अल्पिष्टन एव अग्निः तस्मिन् निपेतुः पतंति स्म ॥ ३५ ॥

युद्धेति । गोखले इति उपनामधारकः बापुनामा सेनापतिः स मुख्यः याजकः ऋत्विक् येषां ते गोखलेमुख्ययाजकाः । अल्पिष्टन एव अग्निः तस्मिन् दीक्षितः मयूरनामा मंत्री तं तमेव पशुं हुत्वा दश दिशः जग्मुः । ये संमुखे हतास्ते ऊर्ध्वां दिशं ययुः ये पृष्ठतः पलायमानाः संतः हतास्ते अधोदिशं तदन्ये अष्ट दिशो जग्मुरिति ज्ञेयं ॥ ३६ ॥

यजंतीति । सर्वे याजकाः याज्ञिकाः । यज्ञे नानाविधं हविः होमद्रव्यं यजंति जुह्वति । अयं यागः अतिशयेन अपूर्वः अत्यपूर्वः यतः दीक्षितमेव जुहुवुः ॥ ३७ ॥

यं यमिति । न भीताः अभीताः शूराः तान् पातीति अभीतपः स पद्रपः हूणाधीशः । द्विजाधीशः बाजिराजः यं यं देशं ययौ तं तं देशं भीतं तं द्विजाधीशं श्येनः पक्षिराट् द्विजमिव धर्तुं ययौ ॥ ३८ ॥

दृष्ट्वेति । आलिर्वृश्चिकः गृहगोधिकां पल्लीं दृष्ट्वा मेषः उरणः वृकपतिं दृष्ट्वा । फणी सर्पः पक्षिपं गरुडं । गौर्व्याघ्रं । द्विरदः सिंहं । असुरः देवं सुराधीश्वरं विष्णुं दृष्ट्वा एते सर्वे यथा सद्यः विकलानि इंद्रियाणि येषां ते विकलेंद्रियाः । यतः हता अत्र कर्तव्यविचारमूढा धीर्येषां ते हतधियः जायंते ततः असौ विप्राधिपतिः बाजिराजः हतमतिः । विकलेंद्रियश्च अभूत् ॥ ३९ ॥

---

१० " याज्ञिकाः " इति ब पाठः ११ " भीत " इति ब पाठः

आरण्याश्चटका यथा कणिशधान्यान्तर्विलीनानना:
क्षेत्राधिष्ठितपाणियुग्मविधृतस्रग्भिण्डिमालोद्भवम्
अश्मानं प्रविलोक्य यान्ति परितस्तद्वद्यदीयाः क्षणात्
सैन्या यंत्रजधूममेव विकला दृष्ट्वापसस्रुर्द्रुतम् ॥ ४० ॥
दीनं हीनं स्वीयवर्गैस्तमेतं धर्तुं यातो वीरवर्यो यदासौ
बापूनामा वीरवर्याग्रगण्यः धीरश्चित्ते चिन्तयामास चैतत् ॥ ४१॥
बाजिराजो वाजिराजः सेना सेना न मद्वशे ।
सुजयोऽसुजयो नायमरणं मरणं मम ॥ ४२ ॥
नरयानं गजा अश्वास्तरुण्यो मृगलोचनाः ।
स्वर्गेऽपि सन्ति वीरस्य इत्थमुक्त्वा युयोध सः ॥ ४३ ॥
बाजिराजे गते दूरं त्यक्त्वा देहमिमं सुधीः[१२] ।
विमानेन दिवं यातः कीर्त्तिमत्र निधाय सः ॥ ४४ ॥
बापुनाम्नि दिवं याते बाजिराजोऽसुमानपि ।
व्यसुवद्ददृशे स वै वीरमध्यगतोऽपि सः ॥ ४५ ॥

आरण्याइति । यथा कणिशधान्यानि यावनालादीनि तेषां अंतर्मध्ये विलीनानि आननानि येषां ते तथोक्ताः । अरण्ये भवाः आरण्याः । अरण्याण्ण इति अण् प्रत्ययः । चटकाः । क्षेत्रे अधिष्ठितः कृषीवलः तेन पाणियुग्मे विधृता या स्रगिव मालेव वर्तुलाकारेत्यर्थः भिंडिमाला तस्याः सकाशात् उद्भवं तत्र स्थितमित्यर्थः । अश्मानं पाषाणं प्रविलोक्य परितः यांति तद्वत् । यस्य इमे यदीयाः सैन्याः सेनायां समवेताः सैन्याः सैनिकाः । यंत्राणि तोफाः तासां धूममेव दृष्ट्वा विकलाः विव्हलाः संतः द्रुतं शीघ्रं अपसस्रुः ॥ ४० ॥

दीनमिति । यदा असौ हूणाधीशः वीरवर्यः अलिफ्ष्टनः । दीनं यदाः स्वीयैः वर्गैः हीनं धर्तुं यातः तदा वीरवर्याग्रगण्यः बापूनामा सेनापतिः चित्ते एतत् वक्ष्यमाणं व्यचिंतयत् ॥ ४१ ॥

चिंतनप्रकारमेवाह बाजिराज इति । अयं बाजिराजः । आजौ संग्रामे राजते असौ आजिराजो वा नेत्यर्थः । बवयोरभेदः । वा स्याद्विकल्पोपमयोरेवार्थेच समुच्चये इति विकल्पार्थवाचकोऽत्र वा शब्दः । किंतु अजिरं अंगणं अजति गच्छतीति अजिराजः । इनैः सेनापतिभिः सहिता सेना सेना वाहिनी मद्वशे मदधीना न । किंतु नमतः प्रणामप्रवणस्य वशे भवति । अयं रिपुः शोभनः सुसाध्यः जयो यस्मादिति सुजयः न किंतु असून् प्राणान् जयतीति असुजयः । अतः मम मरणं मृतिः अरणं रक्षणं नान्यत् ॥४२॥ नरेति ४३ बाजिराज इति ॥४४॥ बापुनाम्नीति ॥४५

---

१२ "शुचिः" इति वा पाठः

विरक्तोसौ द्विजाधीशो जान्हवीतटमास्थितः ।
साम्बं समर्चयन्नित्यं कालं यापयति स्फुटम् ॥ ४६ ॥
इङ्ग्रजाख्याग्रणीरेष पुण्याभिधपुरं वरं ।
आगत्य विप्रप्रमुखान् सर्वान् संतोष्य तस्थिवान् ॥ ४७ ॥
नवत्रिसप्तैकमिते (१७३९)स शाके हूणाधिपोऽल्फिष्टननामधेयः
पुण्याभिधानां द्विजराजधानीमध्यास्य भूमिं निखिलां शशास ॥४८॥
यवनपाद्गितां सकलां महीं शिवनृपप्रमुखैः पुनरेव ताम्
यवनपेषु निधाय कलिः कृती समभवत् कृतकृत्यमनाः किल ॥ ४९ ॥
विद्वान् वत्सकुलेऽमले समभवद्गोपालनामा द्विज-
स्तस्यासीत् तनयो गुणैरविरलैर्जाखंभटाख्यः सुतः
सूनुस्तस्य मयूर इत्यभिधया ख्यातस्ततस्त्र्यम्बक
दैवज्ञोऽग्निनिषेवकः क्रतुपरो धीमान् दयासागरः ॥ ५० ॥
तत्पुत्रो निगमप्रपाठनपरो यः काशिनाथाभिधः
तत्सूनुः पुरुषोत्तमोऽकृत कविः काव्यं यशस्यं वरम्
त्र्यब्ध्यर्ष्येकमिते ( १७४३ ) शाके तपसि तत् पुण्याभिधायां पुरि
श्रीमद्भास्करलब्धवेदपठनासक्तस्त्रिवेणीसुतः ॥ ५१ ॥
इति श्रीशिवकाव्ये पुरुषोत्तमविरचिते विंशश्चमत्कारः ॥
समाप्तमिदं काव्यम्.

विरक्त इति ॥ ४६ ॥

इंग्रजाख्येति । हूणानामेव इंग्रजा इति लौकिकी संज्ञा ॥ ४७ ॥

नवेति । अध्यास्येति । अधिशीङ्स्थासां कर्मेति कर्मत्वं । द्विजराजराजधानी-मित्यस्य । एवं पूर्वश्लोकेऽपि ॥ ४८ ॥

यवनपादिति । कलौ तावद्यवनानामेव प्रायः राज्यस्य उक्तत्वात् कलिर्मुनिवाक्य यथार्थं चकारेत्यर्थः ॥ ४९ ॥

अथ काव्यकर्ता स्ववंशपरंपरामाह यावत्समाप्ति विद्वानिति द्वाभ्यां वृत्ताभ्यां । तदिति । श्रीमान् यः भास्करः सूर्यः तस्माल्लब्धः यः वेदः माध्यंदिनी शाखा तस्याः पठने आसक्तः । तपसि माघे । काव्यं अकृत समापितवान् इत्यर्थः । अकृत । ह्रस्वादंगा-दिति सिचो लुक् ॥ ५०।५१ ॥

इति श्रीशिवकाव्यव्याख्यायां स्वयंकृतायां काव्यप्रकाशिकायां विंशश्चमत्कारः श्रीगोपालकृष्णार्पणमस्तु । शाके १७४८ श्रावणे मासे समाप्तेयं टीका गालवपुरस-मीप श्रीदौलतराजसैन्ये ।

---

१२ "ख्यो युतः" इति वा पाठः

# श्रीशिवकाव्यस्य परिशिष्टं प्रथमम्.

## षोडशाध्यमस्कारस्य टीका.

श्रीगणेशाय नमः। अथ माधवरायस्य अनपत्यत्वात् तदनुजस्य नारायणस्य चरितं विवक्षुः प्रथमं तत्प्राग्जन्मकथामवतारयति सिद्धाभिध इति । सिद्धाभिधः सिद्धसंज्ञकः कश्चन सिद्धवर्यः। सिद्धीः प्रददातीति सिद्धिप्रदः तं सिद्धिप्रदं विनायकाख्यं देवं प्रतीच्यां पश्चिमायां दिशि । प्राच्यवाचीप्रतीच्यस्ताः पूर्वदक्षिणपश्चिमाः इत्यमरः । जलधेः समुद्रस्य तटे । प्राणनिरोधपूर्वं प्राणायामपुरःसरं समीने पूजयामास ॥ १ ॥

वन्यैरिति । सः वन्यैः फलादिभिः दिने दिने सिद्धिविनायकमिति शेषः । पूजयामास । अस्य सिद्धस्य । गृष्टिः सकृत्प्रसूता । प्रशस्तं पयो यस्याः सा पयस्विनी । गौः आसीत् पूजनार्थमिति भावः । सः व्याघ्रादितः तद्रक्षणार्थं गोरक्षणार्थं चापशरासिपाणीन् भृत्यान् विदधे चक्रे । स्थापितवानित्यर्थः ॥ २ ॥

गोपाल इति । गोपालबालोद्धतकालसंज्ञास्ते भ्रातरः तां नित्यं अपालयन् अरक्षन् । कदाचिदेकः । तरस्वी बलवान् । प्राणसुतर्पणेच्छुः । व्याघ्रः गवि अभ्यपतत् ॥ ३ ॥

तदिति । एते तत्कालं धनूंषि युगपत् एकसमयावच्छेदेन व्याकृष्य परत्र व्याघ्रे बाणान् मुमुचुः । भ्रातृभिः तत् व्याघ्रकलेवरं विद्धं तुर्यः चतुर्थः भ्राता धेनोरुदरं बिभेद प्रमादतः इति भावः ॥ ४ ॥

व्याघ्रे इति । व्यसुः निष्प्राणः व्याघ्रः भूमितले पपात् सा गौः घटिकाद्वयं सासुः सप्राणा आसीत् । सिद्धः इदं निशम्य अतीवरोषात् तत् गहनं वनं । गहनं काननं वनमित्यमरः । क्षणेन क्षणमात्रेण अतित्वरयेति भावः । उपाविशत् ॥ ५ ॥

गौरिति । गौः तन्मुखं सिद्धमुखं वीक्ष्य जलैः आकुले अक्षिणी यस्यास्तथा सती देहं मुमोच । कामानुजेन क्रोधेन निपीडितः आत्मा मनो यस्य सः विघूर्णिते दृशौ येन सः । भ्रांता मतिर्यस्य सः मनस्वी शूरोपि सिद्धः तन्मुखं तथाविधं वीक्ष्य मुमोह वैचित्यं प्राप ॥ ६ ॥

धेनुरिति । येन धेनुर्हता सः कालनामा कालसंज्ञः यथार्थनामा इत्यर्थः । अयं सिद्धस्तस्य कालनाम्नः असिं खड्गं प्रगृह्य तस्य पादौ आकृष्य भूमौ निपात्य उदरं भित्वा तं कालं निजघान ॥ ७ ॥

अनिच्छयेति । मया यत् यस्माद्धेतोः इयं गौः अनिच्छया हता । त्वया तु अहं बुध्या निहतोऽस्मि । तत् तस्मात् पुनर्वीरस्य गृहे उत्पत्य जन्म गृहीत्वा सोदराणां भावः सोदरता सोदरता सहायो यस्य सः तथाभूतः सन् त्वां हंतास्मि मारयिष्यामि । एभिः त्रिभिः भ्रातृभिः सह जन्म गृहीत्वा त्वां हनिष्यामीत्यर्थः ॥ ८ ॥

उक्त्वेति । आर्तः दुःखी सः कालनामा एवं उक्त्वा देहं विससर्ज । सिद्धः खिन्नः सन् मनसि इदं उवाच । इदं किम् । दैवं प्रबलं प्रयत्नो दुर्बलः । प्रयत्नः प्रबलः दैवं दुर्बलं. । इति मतद्वयं । तत्र पुरुषप्रयत्नात् विधिः दैवं बलीयान् इदं मतं सत् । अन्यत् मतं असत् । प्रबलं न ॥ ९ ॥

जितेंद्रिय इति ॥ १० ॥ न कामय इति । हे ईश गजानन । मुक्तेः अन्यं वरं न कामये न इच्छामि । यस्मात् त्वद्दर्शनं मुक्तिफलं हि । अत्र अस्मिन् काले ॥ ११ ॥

गजाननः सिद्धवचनं श्रुत्वा उत्तरमाह द्वितीयेति त्रिभिः ॥ १२ ॥ १३ ॥ १४ ॥

उक्त्वेति । असावपि सिद्धोऽपि तं गजाननं प्रणम्य कालेन देहं भूमौ विनिधाय परित्यज्येत्यर्थः । पुनरेव बल्लाळस्य पत्न्यां जातः ॥ १५ ॥

नारायण इति । स एव सिद्ध एव नारायणाख्यां प्रगतः नारायणराय इत्यभिधया प्रसिद्धिं गतः इत्यर्थः । यः कालनामा येन गौः हता स तु खड्गसिंहः खड्गसिंहसंज्ञया प्रसिद्धोऽभूदित्यर्थः । यः कालनामा स तु समरसिंहः ॥ १६ ॥ य इति ॥ १७ ॥

गौरिति । गौः या सा गौः एव नारायणस्य ए१ गृहे जज्ञे । सतां वरिष्ठः असौ नारायणः तां अतिभक्तितः प्रपूजयामास ॥ १८ ॥

याते इति । सः माधवनाम्नि बंधौ भ्रातरि दिवं याते सति । विष्णुं जायोदरं पत्युदरं प्रविष्टं मत्वा । नृपस्य शाहार्यद्राज्यं तस्य या रक्षा रक्षणं तत्र दक्षोऽपि विरक्तः सन् सुरवर्यलोकं स्वर्गं यातः ॥ १९ ॥

बाणेति । कामदेवः मदनः दिविजेश्वरो देवता यस्य तस्मिन् सितपक्षजे तिथौ भाद्रमासशुक्लत्रयोदश्यामित्यर्थः । तिथिर्द्वयोरित्यमरः । अमरेंद्रतां देवत्वं ययौ स्वर्गं जगाम इत्यर्थः ॥ २० ॥

स्वर्गगमनमेव सविस्तरमाह संवत्सर इति । विजये विजयनाम्नि संवत्सरे । ग्रहेशे सूर्ये मध्यान्हगे सति । वैरं प्राग्जन्मभवं स्मरंतः अमी खड्गसिंहादयः समेताः संताः भुक्तं अथो अनंतरं शय्यागृहं व्रजंतं नारायणं जघ्नुः ॥ २१ ॥

प्रासादवर्यमिति । भवानिरायो नाम प्रतिनिधिः युवराजः । वीरैः सहितः सन विवेश ॥ २२ ॥

निर्हृत्येति । सचिवाः तत्कुणपं कलेवरं निर्हृत्य तत्र उचितं विधाय तदबलां नाम्ना गंगां गर्भिणीं ज्ञात्वा पुण्यनगरसमीपे पुरंदरगिरौ तां निधाय समेताः मिलिताः संतः गिरिपुरः स्थिताः ॥ २३ ॥

अथ माधवनाम्नः नारायणसूनोश्चरितं गर्भत एव आह पत्राणीति । अस्य माधवस्य सुकृतेन पुण्येन निबोध्यमानाः एवं कुरुतेति उपदिश्यमानास्तन्मंत्रिणः

गर्भगतमाधवराश्नाम्ना चिन्हिततराणि पत्राणि संप्रेष्य लोकानिचयस्य जनसमूहस्य अखिलानि कार्याणि अकुर्वन् ॥ २४ ॥

विवर्द्धमान इति ।स्वजनस्य यः उपतापः तस्य विनाशे दक्षः ।.क्षयेन वीता रहिता मूर्तिः यस्य सः। एकत्र नरदेहस्य विंशतिवर्षपर्यंतं वृद्धेः। अन्यत्र शुक्लक्षभवत्वाद् वृद्धेः क्षयातीतत्वं । जठरमुदरमेव अंबरं आकाशस्तत्र विवर्धमानः सः माधवेंदुः । द्विषंत एव शत्रव एव अंधकारस्तं सद्यः जहार हृतवान् ॥ २५ ॥

घनमिति । यथा वातजवः वायुवेगः घनं मेघं । सहस्रं गावः किरणाः यस्येति सहस्रगुः सूर्यः । गौः स्वर्गे वृषभे रश्मौ वज्रचंद्रमसि स्मृतः इति विश्वः । तमिस्रं तिमिरं । शीतकरश्च तापं क्षणात् निहंति । एवं सुतरां अप्रतिमः प्रभावो यस्य सः यद्वा स्वे आत्मीयाः पूर्वजाः प्रतिमा उपमा यस्य सः स्वप्रतिमभावः । अयं माधवः गर्भगत एव निजारीन् अजीघनत् हृतवान् । णिजंताद्धंतेर्लुङि चङि द्वित्वं ॥२६॥

अथ गर्भगतस्य माधवस्य राज्यरक्षणं केन कृतमित्यत आह बल्लाळ इति ॥ २७ ॥

इति श्रीशिवकाव्यव्याख्यायां स्वयंकृतायां षोड्शश्चमत्कारः ।

---

## श्रीशिवकाव्यस्य परिशिष्टं द्वितीयम्.

### पूर्वार्द्धांतर्गतो द्वादशश्चमत्कारः*

प्रतापादिसिंहो जयत्येष राजा प्रजापालकः कालितारातिवर्गः ।
द्विजाधीशवाञ्छाप्रपूर्तिप्रदक्षः क्षमासंयुतः पूजितः सर्वभूपैः ॥ १ ॥
कलावत्र लोलैर्नृपालैः कुशीलैश्चिरं पीडिते भूतले सैन्यवृन्दैः ।
निहंतुं यथोदेति भानुस्तमिस्रं तथायं नृपस्तानरीन् वीरवर्यः ॥ २ ॥
रविस्तामसं प्रत्यहं हन्ति देवः पुनस्तज्जगत्पीडयत्येव रात्रौ ।
अहो अस्य भूपस्य भीताः सपत्ना दिगन्तान् ययुस्ते न यान्तीति चित्रम्
गदोपि प्रभुर्नैव शक्तो यदीयं जनं बाधितुं का कथा दुर्जनस्य ।
भिषक्संहतिर्भेषजानां गणं स्वं जले प्राक्षिपत् पूर्वजैः सञ्चितं स्वैः ॥४॥
सुरेन्द्रोपि वर्षासु भीतो नु देवो यदीये सुदेशे जलं वर्षति स्म ।
खरांशुर्जलं रश्मिभिर्ग्रीष्मकाले यदीयस्य देशस्य नेतुं न शक्तः ॥ ५ ॥
मही सस्यजातं दशघ्नं यदीयाद्भयादेव सूते नु काले स्वकीये ।
नगाश्चाम्रमुख्याः फलन्ति स्वकाले फलानि प्रशस्तानि भूपप्रियाणि ॥६॥
यदीये पुरे पूर्वमम्भांसि पातुं प्रयत्नेन लभ्यानि वर्षास्वपीह ।
निदाघेपि पूर्णानि वार्भिः सरांसि जलान्तश्च सौधं धराधीश्वरस्य ॥ ७ ॥

---

* अथ चमत्कार एकस्मिन्नेव पुस्तके वर्तते न तु सर्वेषु.

धनाधीश्वरा वृद्धिकामा यदीयं पुरं प्राप्य कामान् न चापुर्नृपालात् ।
धनाधीशकोशानुकारिप्रभूतस्फुरत्कोशनाथाद्यतो दीननाथात् ॥ ८ ॥
स राजा प्रजा आत्मजातानिवावन्ननुप्रोक्तभूपालधर्मान् स्मरन् सन् ।
हृषीकेशदेहोद्भवायास्तटिन्याः समीपे वसन् कीर्तिजालं तनोति ॥ ९ ॥
उपत्यकायामचलोत्तमाद्या सतारनाम्नी नगरी सुताभूत् ।
प्रतापसिंहं पतिमम्बिकेव शिवं कृतार्थत्वमगादुपेत्य ॥ १० ॥

विमलैः कमलैरसङ्कुलैर्बहुलैर्युक्ततरैर्जलाशयैः ।
सहिता सहिता जनस्य या महिता या रहिता न मंगलैः ॥११॥
बकुलैर्विपुलैश्च वंजुलैः पनसैः पूगकुलैः कलिद्रुमैः
सहकारचयैः कपित्थकैर्बदरीभिर्विहिताखिलातपा ॥ १२ ॥
नगरी न गरीयसी तदन्या रुचिराकारधरा धराधिपेन ।
अविता भविता न भूतपूर्वा भवनैश्चोपवनैर्धनैरुपेता ॥ १३ ॥

दोषाकरस्य भगिनी सहजं स्वदोषं हित्वेतरत्र सततं भजते नृपं तम् ।
यत्सर्वलोकगुरुभागभवोद्भवोयं सेवोचितैव सकलैर्विभवैरतोस्याः ॥ १४ ॥

भुङ्क्ते रसान् प्रतिदिनं षडियं नृपस्य
जिव्हाग्रगा विधिसुता बुधसंहतौ तु ।
सुस्पष्टभिन्नबहुलार्थभरोपपन्नान्
स्वच्छान् रसान् नव तनोति विचित्रमेतत् ॥१५॥

बाह्यान् रिपून् यः प्रविजित्य जेता स्वान्तस्थितं शत्रुचयं विजिग्ये ।
विलोक्य तच्छत्रुविहीनमत्य गुणा दयाद्या अधितष्ठुरस्य ॥ १६ ॥
अमात्यैश्चतुर्भियुतः साममुख्यैरुपायैरखण्डं सदा खण्डमेतम् ॥
प्रयाति प्रभुः पालनं कन्ननेन प्रशस्तं यशो येन लब्धं जगत्याम् ॥१७॥

सुरस्तरुर्वा द्विजोतियत्नसमर्चनाद्यच्छति कल्पितं यत् ।
अयं नृपोनर्थितमर्थितं वा गुणान्वितायैव ददाति सद्यः ॥ १८ ॥
ऋतवः सकलाः फलैर्निजैः कुसुमैश्चारुदलैरथाङ्कुरैः ।
दिवसे दिवसे भजन्ति तं नरनाथं सुरवर्यभागिनम् ॥ १९ ॥

सुनला अनला अनिला विमला अचला अचलाप्यचला कमला ।
महिला बहुलाः पृथुलाः सुकलाः [सुकलाः] सकलाश्च भजन्ति नृपम् २०
गुणेषु लुब्धाः सकलाः कलास्तं सिषेविरे दास्यमुपेत्य भूपम् ।
सम्पत्तिरेनं युवतीव भेजे रुष्टा विपक्षत्रुगृहं जगाम ॥ २१ ॥

यदीयकरगा खड्गधारा भागीरथी ध्रुवं ।
पापा अपि परे यस्याः स्पर्शनाद्यान्ति दिव्यताम् ॥ २२ ॥

यस्मिन् पालयति क्ष्मां नरपतौ बन्धो गजानां वधो
यूकामत्कुणसंहतेरपनयाद् बालेषु सन्ताताडनम् ॥
रोधः कीरमुखेषु पक्षिषु मया दृष्टस्तथा सङ्गरे
मृत्युर्बुद्धिबलेषु युद्धमतुलं शत्रौ रतौ कामिनोः ॥ २३ ॥
यस्मिन् खड्गकरे तुरङ्गमगते सङ्ख्याश्ववाहैर्युते
स्वस्थानं प्रविहाय निर्गतवति प्रद्योतनः कम्पते ॥
शत्रूणां निचयः स्वमण्डलयुतः शेषोपि पातालगो
लोकाधीश्वरवन्द्यवन्दितपदद्वंद्वद्विजस्वस्तरौ ॥ २४ ॥
युद्धे योऽर्जुनवद्द्विषौ रविजवद्दाने तु गन्धर्ववद्-
द्वित्ते यक्षकुलेशवज्जनकवद्दीने नये धर्मवत् ॥
पम्पायां चापि गिरिशवद्वितरणे यः कर्णवत् काव्यव-
द्बुद्धौ भूपवरार्चितो विजयते सिंहः प्रतापादिगः ॥ २५ ॥
सोयं तीक्ष्णशिलाशिताशुगहताराति्व्रजो बुद्धिमान्
श्रीमान् दीनजनावनो जनहितो दुर्गाप्रसादात्मभूः ॥
विप्रव्रातकवीन्द्रकल्पतरुराड्भूपालमूर्धोद्गल-
न्मालाधूलिविराजितामलपदद्वन्द्वो नृपो राजते ॥ २६ ॥
राजन् त्वन्निहतारिमूर्धनिलयात् सद्योवरुह्यायशो
ह्यावालस्थविरं जगत् कचमिषाद् व्याप्याधितष्ठौ यदा ॥
सत्यं स्वच्छतरं यशस्तव तदा यातं प्रभो ते वयो-
भागाभ्यां विधिना जने विनिहिते पूर्वापराभ्यामुभे ॥ २७ ॥
राजन् राजशिरोमणे त्वदरिसत्प्रसादभूम्यन्तर-
प्रादुर्भूतविशालरम्यहरितस्वच्छाग्रदूर्वाङ्कुरान् ॥
लब्ध्वा यत्नत एत्र भक्तनिचया लम्बोदरं प्रत्यहं
संपूज्य प्रणमन्ति तोषमतुलं पुष्पैरनर्घ्यैरपि ॥ २८ ॥
प्रतापसिंहो जयति प्रकामं कामं जनानां परिपूरयन् सन् ।
सन्यस्तशस्त्रारिगजा यदीयाद्भयादरण्यं बहु मानयन्ति ॥ २९ ॥
सोयं यन्त्रवराद्ययानिर्जितरिपुव्रातो व्रती घोटकी-
प्राजापूरितभूतलोऽतुलयशः सच्छन्नभूमण्डलः ॥
दीनान्धव्रजपालनाहितमहाखड्गमहीपालको-
ष्णीषोद्धर्तिसुमाल्यराजितपदो वर्वर्ति सर्वोपरि ॥ ३० ॥

१ " खिलमहीदेवालिकल्पद्रुमः " इति वा पाठः
२ " महोवनी " इति वा पाठः

देवी देवगणैः स्तुता दिविभवैः पुष्पैः समाराधिता
दिव्यैरेव विभूषणैः परिवृता दिव्याम्बरालङ्कृता ॥
दिव्यैरायुधरत्नकैश्च सहिता दिव्याद्रिसिंहास्थिता
देवी[3]. भक्तमिमं करोतु नृपतिं पुत्रैश्च पौत्रैर्युतं ॥ ३१ ॥
श्रीमद्भीमरथीतटान्तविलसन् हर्म्यैः सुरम्यैर्युतः
पेडग्राम इतीरितः क्षितितले यो वालयः पुण्यभूः ॥
तत्रत्यः पुरुषोत्तमोऽकृत कविः काव्यं यशस्यं शिवं
भूपं मुख्यतयाधिकृत्य सुकृती तत्पूर्वभागः कृतः ॥ ३२ ॥

इति श्रीशिवकाव्ये पुरुषोत्तमपण्डितविरचिते
द्वादशश्चमत्कारः ॥ १२ ॥
पूर्वार्धं समाप्तमेतत्

---

## श्रीशिवकाव्यस्य परिशिष्टं तृतीयम्*.

### षष्ठमश्चमत्कारः+

या वारणानामनदी वरिष्ठा तद्दक्षिणे सिन्धुतटान्तमेषः ॥
शिवाज्ञया राज्यमचीकरत् तत्प्रजा अमर्त्याधिकसौख्यभाजः ॥८॥
तदीयसूनुस्त्वथ शम्भुनामा शम्भुप्रसादाप्तसमस्तकामः ॥
द्विजातिवर्गान परिपालयन् सन् चकार राज्यं बहुकालमेषः ॥९॥
शम्भोः प्रसादादभवत् स शम्भोः शिवाभिधो भूपवरो वदान्यः ॥
पूर्वाच्छिवादप्यधिको गुणौघैर्धराधिनाथाश्रितकल्पवृक्षः ॥ १३ ॥
शिवकुले स बभूव शिवो नृपः शिवमयं स्वगुणैस्तमधोकृत ॥
मनुमुखोत्तमभूपतिवर्त्मनामनुसृतेरमुमूर्ध्वमथानयत ॥ १४ ॥
गुणरत्नसमूहशालिनं खलु रत्नाकरनामकं द्विजम् ॥
विदधे निजराज्यधूर्वहं सचिवं वैरिसमूहघातकं ॥ ३१ ॥
सिद्धेश्वरः सिद्धगणप्रपूज्यः सिद्धोणिमाद्यष्टविभूतिरासीत ॥
यः कृष्णवेणीतट आस्थितः सन्तोषयन्नृहरिं स्वभक्त्या ३२
प्रमादतस्तस्य स विप्रवर्यस्त्रैकालिकं ज्ञानमवाप योगी ॥
यदीयगेहे बुभुजे सहस्रं दिने दिने ज्ञानवतां द्विजानाम् ॥ ३३ ॥
अत्रार्यवैतस्य सुता बभूवुः सुरैः समानाः सुरवर्यमुख्यैः ॥

---

३ " मेयं शाहनृपं प्रयातु सततं " इति वा पाठः
४ " सदावतु नृपं " इति वा पाठः
* एकस्मिन पुस्तके केषुचिच्चमत्कारेषु अधिकानि पद्यानि दृश्यन्ते तान्यस्मिन् परिशिष्टे निवेशितानि चमत्कारक्रममनुसृत्य. + एषु पद्येषु करवीरस्थद्वितीयशिवरायवर्णनमस्ति.

मन्येऽत्रिरेवायमथास्य पत्नी तथानुसूयेव सुतास्त एव ॥ ३४ ॥
ज्ञानप्रदं तं प्रतिपद्य राजा नत्वा शिवो ज्ञानमवाप तुष्टात् ॥
ब्रह्मैव सर्वं न ततोन्यदस्ति मेने स चेत्थं स्वगुरु प्रसादात् ॥३५॥
पुनः शिवाख्यो भूपोसाववतीर्णो नु शत्रुजित् ॥
रामदासोपि स पुनः सिद्धेश्वरमिषेण किम् ॥३६ ॥
विराजते यत्र सदैव लक्ष्मीर्दिव्यालयस्था जननी जगत्याः ॥
कोलापुरं यत् प्रथितं पृथिव्यां तत्रायमास्ते शिवनामभूपः ॥४०

---

सप्तमश्चमत्कारः

करवीरपुरीतिभूमिलोके प्रथिता या नगरी गरीयसी ॥
कमलालयशोभमानभूमिः शिवभूपोधिवसत्यसौ हितां ताम् ॥२३॥

---

दशमश्चमत्कारः*

शिवः स भूपः शरदं विलोक्य सपत्ननाशोद्यतचित्तवृत्तिः ॥
गृहं समागत्य जनैर्विहीनं रत्नाकरं प्राह निजं प्रधानम् ॥ १ ॥
अपराधः सकृद्राज्ञा सोढव्यो रिपुणा कृतः ॥
क्रियासमभिहारेण कृतं कः सहते बुधः ॥ २ ॥
त्रांसग्रामस्थितः सोयं शत्रुर्मे ब्राह्मणाधमः ॥
निजं धर्मं परित्यज्य क्षात्रे कर्मणि संस्थितः ॥ ३ ॥
विरोधी मम राज्यस्य हन्तव्य इति मन्मतिः ॥
न हन्तव्यो ब्राह्मणत्वादेवं दोलायते मतिः ॥ ४ ॥
प्रधानपस्तमाहेदं जितः शत्रुर्हि हन्यते ॥
जयापजययोर्नैव नियमो दृश्यते युधि ॥ ५ ॥
सहायास्तस्य बहवः शौर्यमप्यस्ति तत्र हि ॥
कोशो बलं तत्र नयो दुर्जयः श्रूयते मया ॥ ६ ॥
" द्वौ श्लोकावपहायात्र "
सन्निपातज्वर इव दुःसाध्योयं महान् रिपुः ॥
उपायेन चतुर्थेन साध्यः स्यान्नात्र संशयः ॥ ९ ॥
साम दानं च भेदश्च निष्फला स्युर्दुरात्मनि ॥

---

१ "मासीत्" इति वा पाठः

* एषु पद्येषु पटवर्धन राजहस्य परशुरामभाऊ नाम्नो वीरस्यवर्णनमस्ति.

२ इदं महाराष्ट्रभाषायां " तासगांव " इति प्रसिद्धम्.

सान्निपातिकरागे हि कषायादि यथा वृथा ॥ १० ॥
उपेक्षा तु न युक्तास्य रोगस्येव दुरात्मनः ॥
परितो बद्धमूलः सन्नस्मान् बाधेत सर्वथा ॥ ११ ॥
आततायिनमायान्तं हन्यादेवाविचारयन् ॥
इति यन्मुनिभिर्गीतं तद्वचः परिपालय ॥ १२ ॥
अत एव रणे द्रोणः पाण्डवैर्विनिपातितः ॥
त्वाष्ट्रस्तथा विश्वरूपः शक्रेण च निपातितः ॥ १३ ॥
तोफाः सिद्धा विधीयंतां नानाशकटवेशिताः ॥
बाणा अपि प्रकर्तव्याः क्रमेलगणधारिताः ॥ १४ ॥
दारुराशिर्गोलराशिः कर्तव्यश्च महत्तरः ॥
बिंदुखाधारिणः पत्ता अश्वारोहाश्च सिद्धिदाः ॥ १५ ॥
तोफादिशब्दजातस्य निरुक्तिर्विदुषां मुखात् ॥
श्रुता सा प्रोच्यते राजन् सावधानमना भव ॥ १६ ॥

चतुः श्लोकाश्चापहायाग्रे.

देशं कालं कोशजातं दुर्गाणि विविधानि च ॥
अमात्यांश्च सहायांश्च वीक्ष्य युद्धं विधीयते ॥ २१ ॥
शत्रोः क्षये स्वस्य वृद्धौ यात्रा युक्तान्यथा न हि ॥
इदानीं दृश्यते शत्रोः क्षयः स च दुरत्ययः ॥ २२ ॥
रावणस्य यथा पूर्वं दग्धा लङ्का हनूमता ॥
तथास्यापि पुरा पूर्वं दग्धव्येति मतिर्मम ॥ २३ ॥
संङ्ग्रामसम्पदखिला जगदम्बाप्रसादतः ॥
दृश्यते भूपते नैव सहायो बलवत्तरः ॥ २४ ॥
राजा प्रोवाच तच्छ्रुत्वा यदुक्तं तत् तथा खलु ॥
सहायोपि महानस्ति नैव चिन्ता विधीयताम् ॥ २५ ॥
जगदम्बा सहायो मे सिद्धेशश्चापरो गुरुः ॥
क्षणे रुष्टाः क्षणे तुष्टा इतरे परपक्षगाः ॥ २६ ॥
रिपोः सुतं विजेष्यामः प्रथमं सङ्गरे वयम् ॥
ततस्तं कण्टकं हत्वा स्वप्स्यामः स्वगृहे सुखम् ॥ २७ ॥
प्रतिग्रहोऽध्यापनं च याजनं चेति जीवनम् ॥
विप्रस्य ब्रह्मणा प्रोक्तं तत् परित्यक्तवानयम् ॥ २८ ॥
अधीत्य विप्रो राजानं गत्वा प्रार्थयते सदा ॥

अयं दुरात्मा मद्राज्यं हर्तुं समभिवाञ्छति ॥ २९ ॥
सदा संतुष्टमनसो ये विप्रास्ते महत्तराः ॥
असन्तुष्टतरा भूपा भुञ्जन्ते श्रियमूर्जिताम् ॥ ३० ॥
अस्मासु शत्रुषु तथा विपरीतमिदं द्वयम् ॥
कलिरूपस्य कालस्य योजनेयं दुरात्मनः ३१ ॥
अस्त्वेतत् किं बहूक्तेन तत्प्रासादस्तु भस्मसात् ॥
विधेयो न तदन्येषां न न्याय्यं तद्विदाहनम् ॥ ३२ ॥
दग्धे गृहे दुरात्मासौ पदाहत इवोरगः ॥
सेनया सर्वया सार्धमायास्यति रुषा श्वसन् ॥ ३३ ॥
स जेतव्यः प्रयत्नेन शिरोरोगो ह्ययं मम ॥
तस्मिन् जिते प्रजा सर्वा सुखिनी भविता मम ॥ ३४ ॥
इति निश्चित्य शत्रुं तं स्वस्थानादन्यतो गतम् ॥
निरीक्ष्य गत्वा तद्गेहमदीदहदसौ नृपः ॥ ३५ ॥
स्तम्भानावेष्ट्य वसनैस्तैलार्द्रैः सर्वतोऽखिलान् ॥
यशोराशिमिवैतस्य ददाह भवनोत्तमम् ३६ ॥
श्रुत्वा वृत्तं स रामोपि प्रतिजज्ञे स्वयं तदा ॥
हनिष्यामि नृपं युद्धे हतो यास्यामि वा दिवं ॥ ३७ ॥
तदाप्रभृति राजापि सन्नद्धानखिलान् भटान् ॥
अकारयदहोरात्रं दत्वा वेतनमादितः ॥ ३७ ॥
रामोऽपि गत्वा नगरं दृष्ट्वा तद्गेहदुर्दशाम् ॥
तत्रत्यवन्हिनाविष्ट इव जज्वाल सर्वतः ॥ ३८ ॥
सोपि योधान् वीरतरान् परीक्ष्य बहुवेतनान् ॥
अश्वारोहान् पदातींश्च समीपेवासयत् सदा ॥ ३९ ॥

इति श्रीशिवप्रतापकाव्ये पुरुषोत्तमपंडितविरचिते दशमः सर्गः १०

---

## एकादशश्चमत्कारः

रामस्तदा परशुपूर्वपदः स चक्रे युद्धोद्यमं विविधयंत्रिगणैरुपेतः ॥
अश्वाधिरोहनिवहैः पदगैः प्रवीरैर्म्लेच्छैर्युतः प्रथमजेन सुतेन चैव ॥ १ ॥
देवाग्निविप्रनिचयान् प्रतिपूज्य भक्त्या दैवज्ञदत्तसमये स यदा प्रतस्थे ॥
दुष्टान् तदा हि शकुनान् बहुशो ददर्श नग्नं नरं क्षपणकं गतभर्तृकां च ।।२।।
प्रारभ्यते न खलुविघ्नभयेन नीचैः प्रारभ्यविघ्नविहता विरमन्ति मध्याः ।
विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः प्रारभ्य उत्तमजना न परित्यजन्ति ३

इत्थं वचः स्वमनसि प्रविचार्य धीरः
प्रस्थानमेव कृतवान् कृतशान्तिकादि ॥
अग्रे दिने निजनिकेतनतः कृतात्मा ।
क्रोशं ययौ सकलसैन्यपरम्परयुक्तः ॥ ४ ॥
प्रस्थानमस्य नृपतिः स निशम्य दूतैः ।
कृष्णः स्वयादवगणैरिव योधमुख्यैः ॥
आप्तैर्विनिर्जितपरै रणकर्मनिष्ठै- ।
र्हेमाम्बरैः कटककुण्डलिभिः प्रतस्थे ॥ ५ ॥
पूर्वं स पूर्णकलशं युवतीशिरस्थं ।
विप्रस्त्रियं पतिमतीं ससुतां ददर्श ॥
वस्त्रद्वयं सकनकं नृपतिः स ताभ्यां ।
दत्वा ययौ नगरतो बहिरल्पदेशम् ॥ ६ ॥
मितंगमे दन्तिनि भूमिपालः
स्थितः प्रतस्थे स्थितिकृज्जनस्य ॥
अमात्यनाथेन च तेन युक्तो ।
यशोमयूखैर्धवलीकृताशः ॥ ७ ॥

दशश्लोकाश्चापद्यापाग्रे.

रामोपि सैन्येन निजेन युक्तस्तूर्णं ययौ योद्धुमनेन राज्ञा ।
यथा पुरा पाण्डवकौरवीये सेने समाजग्मतुरेवमेते ॥ १७ ॥
जयाभिलाषेण विपन्यमानौ राजद्विजौ क्रोशयुगान्तरेण ।
आस्तां स्वसेनासहितौ हितौ तौ स्ववर्गजातस्य हितावहस्य ॥ १८ ॥
राजाप्तदूतस्य मुखेन वाचमुवाच हे विप्रवर स्वधर्मम् ।
विहाय यातोस्यवलम्ब्य धर्मं परस्य गर्ह्यं किमु लज्जसे न ॥ १९ ॥
नाहं स्वकीयं परकीयमुक्तं धर्मं मुनीन्द्रैः कमपीह जाने ।
मन्तव्यता या तु स चित्तधर्मस्तदग्धमेवास्ति गृहस्य दाहात् ॥ २० ॥
हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् ।
इति वाक्यं हरेः स्मृत्वा योद्धुं प्राप्तोस्मि साम्प्रतम् ॥ २१ ॥
रामं परशुपूर्वं मां जानीहि पुनरागतम् ।
त्वमसि क्षत्रियस्तस्मात् स्मर मत्कृतिमादिमाम् ॥ २२ ॥
एवमुक्त्वा स विप्रेशो योद्धुं सज्जोभवत् तदा ।
राजापि युद्धोद्यतधी[illegible]नीत सै[illegible] संयुतः ॥ २३ ॥

कृतान्हिको गोद्विजदेववन्हीन् नत्वाथ भुक्त्वा ससुतास्त्ववर्गः ।
स्वदुन्दुभिध्वाननिवेदितात्मविनिर्गमोगाच्छिविरात् स्वकीयात् ॥ २४ ॥
तुरङ्गमारूढममुं तुरङ्गिभटा अनेके प्रथिताः पृथिव्याम् ।
पदातयो यन्त्रपुरःसराश्च गजाधिरूढा अनुजग्मुरीशं ॥ २४ ॥
राजा गजारूढभटैरनेकै रत्नाकराद्यैः परिवारितः सन् ।
विनिर्ययौ बन्दिजनस्तुतश्रीः कृताखिलो दन्तिवराधिरूढः ॥ २५ ॥

श्लोकत्रयमपहायाग्रे.

रामस्यापीह वीरा निजभुजविजितारातिवर्गास्तदानीं
नानावाद्यानि धीरा दृढकवचधरा वादयन्तोभ्यगच्छन्-
नानायन्त्राणि तूर्णं नृपतिभटचये मोचयन्तोतिहृष्टाः
पुष्टास्ते चापि सर्वे सुरनिलयनिवासानंदचित्ता अचिन्ताः ॥२९॥

श्लोकचतुष्टयमपहायाग्रे

रामस्य सूनुः स तु रामचन्द्रः स्वसैनिकध्वंसमवेक्ष्य सर्वम् ।
तुरङ्गवर्ये चतुरः स्थितः सन् ययौ पुरो वीरवरानुगोसौ ॥ ३४ ॥
नृपोपि सैन्येन निजेन युक्तो योध्दुं ययौ शत्रुसुतेन सार्द्धं ।
तयोरभूद्युद्धमतीवघोरं भयङ्करं भीरुनरव्रजस्य ॥ ३५ ॥

एकं श्लोकमपहायाग्रे.

नृपस्य वीरैर्विनिपीतरक्तशरैर्हताश्चन्द्रभटा अनेके ।
दिवं गता भीततराश्च केचित् प्रदुद्रुवुर्नाथमपास्य योधाः ॥ ३७ ॥
एकाकिनं खड्गकरं तुरङ्गवरस्थितं शत्रुसुतं स राजा ।
धृत्वानयत् स्वं शिबिरं जयश्रीविराजमानः स्वजनैरुपेतः ॥३८॥
रामस्तदाकीर्तिभरप्रभारनिपीडनानम्रशिराः स्ववक्त्रम् ।
अधो विधायैव जगाम नैजं गृहं गृही वीरचयैः [स्वकीयैः] ॥३९॥
शल्यं विना शल्यमलङ्घ्यदुःखं सदा हृदि स्वे खलु मन्युमानः ।
निद्रां न लेभे निशि जागरेपि नृपं ददर्शाग्रत एव नित्यम् ॥४०॥
स गेहदाहात्मजपारवश्यदुःखद्वयातप्ततनुस्तनूजम् ।
विचिन्तयन्नात्मपराजयोत्थदुःखाकुलस्तं नृपतिं जजाप ॥ ४१ ॥
रामाभिधो निजपुरस्थितसर्वलोकं भक्तं हरस्य विनिवेदयति स्म दूतैः ।
शंभोः शिवादपरमत्र गृहाण नाम यद्यस्ति ते हरनुतौ परमोभिलापः ४२

१. स हि विप्रवर्यः इति वापाठः २ रेनं इति वापाठः.

श्लोकचतुष्कमप्रहायाग्रे
रामोथ तेन रिपुणा सह योद्धुकामः
कामी पुनर्विविधसाधनतत्परोऽभूत् ।
अश्वान्नरान् विविधयन्त्रगणांश्च बाणान्
वर्माणि शस्त्रनिचयान् सुदृढांश्चकार ॥ ४७ ॥
इति श्रीशिवप्रतापकाव्ये पुरुषोत्तमपण्डितविरचिते एकादशः सर्गः ॥

---

## द्वादशश्चमत्कारः

राजा तु तं रिपुसुतं समरे विजित्य जेता गृहं समधिगम्य स तेन सार्धम्
आनन्दकाननिर्विग्नमना मनस्वी स्वीयं तनूजमिव पालयति स्म चन्द्रम्
यशोमयूखैर्धवलीकृताशो हृतारिगाढान्धतमिस्रवर्गः ।
राजाविरासीत् प्रणतप्रपालो विद्वद्घटाकैरवतोषकारी ॥ २ ॥
तं सूतमागधजनस्तुतकीर्तिजातं देवद्विजार्चनरतं प्रथितप्रतापम् ।
दुर्वृत्तवृत्तशमनं शमितारिजालं भूपा इवेन्द्रममराः समुपासते स्म॥३॥
दीनान्धपालनपरः परिपूतगात्रः क्षात्रं स्वधर्ममनिशं परिपालयन् सन् ।
भूमिं शशास निखिलां खलदण्डधारी धीरो धराधिपतिपूजितपादपद्मः ४
तं शत्रुसूनुमनुजं स्वमिव प्रपूज्य कालं कियन्तमथ वस्त्रविभूषणाद्यैः ।
सत्कृत्य यानमधिरूढममुं स्वतातगेहं द्विजावनपरं गमयां चकार ॥ ५ ॥
दृष्ट्वा सुतं द्विजपतिः प्रणमन्तमारात् सन्दष्टसर्वदशनच्छदकोपपूर्णः ।
सङ्क्षुब्धसर्वकरणः प्रबभूव तप्तगात्रस्तदा न निजगाद स साध्वसाधु ६
युद्धोद्यमं नरपते कुरु तूर्णमेहि त्वां छद्मना जितसुतं समरे विजित्य ।
नीत्वा निजं गृहमहं सुसुखीभवेयमित्थं वचः स निजगाद नरेन्द्रदूतम् ७
दूतः समेत्य नृपतिं निजगाद सर्वं तद्रामवाक्यमतिधीरतया प्रयुक्तम् ।
योधेषु सत्सु सदसि प्रथितेषु तेषु श्रुत्वा नृपेण सहिता जहसुः प्रवीराः ८
तत्कालमेव नृपतिर्निजवीरमुख्यान्
दुर्गाश्रिजाद्रमयाति स्म पुरः सयत्नान् ।
अश्वाधिरूढनिचयान् गजगामिनश्च
बाणान् क्रमेलविधृतान् पदगांश्च मुख्यान् ॥ ९ ॥
स्नात्वा कृत्वा सर्वमन्हः स कृत्यं भुक्त्वा नत्वा दैवविद्गुरूंश्च ।
दत्वा देयं दीनपंग्वादिकेभ्यो राजाव्राजीन्माश्विमुख्येन सार्धम् ॥ १० ॥
रामोप्येवं राजयानं निशम्य सन्नद्धोभूद् योद्धुमेतेन साकम् ।
स्वीयं सर्वं सैन्यमादाय वीरो वीरैर्धीरैः संयुतः सन् प्रतस्थे ॥ ११ ॥

कूपा जगर्जुर्धरणी चकम्पे ताराः पतन्ति स्म दिनावसाने ।
खेदः प्रहासश्चलनं स्थितेश्च बभूव चैतत्प्रतिमासु तत्र ॥ १२ ॥
अश्वा गजा उष्ट्रगणाश्च तस्य दिने दिने लोचनतोऽश्रुपातम् ।
चक्रुर्भृशं गृध्रचया ध्वजेषु सन्तास्थिरे क्रव्यभुजोऽतिहृष्टाः ॥ १३ ॥
निशावसाने स ददर्श देहं स्वप्ने स्वकीयं तिलतैललिप्तम् ।
दिगम्बरं दक्षिणदिक्प्रयातं कुलायवाहं गगनप्रचारम् ॥ १४ ॥
प्रस्पन्दनं वामभुजस्य नित्यं वामस्य नेत्रस्य तथोरुदेशे ।
एतानि रिष्टानि विलोक्य विद्वान् प्रतिक्रियां कामपि नैव लेभे ॥ १५ ॥
सेने उभे संगरभूमिमेत्य निजान् निजान् केतुवरान् सयन्त्रान् ।
पुरोविधायापभये स्थिते ते गङ्गार्कपुत्र्याविव शोभमाने ॥ १६ ॥
सा प्राङ्मुखी भूपवरस्य सेना प्रत्यङ्मुखी विप्रवरस्य चासीत् ।
अनेकवाद्योद्गतशब्दजातमपूरयद्भूमितलं समग्रम् ॥ १७ ॥
भूपालयन्त्रोद्गतगोलराशिः पूर्वं द्विजातेः पृतनामवाप ।
द्विजातियन्त्राढ्यविमुक्तगोला अथारुजंस्तस्य नृपस्य सेनाम् ॥१८॥
राजद्विजौ निर्जितवैरिवर्गावन्योन्यघातोद्यतचित्तवृत्ती ।
अयुध्यतां स्वेन बलेन सार्धं यथा पुरा पाण्डवकौरवौ च ॥ १९ ॥
अयस्मया बाणगणा नृपस्य क्रुद्धाहिवर्गा इव रामसेनाम् ।
अवीविशन् दारुभरप्रशब्दाविषज्जमाना हतवीरवर्गाः ॥ २० ॥

एकं श्लोकमपहायाग्रे

प्रतिकूलतरः प्रकम्पनो विविधो धूमचयो रजश्च यः
उदिता ननु धूमकेतवः किमु वा भानुसुतस्य ते चराः ॥ २२ ॥
यथाबलं सा द्विजपस्य सेना नियुध्यमानापि लयं जगाम ॥
दुर्दैवपुंसः सकलाः प्रयत्ना वैयर्थ्यमायान्ति फलस्य काले ॥ २३ ॥
क्रुद्धो रामः स्वेन सैन्येन सार्धं शिष्टैरागाद्योद्धुमग्रेऽग्रजन्मा ॥
भूपस्यागान्मन्त्रिवर्योपि तेन योद्धुं सार्धं भूपतेराज्ञयासौ ॥ २४ ॥
खड्गैः शूलैः पट्टिशैर्भल्लवर्गैर्भास्वद्भासोद्गच्छदच्छप्रभैस्तैः ॥
अन्योन्यं ते वैरिणो वैरभावाद्योधा योधान् जग्मुरग्रे समेत्य ॥ २५ ॥
योधाः सर्वे पुष्पितैः किंशुकैस्ते तुल्या आसन् छिन्नभिन्ना रणेऽस्मिन्
केचिद्वीराः प्राद्रवंस्तद्रणाद्यान् केचिद्वीरा नाकलोकं प्रजग्मुः ॥२६॥
तुरङ्गे सुरङ्गे कुरङ्गेण तुल्ये स्थितोऽसौ जवे विप्रवर्यो युयोध ॥
धराधीशधूर्येण विप्रेण साकं कृतात्मा करे खड्गमग्र्यं दधानः॥२७॥

रामो रत्नाकरश्चोभौ युयुधाते परस्परम् ॥
जयाभिलापव्याचित्तौ खड्गपाणी महामती ॥ २८ ॥
तदीययोधा अपि वाजिवाहाः परस्परं जघ्नुररीन् समेताः ॥
खड्गैः कृपाणैः करवालकैश्च भल्लैस्त्रिशालैर्विविधायुधैस्तै ॥ २९ ॥
बभूव तद्भूमितलं पिशाचपतेर्निवासेन समं समग्रम् ॥
छिन्नाननैश्छिन्नभुजैर्मनुष्यैस्तुरङ्गमैर्व्याप्ततरं गजोघैः ॥ ३० ॥
केचिन्मृताः केऽपि मुमूर्षवस्ते हा तात हा मातरिति ब्रुवाणाः ॥
संच्छिन्नबाह्वंघ्रिकरादिकाङ्गा रणाङ्गणे केचन शेरते स्म ॥ ३१ ॥
मंत्री नृपस्य करवालकरस्तदानीं योधैर्युतो द्विजपतेः पृतनामकृन्तत्॥
द्रौणिर्यथा निजसुहृत्प्रियकृत् कृपाणी शिष्टं व्यनीनशदलं बलमर्जुनस्य३२
रामः स्ववीरान् विहतानवेक्ष्य युयोध वीरोल्पभटैरुपेतः ।
वीरस्य युद्धे मरणं प्रपुण्यं नाकप्रदं चेति स मन्यमानः ॥ ३३ ॥
जित्वा रणे तं बहवः समेता धृत्वा सजीवं नृपतिं शशंसुः ।
द्रक्ष्यामि नैतस्य मुखं कदापि हन्तव्य एवेति जगाद भूपः ॥ ३४ ॥
धृष्टद्युम्नेन वीरेण यथा द्रोणो निपातितः ।
तथा रत्नाकरेणायं रामोऽपि युधि घातितः ॥ ३५ ॥
भेरीनिनादैः श्रवणातिरम्यैर्जयं स्वकीयं कथयन् स राजा ।
यशोमयूखैर्धवलीकृताशः समाविशत स्वं करवीरधाम ॥ ३६ ॥
दीपा असंख्या अथ रंगवल्ल्यो नानाविधा वाद्यगणा अगण्याः ।
दारुर्विचित्रा ज्वलति स्म यत्र तस्मिन् क्षणे तां नगरीं विवेश ॥३७॥
प्रासादमारुह्य पुरस्थकन्या अवाकिरन् लाजचयानसङ्ख्यान् ।
वाराङ्गना गानपराः पुरस्था ययुः पुरोभूमिपतेश्च तस्य ॥ ३८ ॥
द्विजव्रजाः पुष्पफलाढ्यहस्ताः सुभूषिताः प्रावरणैर्विचित्रैः ।
श्रुतिस्मृती नेत्रवरे दधाना जयाशिषस्ते प्रददुः समेताः ॥ ३९ ॥
ध्वजैः पताकानिचयैर्विचित्रं श्रेणीगणैश्छन्नतरं तदीयम् ।
घण्टापथं प्राप्य जनप्रबाधं सर्वान् प्रपूज्य स्वगृहं जगाम ॥ ४० ॥
इति श्रीशिवप्रतापकाव्ये पुरुषोत्तमपण्डितविरचिते द्वादशः सर्गः १२

---

## त्रयोदशश्चमत्कारः

अथ प्रजापालनमुख्यधर्मः शर्माण्वितन्वन् सततं प्रजासु ।
कर्मातिदिष्टं विबुधैः प्रकुर्वन् नर्माणि पत्नीसहितश्चकार ॥ १ ॥
राजा प्रजाः स्वाः परिपालयन् सन् लब्ध्वा विरक्तिं सकलासु तासु ।

सिंहासने स्वे स्वसुतं निवेश्य शम्भुं नृपं नाकमसौ जगाम ॥ २ ॥
शम्भुः पितुस्तत्परलोककृत्यं सर्वं विधाय प्रणतप्रपालः ।
परम्पराप्राप्तमहीं महात्मा शशास शास्ताऽरिगणस्य वीरः ॥ ३ ॥
विद्वज्जनामर्त्यतरुर्दुरात्मतृणव्रजस्याग्निरहीनकर्मा ।
धर्मं स्वकीयं कथितं मुनीन्द्रैश्चकार भक्त्या सततं कलावान् ॥ ४ ॥
ऋणत्रयापाकरणप्रवृत्तो युवा स्त्रयोऽपिस्फ रतः स कामी ।
स्वरङ्गनाभोगमतीवरम्यं स मन्यमानो विमुमोच देहं ॥ ५ ॥
तदनुजो दनुजोत्तमनाशकृत् प्रियतमाभजनाप्तसमस्तकः ।
स किल शाहुनृपः प्रथितः क्षितावति भूमिमिमामधुना सुखम् ॥ ६ ॥
स हि महान् हिमहानिकरप्रभः प्रणतपः प्रथितः क्षितिमण्डले ।
विजयते जितशत्रुपरम्परो विबुधवर्यसुरद्रुमतां गतः ॥ ७ ॥

सप्त श्लोकानपहायाग्रे.

कीर्तिः पुण्यलता तवेयमतुला लोकत्रये विस्तृता ।
सत्कर्मावलिमूलका निशि सदा नक्षत्रपुण्यव्रजम् ॥
सूते तं परिगृह्य भानुरुषसि स्नात्वा पयोधौ द्विजो ।
नित्यं सञ्चिनुतेऽर्हणार्थमिव यन्नो दृश्यतेऽसौ दिवा ॥ १५ ॥
यदीयपाणिस्थितखड्गधारां मन्येऽतुलां कल्पलतां यतः सा ।
सुवर्णमुक्तामणिरत्नराशीन् वस्त्राण्यनर्घ्याणि ददाति नित्यम् ॥ १६ ॥
यदीयकरगा खड्गधारा भागीरथी ध्रुवं ।
पापा अपि परे यस्या दर्शनाद्यान्ति दिव्यताम् ॥ १७ ॥

एतत्सर्गचरमश्लोकोऽयं

दस्राविवातिरुचिरौ शिवशाहुसंज्ञावेतत्सुतावतिबलौ समचित्तवृत्ती ।
बालौ गुणैरनुपमैरतिशोभमानौ देवी सदावतु जगज्जननी भवानी ॥ २५ ॥
इति शिवप्रतापकाव्ये पुरुषोत्तमपण्डितविरचिते त्रयोदशः सर्गः ॥ १३ ॥

# शिवकाव्य-परिशिष्ट चवथें

## शिवकाव्याच्या प्रतींच्या उपलब्धीची हकीकत.

काव्येतिहास-संग्रह मासिक पुस्तक निघूं लागून एक दोन वर्षे झाल्यावर एके दिवशीं डा० विनायक रामचंद्र पटवर्धन वास्तव्य पुणें हे रा० काशिनाथ नारायण साने यांचे जवळ इकडच्या तिकडच्या गोष्टी बोलत असतां म्हणाले कीं, श्रीमंत चिंतामणराव आप्पा पटवर्धन सांगलीकर यांनीं शास्त्री मंडळी नमवून ऐतिहासिक लेखांच्या आधारानें महाभारतासारखा एक संस्कृत ग्रंथ मराठे राजांवर रचण्यास त्या मंडळीस सांगितलें होतें असें माझे ऐकिवांत आलें आहे, त्यामुळें त्यांजकडे बखरी वगैरे ऐतिहासिक सामुग्रीचा सांठा बराच असावा. यास्तव तुम्ही त्याचा तपास सांगली येथें करून ती सामुग्री मिळवून आपले मासिक पुस्तकांत छापा.

नंतर कांहीं दिवसांनीं पुणें येथील प्रसिद्ध वैद्य वे० शा० सं० रा० सीताराम शास्त्री पेणसे श्रीवर्धनकर यांनीं एके दिवशीं सरदार पटवर्धन, पुरंदरगड, वगैरेंचें ज्यांत वर्णन आहे, असे कांहीं संस्कृत श्लोक काशिनाथ पंतांजवळ बोलत असतां, सहजवृत्या म्हटले. तेव्हां त्यांनीं सीताराम शास्त्री यांस विचारितां अशा प्रकारचे ज्यांत श्लोक आहेत असें एक संस्कृत ऐतिहासिक काव्य कांहीं वर्षांमागें पुण्यांत आलें होतें असें त्यांनीं पंतांस सांगितलें.

पुढें पुण्यांतील बहुश्रुत व वृद्ध गृहस्थ बाबासाहेब पेणसे ह्यांस पेशव्यांचे दप्तराची चांगली माहिती असल्यामुळें त्यांजकडे काशिनाथ पंत ह्या काव्याच्या शोधार्थ गेले तेव्हां अशा प्रकारचें काव्य आमचे पहाण्यांत आलें होतें व तें चांभारगोंदे येथून कवीच्या घरांतूनच पुण्यास आलें होतें. परंतु तें कोणी आमच्याकडून वाचावयास नेलें तें परत आणून दिलें नाहीं असें बाबासाहेब पेणसे यांनीं काशिनाथपंतांस सांगितलें. असा चांभारगोंदेपर्यंत ह्या काव्याचा छडा लागला.

याच संधीस या मासिकपुस्तकाचे पहिले व्यवस्थापक रा० कृष्णाजी रघुनाथ केळकर हे नगर जिल्ह्यांत असिस्टंट डेप्युटी एजुकेशनल इनस्पेक्टरचे कामावर होते त्यां करवीं व सीताराम शास्त्री पेणसे यां करवीं रावसाहेब नरहर गदाधर फडके हे त्या वेळीं चांभारगोंद्यांकडे मुसनफ होते त्यांस हें काव्य मिळविण्याची विनंति काशिनाथपंतांनीं करविली, व रावसाहेब फडके यांनीं तें पेडगांव येथून कवीच्या घरून मिळवून कृष्णाजीपंत केळकर यांजकडे पाठविलें. त्यांनीं तें छापून प्रसिद्ध करण्याकरितां आमचे स्वाधीन केलें. ही खुद्द कवीच्या घरची प्रत होय. हिला आम्ही पेडगांव प्रत असें नांव दिलें आहे.

ही प्रत जुनरी कागदावर लिहिलेली असून सटीक आहे. हींत ३८९ पत्रें आहेत. पहिल्या दोन चमत्कारांत हींत बरींच सुरेख चित्रें काढून काव्यांत वर्णिलेल्या विषयांचें स्पष्टीकरण केलेलें आहे. हीं चित्रें येणेंप्रमाणें:—

| पृष्ठ. | | श्लोक. | | चित्र. |
|---|---|---|---|---|
| १ | सांक | १ | ( च. प्रथम ) | विठोबा रखमाई. |
| ४ | निरंक | २ | ( „ ) | शिव पार्वती व स्तनपान करणारा गणपति. |
| ५ | निरंक | ३ | ( „ ) | अर्द्धनारीनट, गजानन, कवि. |
| ६ | सांक | ४ | ( „ ) | सूर्य, रथ व घोडा यांसह. |
| ७ | सांक | ५ | ( „ ) | शिवलिंगपूजन करणारी पार्वती. |
| १५ | निरंक | १८ | ( „ ) | मारुती, रामदास, शिवाजी, हुजऱ्या. |
| १७ | निरंक | २२ | ( „ ) | शिवाजी व त्याचा पिता. |
| २६ | सांक | ४६ | ( „ ) | विजापूरच्या बादशहाचा दरबार. |
| २८ | सांक | ५१ | ( „ ) | शिवाजीस पकडण्याकरितां पाठविलेले सहा शिपाई हत्यारबंद. |
| ४२ | सांक | ४४ | ( च. द्वितीय ) | प्रतापगड व त्याच्या जवळ घातलेला मंडप. |
| ४५ | निरंक | ५२ | ( „ ) | शिवाजी अफजुलखानाकडे जात आहे. |
| ४६ | सांक | ५४ | ( „ ) | अफजुलखान शिवाजीकडे येत आहे. |
| ४९ | निरंक | ५९ | ( „ ) | उभयतांची भेट व मिठी. |
| ५० | निरंक | ६० | ( „ ) | जिवबाकृत अफजुलखान शिरच्छेद. |

ही पोथी सनाभ म्हणजे मध्यें मूळ ग्रंथ व खालींवर टीका अशी सुवाच्य अक्षरांनीं लिहिलेली आहे. प्रत्येक पत्रांत सुमारें दहा अकरा ओळी आहेत, व प्रत्येक ओळींत सुमारें ३०।३२ अक्षरें आहेत. परिशिष्ट दोन यांत छापलेला पूर्वार्द्धांतर्गत १२ वा चमत्कार हींत नाहीं. त्याप्रमाणेंच तिसऱ्या परिशिष्टांतले अधिक श्लोकही हींत नाहींत. पहिल्या परिशिष्टांत सोळाव्या चमत्काराची जी टीका छापिली आहे ती ह्या पोथींतलीच होय. ही प्रत ता० ८ माहे दिसेंबर १८८६ रोजीं रा० कृष्णाजी रघुनाथ केळकर यांजकडे आम्हीं मालकास देण्याकरितां परत पाठविली.

पुढें कांहीं दिवसांनीं पुण्यांतील प्रसिद्ध गृहस्थ रावसाहेब भाजेकर यांचे ज्येष्ठ चिरंजीव बाळकृष्ण नारायण भाजेकर हे डेक्कन कालेजमध्यें अभ्यास करीत असतां त्यांनीं या काव्याची एक सटीक प्रत रा० काशिनाथ नारायण साने यांजकडे पाठविली. ही पूर्तकाली कागदावर लिहिलेली आहे. हिचीं पत्रें

२२९ आहेत व अक्षर पेडगांव प्रतीपेक्षांही सुरेख आहे. ही ही कांहीं पत्रें खेरीज करून सनाभ आहे. परंतु कित्येक ठिकाणीं हींत टीकेचा संक्षेप केलेला आहे. हींत ही परिशिष्ट २ व ३ यांतील श्लोक नाहींत. पूर्वकाली तावाचे अर्ध ताव करून त्यांचीं मध्यें घडी घालून दुंडे तयार करून त्यांवर ही प्रत लिहिलेली आहे. हींत प्रत्येक पृष्ठांत ओळी आठ असून प्रत्येक ओळींत अक्षरें सुमारें पंचवीस आहेत हिला पुणें प्रत असें नांव आम्हीं दिलें आहे.

नंतर कांही दिवसांनीं या काव्याच्या तीन चार प्रति कोल्हापूर येथें आहेत असें समजलें. तेव्हां त्यापैकीं एकीची सबंध प्रत करवून बाकीच्यांतील पाठभेद लिहून पाठविण्याविषयीं रा० विष्णु घोंडदेव भागवत वीरमाडकर यांस लिहिलें. त्याप्रमाणें त्यांनीं फुलस्क्याप कागदाच्या तावाच्या दुंड्यावर छापील पुस्तकाच्या पद्धतीनें ती लिहवून पाठविली. हिचीं पत्रें सुमारें २३० आहेत. पहिल्या दोन प्रतींत पत्रांची एक बाजू सांक व दुसरी निरंक आहे तसें हींत नसून पत्राच्या प्रत्येक बाजूस छापी पुस्तकाच्या पद्धती प्रमाणें अंक घातलेले आहेत. हींत प्रत्येक पत्रांत सुमारें तेरा ओळी असून प्रत्येक ओळींत सुमारें २०।२२ अक्षरें आहेत. हिला आम्ही कोल्हापूर प्रत असें नांव ठेविलें आहे. हींत मूल ग्रंथ मात्र आहे. टीका नाहीं. परिशिष्ट २ व ३ यांतील ग्रंथ या पोर्थीबरोबरच आलेला आहे.

येणेंप्रमाणें या काव्याच्या तीन प्रतींच्या उपलब्धीची हकीकत आहे.

## उपसंहार.

आजपर्यंत संस्कृतज्ञ मंडळींत कालिदासकृत रघुवंश व कुमारसंभव, माघकविकृत शिशुपालवध, भारविकृत किरातार्जुनीय, व श्रीहर्षकृत नैषध हीं पांचच महाकाव्यें प्रसिद्ध होतीं. परंतु सरकारानें संस्कृत हस्तलिखित ग्रंथांचा शोध करण्याचें काम सुरू केल्यापासून या पांचांखेरीज दुसरीं पुष्कळ महा काव्यें उपलब्ध झालीं आहेत. त्यांत कांहीं ऐतिहासिक काव्येंही मिळालीं आहेत. पाश्चात्य चालुक्य राजा विक्रम याजवर त्याचा विद्यापति बिल्हण यानें अष्टादश सर्गात्मक रचलेलें विक्रमांकदेवचरितकाव्य, नयचंद्रसूरि यानें रचलेलें चतुर्दशसर्गात्मक हम्मीरमर्दनकाव्य, व सोमेश्वरदेवकवीनें अन्हिवाडापट्टणचे वाघेलावंशाचे राजे लवणप्रसाद आणि वीरधवल यांचा धान वस्तुपाल-याजवर रचलेलें कीर्तिकौमुदीनामक नव सर्गात्मक काव्य अशीं तीन ऐतिहासिक काव्यें तर छापून प्रसिद्ध झालीं आहेत. भवभूतीचा समकालीन कविवाक्पति यानें गौडवध म्हणून जें प्राकृत भाषेत काव्य रचिलें आहे तें ही बहुतेक छापून तयार

झालें आहे. ऐतिहासिक दृष्टीनें पाहिलें तर या चार ऐतिहासिक काव्यांच्या तोडीचेंच हें शिवकाव्य आहे. यांत शिवाजी महाराजां पासून द्वितीय बाजीरावाचे ब्रह्मावर्तनिवासा पर्यंतचा इतिहास संकृत पद्यरचना करून वीस चमत्कारांत पुरुषोत्तम कवीनें वर्णिला आहे. यांत कोणकोणत्या ऐतिहासिक गोष्टींचें वर्णन केलेलें आहे हें अनुक्रमणिकेवरून कळण्या सारखें असल्यामुळें एथें त्यांचा विस्तार करीत नाहीं. क्वचित् कवीच्या हातून ऐतिहासिक गोष्टींच्या संबंधानें प्रमाद झाले आहेत. शिवाजी महाराजांनीं सातारा शहर आपली राजधानी केलें, वारणेच्या उत्तरचा मुलुख संभाजीस दिला व दक्षिणेचा राजारामास दिला, बाळाजी विश्वनाथ पुण्यास राहूं लागले, पर्वतीचा रमणा व तळें बाजीराव बल्लाळ यांनीं बांधिलें, नागपूरकर भोंसले हे पेशव्यांचे यजमान होते इत्यादि कवीनें वर्णिलेल्या गोष्टी अशा प्रकारच्या प्रमादांची ठळक उदाहरणें होत. प्रत्येक कारकीर्दींत घडलेल्या मुख्य मुख्य गोष्टींचें विवेचन कवीनें केलें आहे. प्रत्येक राजाचा व पेशव्याचा मरणकाळ, कित्येकांचा जन्मकाळ व राज्याभिषेक काल मात्र कवीनें सांगितले आहेत. बाकीच्या ऐतिहासिक गोष्टींचे कालाचा उल्लेख त्यानें केला नाहीं. ऋतुवर्णन, वनक्रीडा, जलक्रीडा इत्यादि विषयही प्राचीन काव्यपद्धतीस अनुसरून कवीनें यांत वर्णिले आहेत. नारायणरावाच्या पूर्व जन्माचें वृत्त व आपले धर्म चालत नाहींत म्हणून कलीनें केलेली तपश्चर्या अशा कांहीं काल्पित गोष्टीही यांत कवीनें वर्णिल्या आहेत. सारांश, हें ऐतिहासिक महाकाव्य हल्लींच्या संकृतज्ञ पंडितांस प्रिय होण्यासारखें आहे इतकें सांगून हा लेख पुरा करितों.

**ग्रंथप्रकाशक.**

# पुरुषोत्तमकवींचें चरित्र.

हे कवि वत्सगोत्री व माध्यंदिनशाखाध्यायी होते. त्यांच्या निपणजचें नांव गोपाल, पणजाचें जानंभट, आजाचें मयूर, बापाचें काशिनाथ, व आईचें त्रिवेणी[1] असें होतें. ह्यांस एक धाकटा बंधु होता त्याचें नांव गोविंदभट्ट असें होतें. ह्यांचें उपनांव बंदेष्टी असून हे अहंमदनगर जिल्ह्यांतील चांभारगोंदे तालुक्यांतील पेडगांव या नांवाच्या गांवीं राहत असत. ह्यांचें जन्म शके १६८८ ह्मणजे इ० सन १७६६ या सालीं झालें, त्यावेळीं माधवराव बल्लाळ ऊर्फ थोरले माधवराव हे पेशवे होते. पांचव्या वर्षी ह्यांचें उपनयन झालें असें ह्मणतात. नंतर सातारप्रांतांतील विश्रामपूर ( इसलामपूर ) गांवीं यांनीं १२ वर्षे पर्यंत वेदशास्त्राध्ययन केलें. खर्डें येथें ही हे कवि सर्व परिवारासह १२ वर्षे होते असें त्या लढाईच्या वर्णनांत यांनींच लिहिलें आहे. आपल्या वयाचे १९ वे वर्षी म्ह० इ० सन १७८५ ह्या वर्षी साताऱ्याचे दरबारीं यांनीं पुराण सांगून वहावा मिळविली, व त्यामुळें यांस त्या दरबारांतून दरमहा ५० रुपयांची नेमणूक झाली असें ऐकियांत आहे. नंतर पेडगांवी येऊन त्यांनीं लग्न केलें. ह्यांचें कुटुंब पेडगांवचेंच होतें. यांस संतान झालें नाहीं. यांचे धाकटे बंधु गोविंदभट्टजी हे वैद्यशास्त्रांत निपुण असून राजवैद्य होते. ह्या गोविंदभट्टजींस एक पुत्र होता त्याचें नांव सीतारामभट्टजी, सीतारामभट्टजींस तीन पुत्र आहेत, त्यांपैकीं वडील पुत्राचें नांव वामन आहे. पुरुषोत्तमभट्टजी बंदेष्टि यांस व्याकरण, न्याय, मीमांसा, तर्क, अलंकार, वैद्यक, ज्योतिष, वेद, धर्मशास्त्र हे ग्रंथ अवगत होते. ह्यांनीं " शिवकाव्य " हा ग्रंथ द्वितीय बाजीराव यांचे प्रधान सदाशिव माणकेश्वर यांचे सांगण्यावरून करण्यास आरंभ केला. त्याची समाप्ति शके १७४३ तें माघमासीं म्ह० इ० सन १८२१ या वर्षी पेशवाई बुडाल्यावर चार वर्षांनीं पुणें येथें झाली. नंतर त्यांनीं लष्कर नर्जीक भाल्हेर येथें त्या ग्रंथावर स्वतःच टिका केली ती शके १७४८

---

1 ह्या चरित्रांतील कांहीं माहिती रा० रा० बळवंत रामचंद्र मुळगुंद स्कूल मास्तर कामत पेडगांव यांनीं ता ३ मार्च १८८० रोजीं पाठविली.

2 पहा श्लोक ४९ व ५० चमत्कार. २०

3 पहा चमत्कार २० श्लोक १९ याची टीका.

4 पहा श्लोक २९ चमत्कार १८.

5 पहा श्लोक १६-२१ चमत्कार २०

6 पहा श्लोक ५१ चमत्कार १०

7 पहा टीकेच्या शेवटची " इतिश्री. "

म्ह० इ० सन १८२६ त श्रावणमासीं समाप्त झाली. हा शिवकाव्य ग्रंथ कवीनें समाप्त झाल्यावर त्या वेळच्या साताऱ्याच्या राजाकडे नेला, तेव्हां तो संतुष्ट होऊन या कवीस गांव जहागीर देत होता. परंतु जहागीर स्वीकारिल्यानें पुढें आपले वंशज आळशी होऊन विद्वत्ता संपादण्याकडे दुर्लक्ष करतील असें समजून त्यांनीं जहागीर गांव घेतला नाहीं. नंतर राजानें शेला, पागोटें, धोतरजोडा शालजोडी वगैरे पांचशें रुपयांचा विषय देऊन कवीची संभावना केली, व पुढें दरमहा वीस रुपये देण्याचा ठराव केला असें म्हणतात. या कवीनें केलेला त्या वेळच्या प्रतापसिंह राजाचे स्तुतीचा एक सर्ग शेवटीं द्वितीय परिशिष्टांत दाखल केला आहे त्या वरूनही या गोष्टीस बळकटी येते. पुण्यास दरसाल ५० रुपये दक्षिणा पुरुषोत्तम पंडितास मिळत असे. पुढें इंग्रजी अमल झाल्यावर २० रुपये मिळूं लागले ते शेवट पर्यंत मिळत होते. गंगालहरी, सीताश्री ( पिठी साखर व आंबा यांचा चमत्कारिक कल्पित कलह ), गंगातरंग काव्य, वाल्मीकिकृत गंगाष्टकावर टीका, व संस्कृत आख्या असे या कवीचे दुसरे ग्रंथ आहेत असें समजतें. कुवलयानंदाचें गद्यात्मक मराठी भाषांतरही या कवीनें केलें आहे असें ऐकितों. ह्यांनीं उत्तरवयांत संन्यासग्रहण केलें होतें. हे पुरुषोत्तम पंडित आपल्या वयाच्या ९० व्या वर्षीं मिति श्रावण वद्य १४ शके १७७८ ( इ. स. १८५६ ) रोजीं रात्रीं आठ वाजतां, दुसरे बाजीराव पेशवे मृत झाल्यानंतर पांच वर्षांनीं, परलोकवासी झाले.

समाप्त.

---

## शेषकाण्डस्योत्तरार्धस्य शुद्धिपत्रम्.

| पृष्ठांकः. | पंक्त्यंकः. | अशुद्धं. | शुद्धम्. |
|---|---|---|---|
| १ | ११ | विष्णो | विष्णोः |
| ,, | १७ | इत्यस्यावृत्ति | इत्यस्यावृत्तिः |
| ,, | २० | विघिः | विधिः |
| ,, | २४ | स्वीयमस्यास्तीति | स्वमस्यास्तीति |
| २ | ५ | अत्मिन् | अस्मिन |
| ,, | ९ | सेनापत्यं | सैनापत्यं |
| ,, | २४।२५ | प्रयोगो साधु | प्रयोगोऽसाधु |
| ,, | २५ | निपातमव्यमिति | निपातमव्ययमिति |
| ,, | २६ | सुप् इति | सुपः इति |
| ,, | २९ | च । अपि | च अपि |
| ,, | २९ | अथ | अथो |
| ३ | ७ | कीर्ति | कीर्त्ति |
| ,, | ९ | संररक्षुः | संररक्षू |
| ,, | २७ | कीर्ति | कीर्त्ति |
| ४ | ४ | देवेंद्राशान् | देवेंद्रारान् |
| ,, | ११ | सुराजन्वात् | सुराजत्वात् |
| ,, | १२ | लङ् | लङः |
| ५ | २९ | गंधस्यो | गंधस्ये |
| ,, | ३३ | पाठांतर | पाठांतरं |
| ६ | २१ | अय | अथ |
| ७ | ८ | तन्त्रप | तत्रप |
| ८ | १९ | रजः । कृष्य | रजःकृष्या |
| ,, | २२ | इत्यणि | इत्यण् |
| ९ | ११ | उत्पत्यै | उत्पत्त्यै |
| ,, | २३ | महत्तमाः संति | महत्तमाः तरवः संति |
| ,, | ,, | तरुवरा | तरव |
| १० | १२ | शुद्धा | शुष्का |
| ११ | ६ | ककुब् | ककुब् |
| ,, | २२ | यदि यद्वा । यदि | यदि इह यद्वा यदि |
| १३ | ७ | लक्षिकया | लाक्षिकया |
| ,, | १५ | सकामाकुतं | सकामाकूतं |
| ,, | १८ | जातीत्यभर | जातीत्यमरः |
| १४ | ३३ | यत्वंभु | यद्वभु |
| १७ | १६ | प्रस्तुतेन प्रस्तुतस्य | प्रस्तुतेनाप्रस्तुतस्य |
| १८ | २० | कोकश्चके चक्रवाके | कोकश्चक्रे चक्रवाके |
| १९ | ३ | वीरांधृते | वीराहृते |
| ,, | २६ | शयितं | शायितं |
| ,, | ३२ | पचापच | पचापच् |

| पृष्ठांकः | पंक्त्यंकः. | अशुद्धं. | शुद्धम्. |
|---|---|---|---|
| ,, | ३२ | तत्वं | तत्त्वं |
| १० | ८ | बलात् | बलाद् |
| ,, | २२ | लुंडि० | लुंठि० |
| १२ | १३ | स्थिता | स्थिता |
| ,, | ३१ | मोचयाति सति | मोचयती सती |
| ,, | ,, | इण | इण् |
| ,, | १२ | गोदशे | गादेशो |
| ,, | २३ | भृत् | भूत् |
| २३ | १६ | यस्या | यस्याः |
| ,, | २५ | आदर्शयंती | संदर्शयंती |
| २४ | १६ | कीर्तिः | कीर्त्तिः |
| २५ | ३ | फलै | फलैः |
| ,, | १० | ननर्तु | न नर्तु |
| २६ | ५ | तत् | तद् |
| ,, | २५ | त्तल | त्तल् |
| २७ | १० | मृ | मृ |
| २७ | १०–११ | द्वित्वे । आर्ति | द्वित्वे आर्ति |
| ,, | १३ | तुल्य | तुल्यः |
| ,, | २२ | प्रस्तुतेन | प्रस्तुतेना |
| ,, | ३२ | पद्य | पद्यं |
| २८ | ३ | संल्हतवान् | संहतवान् |
| ,, | १४–१५ | पांडविये | पांडवीये |
| २९ | ५ | लघिष्टा | लघिष्ठा |
| ३० | २ | सहितोऽयुताभ्यां | सहितो युताभ्यां |
| ३१ | १६ | यमराट् | यमराड् |
| ,, | २० | इत्र् | इत्र् |
| ,, | ३२ | द्विजेशे | द्विजेशे |
| ३२ | ९ | कीर्ति | कीर्त्ति |
| ,, | २२ | प्रस्थिताः | अत्र स्थिताः |
| ३३ | २२ | हिरंण्यं | हिरण्यं |
| ३५ | २७ | ठित्वात् | टित्वात् |
| ३६ | १० | यथेष्ट | यथेष्टं |
| ,, | १३ | बाहुल्या | बाहुल्यार्थी |
| ,, | १६ | मभ्रेपु | मभ्रेषु |
| ३७ | १५ | बहिःषष्ठि | बहिषष्टि |
| ,, | ,, | यत् | यत्र् |
| ३९ | २८ | संयुक्तेत्य इतित्य | संयुक्ते यत्रः इति |
| ४० | १७ | स्याविति | स्याविति |
| ,, | ,, | त्रल | त्रल् |
| ,, | १९ | पूजनेत | पूजनेन |

| पृष्ठांकः. | पंक्त्यंकः | अशुद्धं. | शुद्धम्. |
|---|---|---|---|
| ,, | २१ | व्यर्थाः | व्यर्था |
| ४२ | १ | कुरुणामभूत् | कुरूणामभूत् |
| ,, | १६ | महागाष्ट | महाराष्ट्र |
| ,, | ३० | तत्संबुधी | तत्संबुद्धो |
| ४३ | ६ | यद्वा | यद्‌द्वा |
| ,, | २६ | यद्वा | यद् द्वा |
| ,, | ३२ | सेना व्यूह | सेनाव्यूह |
| ४४ | १० | रूढः | रूढैः |
| ,, | २१ | सर्वैकदेशपुण्याख | सर्वैकदेशसंख्यातपुण्याख |
| ४६ | ११ | वरूत्तर | उरूत्तर |
| ४७ | २३ | काले किं | काले तद्देहः तस्य देहः किं |
| ४८ | २० | मृतजनमरणे | मृतजनमरणे |
| ५० | ३० | उद्गमस्थानं । नराः | उद्गमस्थानं नराः |
| ५६ | १ | गोपालबालोद्भव | गोपालबालोद्भुत |
| ५७ | १० | उद्भवोसौ | उद्भुतोसौ |
| ,, | ३२ | स्वगमन | स्वर्गगमनं |
| ५९ | ३३ | वाल्य | बाल्य |
| ६० | २ | सदासि धारिणो | सदासिधारिणो |
| ,, | १२ | बिडालमर्कैवृके | बिडालमर्कैर्वृके |
| ६१ | २० | मिलिता | मिलिताम् |
| ,, | २१ | गमयति | गमयति स्म |
| ६२ | ३१ | ललियेति | लीलयेति |
| ६३ | २५ | अधिष्ठितो | अधिधिस्थितां |
| ६४ | १ | जितौजितरिपुव्रजैर्वीर | जितौजितरिपुव्रजैर्वीर |
| ६५ | ११ | तव | तदा |
| ६६ | २ | निहतागस्कर | निहतागस्कर |
| ,, | १३ | अन्वर्थसंज्ञा | अन्वर्थसंज्ञो |
| ६७ | १३ | पुरादेशो | पूरादेशः |
| ,, | १८ | हेतु- | हेतुः |
| ,, | १९ | कालोः | कालो |
| ६८ | २५ | मान्वोः | मानोः |
| ,, | २६ | ति | तैः |
| ६९ | ८ | तसाहर्णप्रणि | तसहर्णमणि |
| ,, | १० | निःप्रभा | निष्प्रभा |
| ,, | २२ | तथोक्त | तथा च |
| ,, | ३० | निःप्रभाः | निष्प्रभाः |
| ७१ | ८ | पापान च | पापाश्च |
| ७२ | १४ | सेनापतयोः | सेनापत्योः |
| ७४ | १४ | रामनताभिज्ञानार्थे | रामनताभिज्ञानार्थे |
| ,, | १८ | वृतिर्येथं | वृतिर्येयं |

| पृष्ठांकः. | पंक्त्यंकः. | अशुद्धं. | शुद्धम्. |
|---|---|---|---|
| ७९ | २ | क्षणात | क्षणात् |
| ,, | १४ | वायुर्धनौघ | वायुर्घनौघ |
| ८० | १५ | जिर्जयंत्र | निर्जयंत्र |
| ८२ | २५ | हीत | इति |
| ८३ | १२ | धर्म | घर्म |
| ८५ | ११ | स्तुरङ्गवर | स्तुरङ्गवर |
| ८८ | १ | विद्योतता | विद्योतता |
| ८९ | २ | बहुधा निरुद्धा | बहुधानिरुद्धा |
| ९० | ५ | ससुखं | स सुखं |
| ९१ | २७ | वसू | वसु |
| ९२ | १७ | हयस्यावृत्ति तवेव | हयस्यावृत्तिः |
| ९३ | १ | शिवकाव्यम्–२० | शिवकाव्यम्–१८ |
| ,, | १८ | कश्चिन्नापनयते | कश्चिन्नात्र नयते |
| ९५ | ११ | पूजायत | पूजोद्यत |
| ९९ | ६ | पूरितामूनमही | पूरितामून्मही |
| १०० | १५ | तेषा | तेषां |
| ,, | २४ | योभिः | यानि |
| १०३ | १६ | पुर | पुरः |
| १०५ | ३० | यतः | अतः |
| ,, | ३१ | ततः | तथा |
| १०६ | २२ | यवाः | यवा |
| १०७ | २४ | वाक्य | वाक्यं |
| १०८ | १८ | यपात् | यपात |
| १०९ | २६ | सन | सन् |
| १११ | ६ | ०लाते० | ०लोत० |
| १११ | २५ | ०मर्यित० | ०मर्चित० |
| ११२ | २८ | ०म्रातो | म्रातो |
| ,, | २९ | सच्छन्न | संच्छन्न |
| ११३ | ३० | प्रयातु. | प्रयातु. |
| ११४ | १ | पूर्वार्द्धांतर्गतो सप्तमदशमश्चमत्कारः | सप्तमदशमचमत्कारी |
| ११५ | २ | साम्निपातिकरागे | साम्निपातिकरोगे |
| ११६ | १ | पूर्वार्द्धांतर्गतो एकादशमश्चमत्कारः | एकादशश्चमत्कारः |
| ११६ | १५ | वसमैस्तैलाद्रैः | वसनैस्तैलार्द्रैः |
| ,, | २८ | अश्वाधिरोह | अश्वाधिरोह |
| ११७ | १८ | श्लोकाश्चा० | श्लोकाश्चा० |
| १२० | १६ | वर्गावन्यो. | वर्गावन्यो |
| १२५ | २८ | अन्हिवाडा | अन्हिलवाडा |
| ,, | २९ | धाम | प्रधाम |

समाप्तम्